ASVAVAIDYAKAM

compiled by

Jayadatta Suri

edited by Umesa Chandra Gupta Kawiratna

1886 ~~[illegible]~~

४८ कुष्ठरोगाध्याये—



४९ शोथरोगाध्याये—



मुष्करोगाध्याये—



तरोगाध्याये—



ाध्याये—

# विज्ञापनम्।

पुराकल्पे नरजातिषु भूरिशो रोगोपसृष्टदेहेषु तेषां व्याधिशान्त्यर्थं तदुपायरूपमायुर्व्वेदचिकित्साशास्त्रं यदा जगदुपकृत्यैकनिरतैर्महर्षिभिः समुद्भावितमासीत् तदैव गवाश्वादीनामपि पशूनां व्याध्युपसृष्टदेहानामुपकारार्थमश्वचिकित्साशास्त्रं समुद्भावितमासीत्। यथा हि लोकानुरोधात् तदनुग्रहार्थं स्वनाम्ना प्रसिद्धा मूलसंहिता चरकेण सुश्रुतादिभिश्च सौश्रुतादिसंहिता विरचिता आसन्, तथैव वाजिनामनुरोधाच्छालिहोत्रस्य महर्षेः स्वनाम्ना प्रसिद्धा शालिहोत्रमित्यायुर्वेदसंहिता(१) अश्वजातेरुपकारार्थं प्रादुरासीदिति। एवमेवाधुनातनविदुषां परामर्श एवात्र प्रमाणम्।

अपिच एवं [illegible] पुरातनी किंवदन्ती लोकेषु गीयते यथादौ भगवान् शालिहोत्रो महेन्द्रादेशात् सपक्षानश्वानपक्षान् [illegible] स्थितानां शरणमभिप्रपन्नानां तेषामेवानुरोधात् वाजिहितार्थमष्टादशसाहस्रीमश्ववैद्यकसंहितां प्रथमं प्रणीतवानिति। (२)एवमेवास्योत्पत्तौ नकुलभाषितं प्रमाणम्।

---

(१) ततश्चिकित्सितं तेषां शालिहोत्रप्रभाषितमिति नकुलः।

(२) सपक्षा वाजिनः सर्व्वे सञ्जाता व्योमचारिणः।
गन्धर्व्वेभ्यो यथाकामं गच्छन्ति च समन्ततः॥
तान् दृष्ट्वा यवसम्पन्नानसह्यान् वाहनोहितान्।
शक्रः प्रोवाच पार्श्वस्थं शालिहोत्रं मुनीश्वरम्॥
नास्त्यसाध्यं मुने किञ्चिद्भवतो भुवनत्रये।
तस्मादाशु कुरुष्व त्वं वाहनार्हान् हयोत्तमान्॥
ये च मे युद्धकालेषु प्रवहन्ति रथं सदा।
अशक्यं वारणेन्द्रैश्च दानवैर्बलवत्तरैः॥
तेषां शस्त्रं समुत्सृज्य पक्षच्छेदं व्यधात्तदा।
वाजिनां शक्रवाक्येन शालिहोत्रो महामुनिः॥

अस्ति किल गान्धारजनपदासन्नवर्त्ति शालातुरं नाम नगरम्। तत्र शालिहोत्रनामा प्राचीनाश्ववैद्यः प्रादुरासीत्। तेनासौ शालातुर इति प्रदेशविशेषमूच्यते इति केषाञ्चिद्विदुषां मतम्। अयमेव शालातुरीयः पाणिनिरिति केचित्। अन्ये तं धन्वन्तरिमाहुः। परन्त्वकारणमेवंविधानुमानमिति श्रीडाक्तारराजेन्द्रलालः॥ *

केचित्तु तदसङ्गतं मन्यमाना एवमाहुः-यथा शालिहोत्रः श्रावस्तिनगरवासिनोऽश्वघोषाभिधानस्य(१) कस्यचिद्विप्रस्य तनय आसीत्। तथा तस्य महर्षेराश्रमश्च विदेहभूमिसमासन्नवर्त्तिचम्पकारण्याभिधाने कानने हिमवत्पाददेश आसीदिति। अत्र प्रमाणं शालिहोत्रोभयकारवचनं(२) समीचीनं प्रतिभाति।

मत्संस्कृतमिदमश्ववैद्यकं विजयदत्ततनयेन सामन्तोपाधिकेन श्रीमज्जयदत्तसूरिणा शालिहोत्राद्यश्ववैद्यकेभ्यः(३) समाकलय्य विरचितमासीत्। यस्य रचनाक्रमः शालिहोत्रानुसारीति विज्ञेयम्। परं क्वचित् क्वचित् क्रमभङ्गोऽपि पर्य्यालोचनया दृश्यते। अस्य च रोगादिलक्षणानि क्वचिदविकलशालिहोत्राद्युद्धृतानि क्वचिच्च नानासंग्रहसारसङ्कलनेन स्वरचितानि

---

* Dr. Mitter's Proceeding Asiatic Society Bengal 1885, July.

(१) येन ज्ञानवता हिमालयतरुच्छायासु विक्रीडितं
यः स्नातो हिमपुष्पवातशिशिरे गङ्गाजले पावने।
रेमे यस्तु तुरङ्गयूथजनितैर्नानाविधैर्ह्रेषितैः
पायाद्वः स तुरङ्गघोषतनयः श्रीशालिहोत्रो मुनिः॥ नकुलः॥

(२) जाह्नव्या उत्तरे तीरे प्रालेयाद्रेस्तटान्तरे।
स्वाश्रमे चम्पकारण्ये वेदिकायां कुशासने॥
शालिहोत्रं सुखासीनं ऋषिभिः परिवेष्टितम्।
ब्रह्मसूर्य्यामितेजस्कं हयशास्त्रविशारदम्॥
इत्यादि Burnell's Catalogue of S. MSS. Part I.

(३) श्रीशालिहोत्रादिमुनिप्रणीतं, दृष्टाश्वशास्त्रं बहुविस्तरञ्च।
स्वल्पप्रबोधं सफलं यथार्थं, कृतञ्च तद्वै जयदत्तकेन॥ इति जयदत्तः।

स्थानविशेषेषु कृत्वा, तत्प्रमाणार्थं नकुलजयदत्ताश्ववैद्यकशुक्रनीत्यभिधानचिन्तामणिहारावलीप्रभृतिकमवलम्बितम्। घृततैलौषधपानादिनिर्णयस्य परिमाणपरिभाषानकुलाद्यनुसारेणैव प्रयोजनमनुरुध्य यथाशक्ति कृतः। यानि च जयदेवशार्ङ्गधरवचनानि (*) सङ्कलनार्थं मदाश्रिते क-नामकपुस्तके वर्त्तन्ते ख-ग-पुस्तकयोस्तददर्शनात् वस्तुतस्तेषां जयदत्तकृतत्वे सन्दिहानेन मया मूले न धृतानि, परन्तु स्वतन्त्रमस्यान्तिमे पृष्ठे प्रदत्तानि।

जयदत्तो हि विजयदत्ततनयः सामन्तनरपतिरासीत्। सम्प्रदायेन च शैवोऽसौ कस्मिन् जनपदे कुत्र वा नगरे जातस्तस्य न किमपि प्रमाणं लभ्यते। अतस्तन्निर्णयप्रयासः सुदूरपराहत इति विरतोऽस्मि।

असौ कदा प्रादुरासीत् तन्निर्णयोऽप्यतीव दुरूहः यतस्तत्समयप्रमापकं न किमपि विशिष्टं वचनं प्राप्यते। केवलमेवास्य शास्त्रस्य कतिपयाभ्यन्तरप्रमाणैस्तस्यानुमानिकसमयनिर्द्धारणे यथाशक्ति प्रयत्नः क्रियते। शास्त्रमिदं शालिहोत्रादिप्रणीताश्ववैद्यकशास्त्रादर्शेन संगृहीतमिति शालिहोत्रादीनामधस्तनेषु यः सर्व्वाधस्तनो भविष्यति तदधस्तनो जयदत्तो भविष्यतीति उत्तरोत्तरमधस्तादनुसन्धीयते।

शालिहोत्रवचनं हि नकुलेन स्वप्रणीताश्वचिकित्सायां समुद्धृतमिति तदूर्द्धतनस्तत्कालवर्त्ती वा शालिहोत्र इत्येवं प्रतीतिर्भवति। यतो नकुलो नाम यमजो युधिष्ठिरसहोदरो (१) गवाश्वचिकित्साशास्त्रप्रणेता इति चिरन्तनलोकप्रसिद्धिमनुसृत्य नकुलं युधिष्ठिरसहोदरं परिगणय्य युधिष्ठिरराजत्वकालात् पूर्व्वं तत्समकालं वा शालिहोत्रस्य प्रादुर्भावसम्भवः। युधिष्ठिरस्तावत् कलेः (६५३) अतीताब्दे जात इति राजतरङ्गिणी(१)वचनप्रामाण्यादुपलभ्यते। सम्प्रति तु कलेरतीताब्दाः (४९५३)। एत-

(१) युधिष्ठिरसहोदरनकुलस्य अश्ववैद्यकप्रणेतृत्व परम्परागतत्वामसन्धित्सूनां मतम्।

जयति च पाण्डवनाथो धर्म्मसनाथो युधिष्ठिरो नृपतिः।
भीमार्ज्जुनसहदेवास्तदनुचरो वाजितत्त्वज्ञः॥ २॥
दृष्ट्वा सम्यङ्नकुलः शास्त्रं कार्त्स्नं च शालिहोत्रीयम्।
ब्रूते शास्त्रार्थमतं शास्त्रं कृत्वा समासेन॥ ३॥

द्वयोरन्तरे शते (३१००) वर्षा भवन्ति। सुतरामयमेव युधिष्ठिर[illegible] कालो भवितुमर्हति। अतस्तदूर्द्ध्वतनः कालः शालि[illegible] मनुमापयति।

अपि च ग्रन्थेऽस्मिन् चतुर्थोऽध्याये शार्ङ्गधरकृतो जयदेवस्य [illegible] दृश्यते। जयदेवो तावद्द्वावास्तां एको गीतगोविन्दकारः, अन्य[illegible] लोककारः प्रसन्नराघवकारश्च। यदि गीतगोविन्दकारो(२) [illegible] भवति तदा केषाञ्चिन्मते तस्याविर्भावकालो लक्ष्मणसेनस्य [illegible] सम्भवति। तेन जयदेवस्य वर्त्तमानता चतुर्दशशताब्द्यामेव [illegible]। केचित्तु त्रयोदशशताब्दीमाहुः। एतेन च जयदेवस्यानुमा[illegible]समय-निर्द्धारणेन तदधस्तनकालजीवित्वं जयदत्तस्य सम्भवति।

परन्तु यदि प्रसन्नराघवनाटकप्रणेता चिन्तामणिगालोककारः पक्ष-धरमिश्र इति प्रसिद्धो जयदेवो भवेत्, तदास्य जयदेवादप्यधस्तनसमय-जीवित्वसम्भवः। यद्यस्यैव जयदेवस्य वाजिशास्त्रकर्तृत्वं सम्भवति। [illegible] समयः पञ्चदशशताब्दीं प्राप्नोति। एतदधस्तनो जयदत्त[illegible] भवतीत्यलमधिकपल्लवितेन।

एतन्मुद्राङ्कनेच्छासमकालानन्तरमेव कलिकातागवर्णमेण्टसंस्कृतविद्या-लयाध्यक्षेण श्रीयुक्तमहेशचन्द्रन्यायरत्नमहोदयेनाभिहिता मम योग्यता-माकर्ण्य डाक्तारोपाधिकेन श्रीयुक्तराजेन्द्रलालमित्रमहामहोपाध्यायेनाशु-कम्पयाऽऽशियाटिकसोसाइटीव्ययेन मयि अस्य मुद्राङ्कनभारः [illegible] अस्य च मुद्राङ्कने उक्तलिखितडाक्तारमहोदयेन मम प्रभूतं सा[illegible]मिति चिरबाधितोऽस्मीत्यलम्।

---

(१) शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः॥

इति राजतरङ्गिणी

(२) गोवर्द्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च॥

(*) दन्तोद्भेदं प्रवक्ष्यामि वाजिनां मुख्यलक्षणम्।
येन विज्ञातमात्रेण वयोज्ञानं प्रतीयते ॥ ९९ ॥
षड्भिर्दन्तैः सिताभैर्भवति हयशिशुस्तैः काषायैर्द्विरब्दः
सन्दंशैर्मध्यमान्त्यैः पतितसमुदितैस्त्रिचतुःपञ्चवर्षाः।
सन्दंशानुक्रमेण त्रिकसमगुणिताः कालिकाः पीतशुक्लाः
काचं माक्षीकशंखा बकुचलनमतश्चावपातं च विद्धि ॥ १०० ॥
त्वं मातृदोषेण पितृदोषेण मन्दता।
दौर्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥ १०१ ॥
म...ग्रीवा महाकाया महोरस्का महास्वनाः।
स्निग्धाङ्गाः सर्व्वदा ये च तेषामायुर्भवेद्दृढ ॥ १०२ ॥
कर्णाग्रे पीड़िते येषां सिन्दूराभस्य दर्शनम्।
शोणिताक्ता भवेज्जिह्वा ते वाहाश्चिरजीविनः ॥ १०३ ॥
स्निग्धा दीर्घाश्च बध्याश्च प्रोतस्था यस्य वाजिनः।
भवन्ति विपुला रेखास्तं विन्द्याच्चिरजीविनम् ॥ १०४ ॥
नभो जिघ्रन्ति ये वाहा भास्करार्पितदृष्टयः।
पृथुकुक्षिकटीकक्षाः सुनिद्राश्चिरजीविनः ॥ १०५ ॥
न विष्किरन्ति ये ग्रासं सुभक्षा क्रमसेवनाः।
महाशिरोललाटाश्च वाजिनश्चिरजीविनः ॥ १०६ ॥
ऊर्द्धप्रोथस्थिता रेखा दृश्यन्ते यस्य वाजिनः।
तस्य मृत्युः समुद्दिष्टो दशमं प्राप्य वासरम् ॥ १०७ ॥
अङ्गुलानां दशार्द्धेन वर्षाणां तस्य जीवितम्।
जीवेत्त्रयोदशाब्दानि यस्य स्यात्तुरङ्गुला ॥ १०८ ॥
विनतः पूर्व्वकायेन स्थूलजानुश्च यो हयः।
हृताश्चिकूटलब्धाङ्गः स्वल्पायुः स प्रकीर्त्तितः ॥ १०९ ॥
जयदेवस्यैते।

# पारिभाषिकशब्दानां अकारादिक्रमेण सूचीपत्रम् ।

श्रीगणेशाय नमः ।

श्रीशालिहोत्राय नमः ॥

# अथ

# अश्ववैद्यकम् ।

## प्रथमोऽध्यायः ।

उद्देशः ।

प्रणम्य शङ्करं भक्त्या शङ्करं सर्व्वदेहिनाम् ।
शिवाय जगतो जातां शिवाञ्चापि विशेषतः ॥ १ ॥
सुखावबोधशब्दार्थं[1] ग्रन्थविस्तरवर्जितम् ।
लक्षणं वाजिदेहस्थं[2] संक्षेपेण यथाक्रमम् ॥ २ ॥

२ । सुखावबोधशब्दार्थं सुखावबोधौ सुबोधौ शब्दार्थौ यस्मिन् तत् तथोक्तम् अतिप्राञ्जलमित्यर्थः । शिष्यावबोधशब्दार्थमित्यपि पाठो ग-पुस्तके दृश्यते । तस्यायमर्थः । शिष्यान् अवबोधयतः यौ शिष्यावबोधौ शब्दार्थौ यस्मिन् तत् शिष्यसुखबोधमित्यर्थः ।

१ । शिष्यावबोधशब्दार्थम् । गः ।
२ । वाजिदेहस्य । कः ।

**प्रदेशलक्षणञ्चैव जीवितञ्च वयस्तथा ।**
**दशाविभागं क्षेत्रञ्च देशज्ञानञ्च वाहनम् ॥ ६**

६ । प्रदेशलक्षणमिति द्वितीयाध्याये वक्ष्यमाणं शिरआदिप्रदेशानां लक्षणं शुभाशुभसूचकमित्यर्थः । यथा पद्मं लक्षणानि शुभमशुभम् । लक्षणानि तत्र ... अशुभलक्षणमित्यर्थः ॥ अत्र प्रदेशाश्रय-चिकित्सा ... । जीवितमिति आयु-र्ज्ञानाय वक्ष्यमाणं सुलक्षणादिलक्षणेन निरूपितं दीर्घादीर्घ-जीवित्वमित्यर्थः । यथा द्वात्रिंशत्संख्योऽस्य जीवितकालमानम् । दशाविभागं वक्ष्य ... दिमानि दिनानि चेति । वय इति वयोज्ञानाध्याये वर्णनीयं दन्तोद्गमादिदर्शनेन वयोनिरूपणमित्यर्थः । दशाविभागमिति । दशा दशविधाः तासां विभागः पृथक्करणं तत् । स च दशाविभागो दशाविचाराध्याये द्रष्टव्यः । क्षेत्रमिति क्षेत्रमत्र वाजिनामपानललाटाद्याश्रयं प्रथमादि दर्शयन् । एतदपि दशाविचाराध्याये द्रष्टव्यम् । यद्वा अश्वमुत्पत्तिस्थानम् । तच्च सप्तविधं यथा—"अमृतादाप्यतो वह्नेः वेदेभ्यो ब्रह्मणो गर्जितः । साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्तिता" । इति पुराणात् मल्लि-नाथः । तथा देशज्ञानमिति वक्ष्यमाणजन्मदेशाध्याये वर्णनीया ये देशाः पारसीककाम्बोजादयः तेषां ज्ञानमित्यर्थः ॥ वाहनमित्यनेन परतो वक्ष्यमाणवाहनविध्यध्याये वर्णनीयम् अश्वानां सत्वजातिवल्गा-त्रिभागरङ्गभूमिचालनयानादिविधानं ज्ञेयम् ॥

वन्ध्याक्रमं[1] प्रसूतायाः स्त्रियाश्च[2] प्रतिपालनम्[3]।
द्रव्यमात्राविधिश्चैव[4] निघण्टं पोषणक्रमम् ॥७॥
विधिं क्षाराग्निशस्त्राणां शिरावेधविधिन्तथा।
निरूहे च विधिश्चैव[5] विधिश्चैवानुवासने[6] ॥८॥

---

७। वन्ध्याक्रममिति वन्ध्योपचाराध्याये वर्णनीयं वन्ध्याया गर्भ-धारणाद्युपायमित्यर्थः ॥ प्रसूतायाः स्त्रियाश्च प्रतिपालनमिति किशो-र्युपचाराध्याये सूतिकोपचाराध्याये च वक्ष्यमाणां प्रसूतेः स्त्रियाश्च पोषणोपचारप्रणालीमित्यर्थः। द्रव्यमात्राविधिमिति द्रव्यशब्देनात्र भेषजं ज्ञेयम्। द्रव्यस्य भेषजस्य मात्राविधिं प्रधानमध्यहीनेषु देश-कालबलमपेक्ष्य उपयोगार्थं भेषजादिपरिमाणनिर्णयमित्यर्थः। तच्च विशेषं द्रव्यमात्राध्याये चतुर्विंशे वर्णयिष्यति॥ निघण्टमिति तन्ना-मकाध्यायः पञ्चविंशः। यत्रास्माकं भेषजोपयोगिमुस्तकादिद्रव्याणां पर्य्यायो वर्णितः तम्। पोषणक्रममिति वक्ष्यमाणखस्थवृत्ताध्यायोक्तां शिशिरादिषु ऋतुषु वाजिनामुपचारप्रणालीमित्यर्थः॥

८। विधिं क्षाराग्निशस्त्राणामिति। क्षारविधिम् अग्निविधिं शस्त्रविधिञ्चेति। अयं त्रिविधोपक्रमः शोफार्शोवातादिषु रोगेषु.

---

१। वन्ध्याकर्म्म प्रसूतानाम्। कः। २। यशोश्च। कः।
३। परिपालनम्। खः। ४। द्रव्यमात्राधिकम्। कः।
५। आरोहे च। कः। ६। वस्तिश्चैवानुवासने। कः।

नस्ये स्वेदे[1] विधिञ्चैव स्नेहपाने विधिं क्रमात्।
तैलपाकविधानञ्च घृतपाकविधिन्तथा ॥ ९ ॥

प्रयोज्यः ॥ एषां विशेषः तत्तदध्यायेषु परतो वर्णनीयः ॥ शिरावेधविधिमिति शिराणां वेधो वेधनं सूच्यादिभिरित्यर्थः। अस्य विशेषः शिरावेधाध्याये वक्ष्यते ॥ निरूहे इति निरूहः सिद्धवस्तिः द्विविधवस्तिकर्म्मणोरन्यतरः संशमनाद्यर्थं कषायक्षीरतैलपूरितनेत्रादिनाभ्य इत्यर्थः। तस्मिन्। तथा अनुवासनं नाम द्वयोरन्यतरः केवलस्नेहसाध्यो वस्तिविशेषः। "अनुवसन्नपि न दुष्यति अनुदिनं वा दीयते" इत्यनुवासनम्। इति सुश्रुतम्। उक्तञ्च सारकौमुद्याम् "वस्तिर्द्विधानुवासाख्यो निरूहश्चेति सञ्ज्ञितः। यः स्नेहैर्दीयते स स्यादनुवासननामकः। कषायक्षीरतैलैर्यो निरूहः स निगद्यते" इति ॥ अयञ्चोपक्रमो निरूहानुवासनाध्याये द्रष्टव्यः ॥

९। नस्य इति। ऊर्द्ध्वजत्रुगतरोगशान्त्यर्थं प्रयोज्ये शिरोविरेचन इत्यर्थः ॥ स्वेदे तापादिचतुर्विधे यं विना शोधनादिकं नैव प्रयुज्यते। उक्तञ्च —"येषां नस्यं विधातव्यं वस्तिश्चैव हि देहिनाम्। शोधनीयाश्च ये केचित् पूर्वं स्वेद्या हि ते मताः।" इति। अस्य विशेषस्तदध्याये वर्णनीयः ॥ स्नेहपान इत्यनेन घृततैलोभयग्रहणम्। तयोः पाने पानपरिमाणादिविषय इत्यर्थः। तैलपाकविधानं प्रसारण्यादितैलपाकानुष्ठानमित्यर्थः। घृतपाकविधिमिति घृतं पञ्चतिक्तादिकमित्यर्थः ॥

[1] । नस्यस्वेदविधिं । का ग ।

श्रमोपचारं[1] वाहानां तथारिष्टचयं[2] पुनः।
वेधारिष्टं पुनश्चैव कठिवेधं तथैव च ॥ १० ॥
मृगरोगचिकित्साञ्च[3] चिह्नपूर्व्वं समासतः।
वातादीनाञ्च[4] दोषाणां कोपहेतुं तथैव च ॥ ११ ॥
व्याधिनिर्द्देशमुखरुङ्नेत्ररोगविधिं क्रमात्।
काचं प्रचारं विख्यातं रक्तं विख्यातपाटलम्[5] ॥ १२ ॥

---

१०। श्रमोपचारमिति। अतिवाहनादेः श्वासादिरोगजनको यः परिश्रमः खेदापनयनानन्तरं मदिरादिदानेन तत्प्रतीकाररूपोऽश्वस्य उपचारः। अरिष्टचयं स्वस्थारिष्टं वेधारिष्टं कीटारिष्टञ्चेति। इदञ्चारिष्टाध्याये एषणीयम् ॥

११। मृगरोगेति भूरि उपद्रवजनकः सांघातिको रोगविशेषः। अस्य लक्षणादिकं मृगरोगचिकित्सायां द्रष्टव्यम्। चिह्नपूर्वं लक्षणज्ञानपूर्वकमित्यर्थः। वातादीनामिति वातपित्तकफसंज्ञदोषत्रयाणां कोपे वृद्धौ हेतुः कारणम्। हेतुश्च तिक्तादि-कटुक-मधुरादि-द्रव्योपयोगजः। एतानि च प्रकोपकारणानि दोषप्रकोपाधिकाराध्याये वक्ष्यन्ते ॥

१२। व्याधिनिर्द्देशेति। व्याधीनां वक्ष्यमाणमुखरोगादि-

---

१। आन्तोपचारम्। कः। २। तथारिष्टस्य चयकम्। कः।
३। मृगरोगविधिश्चैव। कः। ४। वातादीनां प्रकोपकम्। कः।
५। विख्यातं। कः।

मुञ्जजालं ततश्चेति नेत्ररोगास्तथैव च ।
वातात् पित्तात् कफाच्चेति सन्निपातात्तथा पुनः ॥ १३ ॥
रक्ताभिघाताद् ये जाताः शिरोरोगाश्च दारुणाः ।
निदानञ्चैव चिह्नञ्च रोगाणाञ्च चिकित्सितम् ॥ १४ ॥

---

वातबलासकाल्लानामित्यर्थः । निर्द्देशः निर्व्वाचनम् । मुखरुगित्यनेन वक्ष्यमाणमुखरोगचिकित्साध्याये उक्ता उपकुशादिगलशालूकान्ताः चतुर्द्दश रोगाः । नेत्ररोगेत्यनेन मुञ्जजालमुञ्जकपटलवुद्बुदपूयस्रावकाचतोयस्रावप्रसन्नान्धनक्तान्धतिमिररक्तस्रावाभिष्यन्दचिपिटवर्त्माख्याः चतुर्द्दशनेत्ररोगाः । तेषां विधिमनुष्ठानम् । एषां विस्तरं नेत्ररोगाध्याये वर्णयिष्यति । पटलमेव पाटलम् । पटलं नाम श्लैष्मिकाक्षिरोगविशेषः । काचमिति पैत्तिकमक्षिरोगविशेषम् । रक्तमपि पैत्तिकाक्षिरोगमाह । प्रचारः श्लैष्मिकाक्षिरोगः तम् । रक्तमिति रक्तस्रावनामको रक्ताभिष्यन्दजो नेत्ररोगविशेषः तम् ॥

१३ । मुञ्जजालमिति मुञ्जं मुञ्जजालञ्चेति द्विविधोऽक्षिरोगः कर्मसञ्ज्ञोऽज्ञेयः । एषां विशेषः चिकित्सितञ्च परतो वर्णनीयम् ॥

१४ । शिरोरोगाः वातजपित्तजश्लेष्मजसन्निपातजरक्तजाः पञ्च शिरोरोगाः । एषां लक्षणादिकं वक्ष्यमाणशिरोरोगाध्याये वक्ष्यति । साध्यासाध्यविवेकमिति । रोगेषु के साध्याः के वा असाध्यास्तद्विवेकमित्यर्थः । रोगाणाञ्च चिकित्सितमिति शिक्षितादिविधान्तानामव-

साध्यासाध्यविवेकञ्च कृच्छ्रसाध्ये विनिश्चयम्।
प्रकृतिञ्च तुरङ्गानां कथयाम्यनुपूर्व्वशः[1] ॥
रसोनादींस्तथा कल्पान्[2] मुनिभिः पूर्व्वनोदितान् ॥
॥१५॥

इत्युद्देशाध्यायः[3] ॥

---

शिष्टानां व्याधीनां निदानं कारणं चिह्नं लक्षणं चिकित्सितञ्च। कथयामीति क्रिया प्रदेशादिभिः कर्म्मभूतैःसह प्रत्येकं संबध्यते ॥

१५। प्रकृतिमिति वातादिप्रकृतिमित्यर्थः। रसोनादीनिति आदिपदेन गुग्गुलुरसायनादीनां ग्रहणम्। कल्कः दृषदि पेषितं वस्तु ॥

---

१। अनुपूर्व्वतः। कः।
२। रसोनादि तथा कल्पम्। गः।
३। क—नामकपुस्तके उपदेशाध्याय इति नामकृतमस्याध्यायस्य।

# अथ द्वितीयोऽध्यायः ।

प्रदेशः ।

प्रदेशान् वाजिदेहस्थान् यो न वेत्ति विभागतः ।
न[1] स जानाति मूढात्मा लक्षणं न चिकित्सितम् ॥१॥
अतएव[2] प्रदेशानां ज्ञानमादौ प्रकीर्त्तितम् ।
एतद् यत्नेन बोद्धव्यं वाजिनां हितकाम्यया ॥ २ ॥
अतिप्रसिद्धा जिह्वा या[3] तस्याः सूना भवेदधः ।
ऊर्द्ध्व[4] तालु भवेत्तस्याः तदग्रे[5] दन्तपीठकम् ॥ ३ ॥

---

१ । प्रदेशान् जिह्वादिनवकुक्ष्यन्तानित्यर्थः । लक्षणं प्रदेशरोगाणामित्यर्थः ॥

३ । अस्मिन्नध्याये आदौ प्रदेशज्ञानस्य प्रयोजनं प्रदेशानित्यादि श्लोकद्वयेन प्रतिपाद्य पश्चात् प्रदेशानां लक्षणानि क्रमेण एकत्रिंश-श्लोकैर्निर्दिशन्नाह । अतिप्रसिद्धेत्यादि ॥ सूना अधोजिह्विका सूना-धोजीह्विकापि च । इत्यमरः ॥ तस्या इति सूनायाः ।

---

१ । नैव जानाति । २ । ग ः । २ । अतःपरमिति । २ । ख ः ।
३ । जिह्वातु । २ । ख ः । ४ । ऊर्द्ध्वे । २ । ख ः ।
५ । ततोऽग्रे दन्तपङ्क्तिका । २ । ख ः ।

ततो दन्ताः[१] समुद्दिष्टा ऊर्द्धं दन्ता भवन्त्यधः।
चिवुकञ्चाधरोभाग[२] स्तेषां प्रोक्तं विचक्षणैः ॥ ४ ॥
चिवुकस्योपरिष्टात्तु अधरौष्ठः प्रकीर्त्तितः।
चिवुकात् पार्श्वभागे तु हनुर्नामाभिधीयते ॥ ५ ॥
सृक्वद्वयं विजानीयाद्वक्त्रपार्श्वगतं बुधः।
उत्तरौष्ठः प्रपाणाख्यः[३] तदूर्द्धं प्रोथ उच्यते[४] ॥ ६ ॥
नासाच्छिद्रे तथा पार्श्वे प्रोथस्यैव व्यवस्थिते।
नासाच्छिद्राक्षिमध्ये तु घोणाख्यः[५] समुदाहृतः ॥ ७ ॥
घोणापार्श्वगतौ गण्डौ क्षीरिके च ततःपरम्।
नेत्रयोरधरे भागे[६] अश्रुपात उदाहृतः ॥ ८ ॥

---

तदये तालोरये। दन्तपीठकमिति दन्तानां पीठकं आसनं दन्तवेष्ट इत्यर्थः। तेषां दन्तानाम् अधरोभागः चिवुकम्।
५। कपोलौ तत्परो हनुरित्यमरः। (चोयाल) Jaw।
६। सृक्कद्वयं ओष्ठपार्श्वद्वयम्। Corner of the mouth.।
८। अश्रुपातः अश्रुपातनामकः प्रदेश इत्यर्थः ॥

---

१। अधोदन्ताः। २। क।
२। चिवुकः स्वाधरे भागे। २।
३। प्रयाणाख्यं। २। ख।
४। प्रोथश्च समुदाहृतम्। २। ग।
५। घोणाख्यं समुदाहृतम्। २। ख।
६। नेत्रयोरन्तरे भागे। २। ख।

कर्णान्ते चैव नेत्रान्तमपाङ्गं ब्रुवते बुधाः[1] ।
कनीनिकाक्ष्णोर्विज्ञेया यस्य नासासमीपगः[2] ॥ ९ ॥
सितासितञ्च तन्मध्ये[3] नेत्रयोर्मण्डलं हि तत् ।
प्रच्छादनं भवेद्वर्त्म चाक्षिकूटमतःपरम् ॥ १० ॥
तस्मादूर्द्ध्वं भ्रुवौ लेखा ललाटञ्च तदुत्तरम् ।
ऊर्द्ध्वं ललाटदेशात्तु केशान्तञ्च ततः श्रवः ॥ ११ ॥
ततः शिरो विजानीयात् श्रवादूर्द्ध्वगतं बुधः ।
शिरःपार्श्वगतौ कर्णौ तयोर्मूलन्तु शष्कुली[4] ॥ १२ ॥

---

९ । कनीनिका तारका । तारकाक्ष्णः कनीनिकेत्यमरः । अक्ष्ण अपाङ्गस्य । नासासमीपगः यः प्रदेशः सा कनीनिका इत्यर्थः ॥

१० । वर्त्म नेत्रच्छदं प्रच्छादनं प्रच्छादनापरनामकं भवेत् । वर्त्म नेत्रच्छदेऽध्वनीत्यमरः । अक्षिकूटमीषिका चक्षुर्गोलको वा । ईषिकाक्षिकूटकमित्यमरः ॥

११ । तस्मादक्षिकूटात् । ललाटं श्रवणप्रदेशम् । भ्रुवयोर्ललाटं स्यादित्यमरः । Forehead ॥

१२ । शष्कुली चूलिका कर्णच्छिद्रं वा । कर्णमूलन्तु चूलिकेत्यमरः ॥

---

१ । कर्णपार्श्वे च नेत्रान्तमपाङ्गः प्रोच्यते बुधैः । २ । कः ।
२ । कनीनिकाक्ष्णोर्विज्ञेयः यत्र नासासमीपगः । कः ।
३ । तन्मध्ये । कः । खः ।    ४ । शष्कुलयम् । २ । खः ।

अपाङ्गाद्द्व्यङ्गुले चैव शङ्खं विद्याद्विचक्षणः[1]।
शङ्खकर्णान्तरे चैव कटाक्षः समुदाहृतः ॥ १३ ॥
विदुर्मर्मविदश्चैव कर्णस्याधः षडङ्गुले।
घण्टाबन्धसमीपस्थो निगालः परिकीर्त्तितः ॥ १४ ॥
अधस्ताच्च[2] निगालस्य गलमाहुर्मनीषिणः।
ततः कण्ठं विजानीयादधोभागे विचक्षणः[3] ॥ १५ ॥
वक्षः क्रोडं तथा चैव हृदयं कुक्षिमेव[4] च।
अनुपूर्वं[5] विजानीयादधोभागगतं बुधः ॥ १६ ॥
ग्रीवा लोकप्रसिद्धा तु तस्याश्चोपरि केसरः।
ग्रीवास्कन्धान्तरे चैव वाहं प्राहुर्मनीषिणः ॥ १७॥

---

१३। शङ्खं ललाटास्थि ॥

१४। कर्णस्य अधः अधस्तात् षडङ्गुले अन्तर इति शेषः। विदुर्नाम मर्मविदुः। तयोर्मध्ये विदुः पुमानित्यमरः॥

१६। पूर्वानुक्रमेण।

---

१। चापोऽद्व्यङ्गुले। कः।
२। अधस्तले। २। खः।
३। अधोभागे गतं बुधः। २। खः।
४। कक्षमेव च। २। खः।
५। आनुपूर्व्या। २। खः।

वाहस्योपरिजन्तु स्यात्[1] काकसं ककुदञ्च तत्[2] ।
ततः पृष्ठं विजानीयादासनं पृष्ठमध्यगम्[3] ॥ १८ ॥
अंसके ककुदश्चैव[4] निबन्धे परिकीर्तिते ॥ १९ ॥
स्यातामंसादधो बाहू तयोर्वाह्ये षडङ्गुले ।
बाह्वोरभ्यन्तरे विन्द्यात् किणञ्चातिप्रसिद्धकम् ॥२०॥
अधरे च ततोजानु निर्दिष्टं शास्त्रकोविदैः ।
मन्दिरं पश्चिमोभागः कलाची जानुनोऽग्रिमः[5] ॥२१॥
जानुनोश्चाप्यधोभागे[6] जङ्घां विन्द्याद्विचक्षणः ।
जङ्घापार्श्वे कलां विन्द्यात् सन्ध्यश्चैषिकसंज्ञकम् ॥ २२ ॥
अग्रतः पलिहस्तस्याः[7] पश्चात् कूर्च उदाहृतः ।

---

१८। ककुदं वृषस्कन्धः। अत्र काकसस्थाने कीकस एव भवितुं युक्तः॥

२१। मन्दिरं जानुपश्चाद्भागः। कलापीस्थले कलाचीति सङ्गतं मन्ये। कलाची जानुनोऽङ्गुलिपर्य्यन्तोभागः॥

२२। गुल्फावधिजानुपर्य्यन्तः प्रदेशः जङ्घा॥

---

१। वाहस्योपरि यत्तत्स्यात्। २। खः। जन्तुः स्यात्। गः।
२। ककुदं क्रमात्। २। कः। ३। पृष्ठमध्यतः। २। कः।
४। ककुदस्यैव। २ गः। ५। जानुनोऽग्रतः। २। गः।
६। जानुनश्चाधरे भागे। २। खः। ७। पलिहस्तः स्यात्। गः।

किणं तथैव[1] मध्यस्थमधोभागे च कुष्ठिकम्[2] ॥ २३ ॥
खुरसन्धिं ततो विन्द्यादधोभागे ततः खुरम्।
खुरस्य पार्श्वे पार्ष्णिः स्यादग्रभागे नखो भवेत् ॥ २४ ॥
खुरस्याधस्तलं चैव मण्डूकी तलमध्यतः[3]।
खुरमांसं विजानीयात् क्षीरिकाख्यं विचक्षणः ॥ २५ ॥
हृदयात् परतः कुक्षी पार्श्वतश्च विभागतः।
कुक्षिमध्ये भवेद्रन्ध्रमुपरन्ध्रं तदूर्द्धगम् ॥ २६ ॥
जठरं पार्श्वमध्यस्थं तस्य नाभिश्च मध्यतः।
रोमराजीं ततो विन्द्यात् मूत्रकोशमतःपरम्[4]।
आकण्याः पश्चिमे भागे पुटौ स्फिचौ च कीर्तिते ॥२७॥
पुच्छमूलन्तु[5] वाहानां मांसलं पुच्छमूलतः।
तस्याधः कीर्तितः पायुः सीवनी च ततःपरम् ॥ २८ ॥

---

२४। ततः खुरसन्धेः अधोभागे खुरम्।

२६। कुक्षी उदरः। रन्ध्रं उदरगह्वरः। तदूर्द्धगं तस्मात् हृदयगह्वरादूर्द्धभागस्थम् ॥

२७। स्फिचौ कटिप्रोथौ। अत्र छन्दोभङ्गः जातः।

---

१। किंतथा। २। खः। २। कुष्ठकी। २। खः।
३। मध्यमा। २। खः। ४। मूत्रकोषमतःपरम्। २। अः।
५। भावते पुच्छमूलतः। २। खः।

मुष्कौ च कटिसन्धिश्च ततो विन्द्यात् परं बुधः ।
अधस्तात् कटिसन्धेस्तु ऊरुसन्धिरुदाहृतः ॥ २९ ॥
सक्थिनो फलसन्धिस्तु ऊरूपान्ताभिधानकः[१] ।
ततः स्थुरं[२] विजानीयात् तस्याधो मन्दिरं भवेत् ॥३०॥
किणञ्चैव ततो विन्द्यात् मन्दिराभ्याससंस्थितम् ।
ततःपरं विजानीयात् कलां कूर्चञ्च कुष्ठिकम् ॥ ३१ ॥
खुरान्तसक्तं[३] मण्डूकं ततो विन्द्याद्विचक्षणः ।
अङ्कजङ्घाद्वयञ्चैव[४] वक्षोग्रीवाशिरोमुखम् ॥ ३२ ॥

---

३० । फलसन्धिः कोषसन्धिप्रदेशः, ऊर्व्वोः उपान्ताभिधानकः उपान्तनामकः यः प्रदेश इति यावत् । ते सक्थिनी ॥ ततः सक्थ्यनन्तरं यः प्रदेशस्तं स्थुरं विजानीयात् ॥

३२ । अङ्केति । अत्र अङ्कात् मुखान्ताः प्रदेशाः सम्भूय पूर्व्वकायः कथित इत्यर्थः । केवलं पृष्ठदेशो मध्यमकायः, तथा कटिदेशात् खुरान्तः अपरो भागः पश्चिमः पश्चात्कायो मतः ॥

---

१ । ऊरुपादाभिधायकः । २ । खः ।

२ । खुरम् । २ । खः ।

३ । खुरसक्तं च । २ । खः ।

४ । अंसजङ्घाद्वयम् । २ । गः ; अग्रेजङ्घाद्वयम् । २ । खः ।

पूर्वकायः[1] समुद्दिष्टः पृष्ठदेशस्तु मध्यमः।
आकटेः पश्चिमोभागः[2] खुरान्तश्चापरोऽमतः।
इति प्रदेशा विख्याताः पूर्वशास्त्रानुसारतः॥ ३३॥

इति प्रदेशाध्यायः।

---

१। पूर्व्वकायात्। २। ख।
२। पश्चिमे भागे। २। ख।

अथ

## तृतीयोऽध्यायः ।

### सर्व्वलक्षणः ।

अङ्गलक्षणानि ।

अतःपरं प्रवक्ष्यामि वाहानां लक्षणं स्मृतम् ।
लक्षणं शृणु वाहानां मुनिना यत्तु भाषितम् ॥ १ ॥
सर्वदोषहरं नित्यं नृपाणां जयवर्द्धनम् ।
अशुभैर्लक्षणैर्युक्ता हया न ग्रहणोचिताः ॥ २ ॥
अतो लक्षणमेवादौ तेषां वक्ष्यामि देहजम् ।
ओष्ठयोः सृक्कणोश्चैव जिह्वायां दशनेषु च ॥ ३ ॥
वक्त्रे तालुनि नासायां गण्डयोर्नेत्रयोस्तथा ।
ललाटे मस्तके चैव केशे कर्णपुटे तथा ॥ ४ ॥
ग्रीवायां केशरे चापि स्कन्धे वक्षसि बाहुके ।
जंघायां जानुनोश्चाधः[१] कूर्चे पादे तथैव च ॥ ५ ॥

---

१ । अशुभैर्लक्षणैर्वक्ष्यमाणैरित्यर्थः ॥

२ । लक्षणं शुभाशुभलक्षणं ओष्ठादीनामित्यर्थः ॥

---

१ । जानुनोश्चापि । २ । कः ।

पार्श्वयोः पृष्ठभागे च कुक्षौ कण्ठ्याञ्च बालधौ[१] ।
मेहने मुष्कयोश्चापि तथा चैवोरुकद्वयोः ॥ ६ ॥
आवर्त्ते पुण्ड्रके पुच्छे[२] गतौ वर्णे स्वरे तथा ।
महादोषे तथोत्पाते[३] छायायां गन्धसत्वयोः[४] ॥ ७ ॥
प्रमाणे चैव[५] वाहानां लक्षणं यत्प्रतिष्ठितम् ।
शुभाशुभविवेकाय तद्विन्द्याद्[६] बुद्धिमान् भिषक् ॥ ८ ॥
शालिहोत्रादिभिर्ज्ञातं[७] त्रिकालज्ञानकोविदैः ।
आताम्रौ पूजितावोष्ठौ बालहीनौ मृदुत्वचौ ॥ ९ ॥
सुप्रोथस्तून्नतः शस्तो[८] विपरीतं विवर्जयेत् ।
सृक्कणोर्मृदुता शस्ता जिह्वायां रक्तता तथा ॥ १० ॥

---

६ । बालधौ पुच्छे । कुक्षौ उदरे ॥

७ । आवर्त्तादिषु प्रमाणान्तेषु द्वादशसु लक्षणानि आवर्त्ताद्यध्यायेषु क्रमेण वर्णयिष्यतीति द्रष्टव्यम् ॥

८ । प्रमाणस्यैवेति पाठात् प्रमाणे चैवेति पाठः साधीयानिति मन्यामहे ॥

---

१ । सबालधौ । २ । खः ।
२ । आवर्ते च खुरे पुच्छे । २ । खः ।
३ । महादोषे त्यजेत्प्राज्ञः । २ । खः ।
४ । गन्धसत्त्वयोः । २ । कः ।
५ । प्रमाणस्यैव वाहानाम् । २ । खः ।
६ । तं विन्द्यात् । २ । गः ।
७ । शालिहोत्रादिभिः सम्यक् । २ । घः ।
८ । सुप्रोथोन्नतकंधश्च । २ । घः ।

अतश्चान्यथा[1] दोषाय तन्वी दीर्घा च सा शुभा ।
घनाः[2] स्निग्धाः सुबद्धाश्च समा दन्ताः सुशोभनाः ॥ ११ ॥
षट्संख्येष्वधरौष्ठे च तेषु व्यञ्जनसम्भवः ।
आननं तुङ्गघोणञ्च[3] निर्मांसं प्रियदर्शनम् ॥ १२ ॥
सुगन्धि पूजितं वक्त्रं विपरीतं विगर्हितम् ।
तालु रक्तं प्रशस्तञ्च सुपुटे चैव नासिके ॥ १३ ॥
नात्युल्बणौ समौ गण्डौ[4] वाहानां कीर्त्तितौ शुभौ ।
अत्यन्तं निर्गते चैव सुबद्धे नैव चाविले ॥ १४ ॥

---

११ । घनाः सान्द्राः । स्निग्धा नतु रूक्षा इत्यर्थः । सुबद्धाः सुघटिताः ॥

१२ । तेषु दन्तेषु । अधरौष्ठे नीचौष्ठे षट्संख्येषु षट्स्वित्यर्थः । व्यञ्जनसम्भवः प्रकाशसम्भावनेत्यर्थः । अङ्कुरोत्पत्तिर्वा ॥ प्रियदर्शनं प्रशंसनीयमित्यर्थः ॥ तुङ्गघोणं उच्चनासिकम् । निर्मांसं नातिमांसलमित्यर्थः ॥

१३ । वक्त्रं मुखगह्वर इत्यर्थः । सुपुटे इति सुशोभनावरणयुक्ते इत्यर्थः । त्रिषु पात्री पुटी वाटीत्यमरः ॥

१४ । उल्बणौ उन्नतौ नात्युल्बणौ ईषद्व्यक्तोन्नतिभावावित्यर्थः ॥

---

१ । अतोऽन्यथा च । २ । कः ।

२ । धन्याः । २ । गः ।

३ । आयतं तुङ्गघोणञ्च निर्मांसं परिकीर्त्तितम् । २ । खः ।

४ । नातिवृत्तौ समौ गण्डौ । खः ।

प्रशस्ते वाजिनां नेत्रे मध्वाभेऽमलतारके।
स्निग्धायते विशाले च श्लिष्टे मधुनिभेक्षणे ॥ १५ ॥
स्वर्णप्रभे विशाले च शस्ते वाहस्य लोचने।
सावर्त्तश्चाप्यनिम्नश्च विशालश्चैव वाजिनाम् ॥ १६ ॥
ललाटं पूजितं प्राहुर्मुनयः शास्त्रकोविदः।
शिरः समं तथा वृत्तमावर्त्तद्वयभूषितम् ॥ १७ ॥
केशाश्च मृदवः स्निग्धा बहवश्चैव पूजिताः।
ह्रस्वता[1] कर्णयोश्चैव तीक्ष्णता तनुता तथा ॥ १८ ॥
अदीर्घरोमता चैव प्रशस्तेति[2] प्रकीर्त्तिता।
सुवृत्तां कुञ्चिताश्चैव धन्यां ग्रीवां विदुर्बुधाः ॥ १९ ॥
केशरश्च जटाहीनो मृदुश्चैव प्रशस्यते।
सुबद्धः सुदृढश्चैव स्कन्धो वाहस्य पूजितः ॥ २० ॥
प्रशस्तं विपुलं वक्षो निर्गतं विशिरश्च यत्[3]।
ऋजुवृक्षसमौ[4] बाहू गूढं जानु प्रशस्यते ॥ २१ ॥

---

१८। स्निग्धाश्चिक्कणाः ॥ ह्रस्वता आकारतः तीक्ष्णता सूच्यग्रभावः दैर्घ्येण। तनुता वेधेन चेत्यर्थः ॥

२०। सुबद्धः सुघटितः।

२१। प्रशस्तं कवाटविस्तृतं। निर्गतं वहिःस्फीतमिव स्थितमित्यर्थः ॥

---

१। ऋजुता। खः।
२। प्रशस्तो विप्रकीर्त्तितः। खः।
३। तत्। खः।
४। उन्नतसमौ। खः।

अवक्रा मांसहीना च वाजिजंघा शुभा स्मृता।
सुवृत्तं सुसमञ्चैव नातिस्तब्धं नचोन्नतम्[१] ॥ २२ ॥
कूर्च्चमेवं विधं विद्याद् ग्रन्थिव्रण[२]विवर्जितम्।
दृढ़मण्डूकिकायुक्तो वर्तुलः श्लिष्टसन्धिकः ॥ २३ ॥
खुरः खरखुराकारः प्रशस्तः समुदाहृतः।
पार्श्वे चैव समे वृत्ते ऊर्द्ध्वे मांसोपशोभिते ॥ २४ ॥
अविलम्बि सुवृत्तञ्च उदरञ्चातिपूजितम्।
नातिदीर्घं समं पृष्ठं किञ्चिच्च विनतं शुभम् ॥ २५ ॥
सुवृत्ता चैव पीना च कटिर्धन्या प्रकीर्त्तिता।
मृदुस्निग्धायतैर्युक्तं बालैः पुच्छं प्रशस्यते ॥ २६ ॥
वृषणौ च समौ वृत्तौ ईषल्लम्बावलोमशौ।
कृष्णावर्णविहीनन्तु ह्रस्वं मेहनमीष्यते ॥ २७ ॥
आनुपूर्व्व्यायतं पीनं शोभितञ्चोरुकद्वयम्।
पूर्वजंघेव जंघादि खुरान्तञ्चापि पश्चिमम्।
शालिहोत्रादिभिः प्रोक्तं मुनिभिः सर्ववेदिभिः ॥ २८ ॥

२५। न समुन्नतम् ॥
२६। पीना मांसला ॥
२८। पूर्वजंघेव पश्चिमजंघादि खुरान्तमपि लक्षणयुक्तं प्रोक्तम् ॥

१। शुभं स्मृतं सुवृत्तञ्च समञ्चैव नतोन्नतम्। खः।
२। ग्रन्थिवर्णविवर्जितम्। कः, खः।

आवर्त्ताः।

अथातः संप्रवक्ष्यामि आवर्त्तानां विनिश्चयम्।
शुभाशुभविवेकाय यथा शास्त्रे[1] व्यवस्थितम्॥२९॥
विंशतिस्तु शुभाः प्रोक्ताः षट्सप्तत्यधिकाः स्मृताः।
उत्तरौष्ठं प्रपाणं स्यात्तत्रावर्त्ताः शुभावहाः॥३०॥
सृक्कणोश्च तथा प्रोक्ताः सर्वकामफलप्रदाः।
चयश्चैवाथ चत्वारो वाजिनो यस्य रोमजाः॥३१॥

३०। आवर्त्ताः शुभाशुभभेदेन साकल्येन षण्णवतिप्रकाराः। तेषु विंशतिः शुभाः। प्रथमं प्रपाणादिषु शुभप्रदेशेषु तानेव वर्णयति। उत्तरौष्ठमित्यादिभिः। शुभावर्त्तस्थानानि तु नकुलस्तयोदशविधान्याह। "ललाटे मस्तके चैव ग्रीवायां हृदये तथा। पादे पक्षे मणीबन्धे नाभिदेशे विशेषतः॥ स्कन्धे पार्श्वे गले वक्त्रे कुक्षौ रन्ध्रे त्रिके तथा। आद्यास्त्रयोदशावर्त्ता विज्ञेया वाजिपण्डितैः" इति॥ अथ शुक्राचार्य्यः "गलमध्ये पृष्ठमध्ये उत्तरौष्ठेऽधरे तथा। कर्णनेत्रान्तरे वामकुक्षौ चैवतु पार्श्वयोः। जत्रुषु च शुभावर्त्ता वाजिनामग्रपादयोः। आवर्त्तौ यान्तरौ भाले सूर्य्यचन्द्रौ शुभप्रदौ" इति। ये प्रपाणगलकर्णसंस्थिताः पृष्ठमध्यनयनोपरिस्थिताः। ओष्ठसक्थिभुजकुक्षिपार्श्वगास्ते ललाटसहिताः सुशोभना इति वक्तसंहितायाम्॥ एवमशुभदेशाश्च अनन्तरं अशुभावर्त्तकथनप्रस्तावे कथयिष्यति॥

३१। अथ यस्य वाजिनः सृक्कणोः चयश्चत्वारो वा रोमजा

[1] १। शास्त्र। क।

द्वौ वा ललाटजौ[1] यस्य सतु धन्यतमः स्मृतः।
आनुपूर्व्या स्थिता चोर्द्धं[2] ललाटे रोमजास्त्रयः॥ ३२॥
निःश्रेणी नाम सा ख्याता भर्तुः सर्वार्थसाधिनी।
शिरःकेशान्तयोर्मध्ये श्रवो नामाभिधीयते॥ ३३॥
तथावर्त्तः स्मृतोऽश्वस्य भर्त्तुर्जयविवर्द्धनः।
घण्टाबन्धसमीपस्थो निगालः कीर्त्तितो बुधैः॥ ३४॥
तस्मिन् देवमणिर्नाम रोमजः शुभकृत् स्मृतः।
कर्णमूले तथा बाह्वोः केशान्ते मस्तके तथा॥ ३५॥

---

आवर्त्ताः सन्तीतिशेषः। ते सर्वकामफलप्रदाः प्रोक्ताः उक्तञ्च अग्निपुराणे। "स्कन्धयोश्च ललाटे च कर्णमूले निगालके। बाहुमूले गले श्रेष्ठा आवर्त्ताः" इति॥

३२। ललाटे आनुपूर्व्या त्रयो रोमजाः निःश्रेणी नाम्ना कथ्यन्ते इति फलितार्थः। अत्र शुक एवमाह। "आवर्त्तत्रितयं भाले शुभश्चोर्द्धन्तु साम्तरं। अशुभस्थानिसंलग्नमावर्त्तत्रितयं तथा॥ त्रिकोणत्रितयं भाले आवर्त्तानान्तु दुःखदम्"—इति। अत्र नकुलो ललाटस्थावर्त्तत्रयस्य त्रिकूट इति नाम ददौ। "त्रयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः। त्रिकूटः स परिज्ञेयः वाजिवृद्धिकरः परः"—इति॥

३४-३५। घण्टाबन्धेति। निगालस्थावर्त्तस्य देवमणित्वं नकुलोऽप्याह यथा। निगालस्थो य आवर्त्तः सहि देवमणिः स्मृत इति॥

---

१। ललाटगः। ग।     २। स्थितः। ख।

आवर्त्ताः पूजिता नित्यं विशेषेण तु मस्तके।
आवर्त्ता यस्य चत्वारो वाजिनो वक्षसि स्थिताः ॥३६॥
एकः कण्ठे भवेत् स्पष्टः स धन्यः सर्वकामदः।
रन्ध्रे चैव यदा भर्त्तुरीप्सितार्थप्रदो[1] भवेत् ॥३७॥
उपरन्ध्रे भवेच्चैव[2] रोमजश्चातिपूजितः।
शङ्खचक्रगदावज्र[3]शुक्तिपद्मो[4]पमाश्च ये ॥३८॥

---

३६। अत्र कर्णमूलबाहुकेशान्तेभ्यो मस्तकावर्त्तस्य विशेषपूजितत्वं गम्यते कर्णमूलावर्त्तस्य शुभत्वं नकुलशुक्रावाहतुः। "कर्णमूले यदावर्त्तस्तन्मध्येण तथा परः। विजयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ" इति ॥ कण्ठजावर्त्तस्य च नकुलशुक्रौ चिन्तामणिरिति नाम ददतुः।

३७। "कण्ठे यस्य महावर्त्त एकोऽस्य प्रजायते। चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः" इति ॥ रन्ध्रे कुक्षिविवरे। उपरन्ध्रे रन्ध्रोर्द्ध्वस्थे प्रदेशे इत्यर्थः। एते प्रधाणस्कन्धललाटकर्णनिगालबाहुकेशान्तमस्तकवक्षःकण्ठरन्ध्रोपरन्ध्रेषु आवर्त्ताः प्रशस्ताः कथिताः ॥

३८। शङ्खेत्यादि। अत्र शुभदेशजानां विशेषशुभत्वनिर्द्देशात् तेषां शङ्खाद्यानां स्वभावशुभत्वं गम्यते ॥ "शङ्खचक्रगदापद्मवेदिस्वस्तिकसन्निभः। प्रासादतोरणधनुःसुपूर्णकलशाकृतिः ॥ स्वस्तिकस्रग्मीनखड्गश्रीवत्साभः शुभो भ्रमः" इति शुक्रः ॥

---

१। ईप्सितार्थप्रदः। खः। ३। पद्म। खः।
२। उपरन्ध्रोद्भवश्चैव। खः। ४। वज्र। खः।

विशेषेण शुभाः प्रोक्ता रोमजाः शुभदेशजाः।
अतऊर्द्ध्वं प्रवक्ष्यामि रोमजानतिनिन्दितान्[1] ॥३९॥
भर्तुः क्लेशावहान् सर्वान् धनप्राणापहारकान्।
नासिकापुटयोर्मध्ये प्रदेशः प्रोथ उच्यते ॥ ४० ॥
तत्र भर्तुर्विनाशाय रोमजश्च[2] प्रकीर्त्तितः।
ऊर्द्ध्वञ्च नासिकाच्छिद्रात् स्वामिनः क्लेशकारकः ॥४१॥
गण्डयोश्चैव[3] भर्तारं हन्त्यावर्त्तो दुरासदः।

३९। अथाशुभावर्त्तस्थानानि क्रमेणोच्यन्ते। तत्र शुक्रः "अश्रुपातहनूगण्डहृद्गलप्रोथवस्तिषु। कटिशङ्खजानुमुष्ककुक्षनाभिगुदेषु च ॥ दक्षकुक्षौ दक्षपादे स्वशुभो भ्रमरः सदा"। तथा,—"पादोर्द्ध्वमुखो भ्रमरो ह्येको वापि स निन्दितः। अशुभस्त्वातिघंशमावर्त्तत्रितयं तथा ॥ त्रिकोणत्रितयं भाले आवर्त्तानान्तु दुःखदम्"— इत्यादि ॥ "अश्रुपातहनुगण्डहृद्गलप्रोथशङ्खकटिवस्तिजानुनि। मुष्कनाभिककुदे तथा गुदे सव्यकुक्षिचरणेषु चाशुभाः" इति वृत्तरत्नावली ॥ "कक्षायां जानुमेढ्रे च त्रिवर्णा पुच्छसन्निधौ। पुच्छे गुह्ये वक्षावहे आवर्त्ता अधमा हये" इति नकुलः ॥

४२। गण्डस्थलावर्त्तस्थानभेदेन शुभाशुभत्वमाह नकुलः। "एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते। वर्त्तमानः स विज्ञेयः

१। अशुभेङ्गिताम्। ख।
२। रोमजोऽयस्य कीर्त्तितः। ख।
३। गण्डयोश्चैव। ख।

अश्रुपातः समुद्दिष्टः प्रदेशश्चक्षुषोरधः ॥ ४२ ॥
तत्रावर्त्तो भवेद्भीमः स्वामिनः कुलनाशनः।
अपाङ्गाद्द्व्यङ्गुले चैव प्रदेशः शङ्ख उच्यते ॥ ४३ ॥
तस्मिन् भर्त्तुर्विनाशाय भवेद्वाहस्य रोमजः।
भ्रूप्रदेशससुद्भूत' आवर्त्तो नैव पूजितः ॥ ४४ ॥
सुहृद्वियोगकृत् सः स्याद्भर्त्तुरर्थावसादकः।
मन्यां ग्रीवां शिरो विन्द्यात्तत्रावर्त्तस्तु कुत्सितः ॥ ४५ ॥

---

स इच्छेत् स्वामिनाशनम् ॥ गण्डावर्त्तो भवेद्यस्य वाजिनो दक्षिणाश्रयः। स करोति महासौख्यं स्वामिनः शिवसंज्ञकः ॥ तद्वद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम्" इति। एवं शुक्रोऽप्याह। "कपोलस्थौ यदावर्त्तौ दृश्येते यस्य वाजिनः। यशोवृद्धिकरौ प्रोक्तौ राज्यवृद्धिकरौ मतौ ॥ एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते। शर्वनाम स विख्यातः स इच्छेत् स्वामिनाशनम् ॥ गण्डसंस्थो यदावर्त्तो वाजिनो दक्षिणाश्रितः। स करोति महासौख्यं स्वामिनां शिवसंज्ञकः ॥ तद्वद् वामाश्रितः क्रूरः प्रकरोति धनक्षयम्। इन्द्राभौ तावुभौ शस्तौ नृपराज्य विवृद्धिदौ" इति ॥

४३। अपाङ्गात् नेत्रपार्श्वाद् द्व्यङ्गुले ऊर्द्ध्वं इति शेषः।

४५। ग्रीवायामावर्त्तत्रयस्य तु शुभत्वमाह शुक्रः। "एवमेव

---

१। भ्रुवोर्देशे। क।

कक्षयोश्चापि संग्रामे स्वामिनश्चाशु घातयेत् ।
चिबुकस्य समीपस्थो वामदक्षिणभागतः ॥ ४६ ॥
प्रदेशस्तु हनुर्नाम तत्रावर्त्तो हि दारुणः ।
अधरौष्ठस्य वाधस्ताच्चिबुकं हि प्रसिद्धकम् ॥ ४७ ॥
तस्मिन् पापो भवेद्भर्तुः कर्णयोश्चापि रोमजः ।
कण्ठस्याथ निगालस्य मध्ये गलक उच्यते ॥ ४८ ॥
तत्रावर्त्तं स्मृतः[१] पापः स्कन्धसन्धिगतश्च यः ।
अधस्ताज्जंघयोश्चैव ग्रन्थिः कूर्च इति स्मृतः ॥ ४९ ॥

---

प्रकारेण यथो ग्रीवां समाश्रिताः । यथावर्त्तः स वाजीशो जायते नृपमन्दिरे" इति ॥

४६ । कक्षावर्त्तस्याशुभत्वे नकुलः । "एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा । स रणे मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ" इति ॥ एवं शुक्रोऽपि, यथा,—"यस्यावर्त्तौ वक्षगतौ कुक्ष्यन्ते वाजिनो यदि । स नूनं मृत्युमाप्नोति कुर्य्याद्वा स्वामिनाशनम्" इति ॥

४८ । कर्णसमीपस्थस्य निन्दितत्वमाह शुक्रः । "अश्वः कर्णसमीपे तु शङ्खी चेकः स निन्दितः" इति ॥

४९ । शुक्रस्तु गलावर्त्तस्य शुभत्वमाह । "गलमध्ये शुभश्चैक सर्व्वाशुभनिवारणः" इति ॥ स्कन्धपार्श्वयोश्चापि शुभत्वे शुक्रः । "स्कन्ध-

---

१ । स्थितः । ख ।

तथावर्त्तः स्मृतो भर्तुः संग्रामे जीवितान्तकृत्।
कूर्चादष्टाङ्गुलं चोर्द्ध्वं पार्श्वयोस्तु कला स्मृता ॥ ५० ॥
तत्र भर्तुः शराघातै जीवितान्तश्च रोमजः।
ककुदं वृषभस्येव सुव्यक्तमुपलक्षयेत्[1] ॥ ५१ ॥
वाजिनो यस्य तत्र स्यादावर्त्तः[2] स्वामिनाशनः।
ककुदस्य पुरोभागे समीपे वह उच्यते ॥ ५२ ॥
भर्तुः सुतसमेतस्य तस्मिन्नाशाय रोमजः।
काकसेतु[3] च यस्य स्यादावर्त्तस्तस्य दारुणः ॥ ५३ ॥
रणे हतः समं भर्त्रा क्वच्यान्तिः स विलुप्यते।
क्रोडे चैवासने चापि हृदये चैव जानुनि ॥ ५४ ॥
आवर्त्ताः स्वामिघाताय भवन्त्येव न संशयः।
पार्श्वयो रोमजो यस्य स चाश्वो नयति क्षयम् ॥ ५५ ॥
सपक्षञ्चाशु भर्त्तारं नीहाराम्बु यथा रविः।
कूर्चस्याधः प्रदेशस्तु कुष्ठिकः[4] परिकीर्तितः ॥ ५६ ॥

---

पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः। करोति विविधान् पद्मान् स्वामिनः सततं सुखम्" इति॥

५४। आन्यावर्त्तस्य फलमाह नकुलः। "जानुदेशे यदावर्त्तौ वाजिनः संप्रदृश्यते। प्रवासं सततं कुरुते स भर्तुः क्लेशसंयुतम्" इति। "जानुसंस्था यदावर्त्ताः प्रवासक्लेशकारकाः" इति शुभः॥

---

१। उपलक्ष्यते। ख।
२। आवर्त्तस्तु विनाशकृत्। ख।
३। काकुदेशे। ख।
४। कुष्ठिक। ख।

अधन्यस्तत्र वाहस्य अंघयोर्जानुनोश्च[1] यः ।
नाभिजो मुष्कजश्चैव चिकजश्च विशेषतः ॥ ५७ ॥
पुच्छमूलस्थितश्चापि नैव धन्यः प्रकीर्त्तितः ।
कुक्षौ व्याधिं[2] नियच्छन्ति रोमजाः कुक्षिसम्भवाः ॥ ५८ ॥
पायुसीवनिमध्यस्था[3] नैव धन्यास्तु कीर्त्तिताः ।
स्फिक्पिण्डे[4] स्थूरके चैव यस्यावर्त्तो हि वाजिनः ॥ ५९ ॥
लिङ्गावर्त्तः स विख्यातो भर्त्तुः सर्वार्थनाशकः ।
शतपादीति विख्यातस्तथा वै मुकुलोऽपरः ॥ ६० ॥
आवर्त्तश्चैव संघातः पादुकश्चार्द्धपादुकः ।
शुक्तिश्चैवावलीढश्च आवर्त्तः कीर्त्तितोऽष्टधा ॥ ६१ ॥

---

५७ । चिकजस्य फलमाह शुक्रः । "चिकजश्च यदावर्त्तः स्वामिनस्य विनाशनः" इति ॥

५८ । पुच्छमूलावर्त्तफलं शुक्राचार्य्य आह । "पुच्छमूले यदावर्त्तो धूमकेतुरनर्थकृत्" इति । एवं नकुलोऽपि आह । "पुच्छदेशे यदावर्त्तो वाजिनः संप्रदृश्यते । धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः" इति ॥

६० । अत्र शुक्रः । "मध्यदन्तात् पार्श्वगतात् सैव शतपदी कचैः । न चैवात्यशुभा पृष्ठमुखी शतपदी मता" इति ॥

---

१ । अंघतो जानुतश्च । ख्ः ।
२ । व्याधिः क्षयं याति । ख्ः ।
३ । पायुसीवनमध्ये स्युः । ख्ः ।
४ । स्फिक्पिण्डे स्थूरके । ख्ः ।

वाजिदेहगतः सम्यक् शुभाशुभनिवेदकः।
शतपादीसमाकारः शतपादीति कीर्त्तितः॥ ६२॥
जातीमुकुलसङ्काशो मुकुलः समुदाहृतः।
आवर्त्तो भ्रमितैर्बालैः[१] संघातो रोमपुञ्जकैः[२]॥ ६३॥
शुक्तिश्च शुक्तिसंस्थानैः रोमभिर्व्यक्तलक्षणैः।
वत्सावलीढ़काकारोऽवलीढ़ः[३] परिकीर्त्तितः॥ ६४॥
पादुकः पादुकाकारस्तथा चैवार्द्धपादुकः।
वाले विशेषसंस्थाने निर्द्दिशेन्मतिमान् भिषक्॥ ६५॥
शास्त्रमार्गानुसारेण यथाप्रोक्तं विचक्षणैः।
एतेषामेव सर्वेषामावर्त्तानां तपोधनैः॥ ६६॥
रोमजेति कृता संज्ञा वाजिलक्षणवेदिभिः।
शुभाशुभौ तु यत्र द्वौ तत्रैको न फलप्रदः॥ ६७॥

---

६२। शतपादी (काणड़ार इति भाषा)। तत्तुल्याकारः शतपादी। तथा जातीकोरकसदृशाकारो य आवर्त्तः स मुकुलः कथितः॥

६४। व्यक्तलक्षणैः प्रकटचिह्नैः। शुक्तिसंस्थानैः शुक्त्याकारैरित्यर्थः। शुक्त्यावर्त्तं मङ्गलः। "शुक्त्याख्यौ तालुकान्तस्थावावर्त्तौ कीर्त्तिवर्द्धनौ। हयस्य स्वामियुक्तस्य सदैव सुखावहौ" इति॥

६६। वत्सस्य अवलीढ़काकारः जिह्वासदृश इत्यर्थः॥

---

१। भ्रमितः। ख॰।
२। रोमपुञ्जकः। ख॰।
३। एतेषामेव वीढ़स्य। ख॰।

एको[1] हेम्ना दहेत्पापं तेन दोषो[2] न दुष्यति।
अथवा द्विजमुख्याय वेगादिगुणवान्[3] हयः ॥ ६८॥
दत्त्वा ग्राह्यः क्रयेणैव दुरावर्त्तस्तु काकुदी।
श्रीवृक्षो[4] रोमजश्चैव रोचमानस्तथैव च ॥ ६९ ॥
अङ्गदी मुषली चैव राज्यरत्नप्रदः सदा।
प्रपाणे[5] मारुतं विन्द्याल्ललाटे च हुताशनम् ॥ ७० ॥
उरसि चाश्विनौ देवौ चन्द्रसूर्य्यौ च मूर्द्धनि।
रन्ध्रे स्कन्दविशाखौ च उपरन्ध्रे हरो हरिः[6] ॥ ७१ ॥
इत्येवं पूजिता ह्येते दशावर्त्तास्तु वाजिनः।
अप्येकेन विहीनाश्चेद्[7] भवेयुरशुभास्तदा ॥ ७२ ॥

७०-७१। इत्येते मारुतादयो दशविधावर्त्ताः पूजिताः। तथाच अग्निपुराणे,—"रन्ध्रोपरन्ध्रयो द्वौ द्वौ द्वौ द्वौ मस्तकवक्षसोः। प्रपाणे च ललाटे च कण्ठावर्त्ताः शुभा दश" इति ॥ नकुलस्तु ललाटस्थैकावर्त्तस्य सूर्य्यसंज्ञत्वं प्राह। यथा,—"ललाटे यस्य चावर्त्तो यद्येकः सम्प्रजायते। स करोत्यश्वसंघातान् स्वामिनः सूर्य्यसंज्ञक" इति ॥ "भाले चोर्द्ध्वमुखः शुभः" इति शुक्रः ॥ अथ नकुलः। "ललाटे युगलावर्त्तौ चन्द्रार्कौ सम्प्रकीर्त्तितौ। वाजिनो यदि तौ स्यातां राष्ट्रवृद्धिकरौ परौ" इति ॥ अथ शुक्रोऽपि किञ्चिद्विशेषं

१। एवं। खः।
२। दोषेण।
३। ये वेगादिगुणाधिकाः। खः।
४। श्रीवत्सः। कः।
५। अपाने। खः।
६। हरिर्हरौ। खः।
७। विहीना ये। खः।

पुण्ड्रकाः।

अत ऊर्द्धं प्रवक्ष्यामि पुण्ड्राणां लक्षणं शुभम्।
आनुपूर्व्या[१] यथादृष्टं मुनिभिस्तत्त्वार्थवेदिभिः[२] ॥ ७३ ॥
शुक्तिशङ्खगदाखड्गपद्मचक्राङ्कुशोपमाः।
शरासनसमाकाराः प्रशस्ताः पुण्ड्रकाः स्मृताः ॥ ७४ ॥
मत्स्यभृङ्गारप्रासादस्रग्वेदीयूपसन्निभाः।
श्लक्ष्णदर्पणाकाराः[३] शुभदाः परिकीर्त्तिताः ॥ ७५ ॥

वर्णयति। "ललाटे यस्य चावर्त्तद्वितयस्य समुद्भवः। मस्तके च तृतीयस्य पूर्णहर्षोऽयमुत्तमः॥ आवर्त्तौ सान्तरौ भाले चन्द्रसूर्य्यौ शुभप्रदौ। मिलितौ तौ मध्यफलौ अतिलग्नौ तु दुःफलौ" इति॥ "तेषां प्रपाण एको ललाटे केशेषु च भुवावर्त्तः। रन्ध्रोपरन्ध्रमूर्द्धनि वक्षसि चेति स्मृतौ द्वौ द्वौ"। बृहत्संहिता॥

७३। पुण्ड्राणामिति शुक्त्याद्याकाराः भिन्नाकारा वा अश्वशरीरेषु चिह्नविशेषाः तेषाम्॥

७४। शुक्त्याद्याकाराः प्रशस्ताः। एतदतिरिक्ता अप्रशस्तत्वाद्वर्ज्या इति भावः। ते च काकाद्याकाराः इति वक्ष्यति॥

७५। अश्वानां हृदयस्थः श्वेतरोमावर्त्तविशेषः श्रीवृक्षः। "तथा वक्षसि वाहस्य श्रीवृक्ष उदाहृत" इति हारावली। श्रीवृक्ष-दर्शनाकारा इति पाठे श्रीवृक्षवद्दर्शनीय आकारो येषां ते तथोक्ताः। इदं श्लोकद्वयं च-पुस्तके नास्ति। "श्रीवत्सदर्पणाकाराः" इति पाठे श्रीवत्सनामकरोमजावर्त्तवत् दर्पणवच्च आकारो येषां ते॥

१। अनुपूर्व्याद्यथोद्दिष्टम्। ख। यथादृष्टि। च। २। शास्त्रशालिभिः। च।
३। श्रीवत्सदर्पणाकाराः। च। दर्शनाकाराः। ग।

शिरोललाटवदनं यः पुण्ड्रो व्याप्य तिष्ठति ।
स धन्यः पूजितो नित्यं ऋजुकश्चैव[१] यो भवेत् ॥ ७६ ॥
पर्व्वतेन्दुपताकाभा ये च स्रग्दामसन्निभाः ।
ते सर्व्वे पूजिताः पुण्ड्रा धनधान्यफलप्रदाः ॥ ७७ ॥
इति पुण्ड्राः शुभाः प्रोक्ताः पूर्व्वशास्त्रानुसारतः ।
अशुभांश्चैव वक्ष्यामि यथायोगं समासतः ॥ ७८ ॥
काककङ्ककबन्धाहि[२]गृध्रगोमायुसन्निभाः ।
असिताः पीतका रक्ताः पुण्ड्रका नैव पूजिताः ॥ ७९ ॥
तिर्य्यग्गाश्चैव विच्छिन्नाः शृङ्खलापाशसन्निभाः[२] ।
शूलाग्रा वामदेहस्थाः पुण्ड्रका न शुभाः स्मृताः ॥ ८० ॥

---

७६ । ऋजुगः सरल इत्यर्थः ॥

७९ । काकेत्यादि । काकः प्रसिद्धः । कङ्कः पक्षिविशेषः (काँक) इति प्रसिद्धः । कबन्धः अमस्तककलेवरः । अहिः सर्पः । गृध्रः (शकुनि) इति प्रसिद्धः । गोमायुः शृगालः । तैः सन्निभाः सदृशाः ॥

८० । शृङ्खलापाशसन्निभाः शृङ्खलरज्ज्वाकाराः । तिर्य्यग्गा इति ये शरीरे तिर्य्यग्भावेन स्थिता इत्यर्थः । विच्छिन्ना विच्छेदं प्राप्ताः । शूलाग्राः शूलाग्रवत् सूक्ष्माग्रभागाः । एवम्भूता वामपार्श्वस्थाः पुण्ड्रका न शुभाः ॥

---

१ । ऋजुगः । गः । ऋजुकः । खः । २ । पाशशोभिताः । खः ।
३ । शोभाढ्य । खः ।

जिह्वाकल्मषरूक्षाणि[1] भस्मवर्णनिभानि[2] च ।
पुण्ड्रकाणि[3] न शस्यन्ते भिन्नवर्णानि[4] वाजिनः ॥ ८१ ॥

पुष्पाणि ।

आगन्तवस्तुरङ्गस्य ये भवन्त्यन्यवर्णगाः ।
विन्दवः पुष्पसंज्ञास्तु ते हिताहितसंज्ञकाः[5] ॥ ८२ ॥

---

८१ । जिह्वेत्यादि । जिह्वायां कल्मषरूक्षाणि, तथा भस्मवर्णनिभानि भस्मवर्णतुल्यानि भिन्नवर्णानि स्ववर्णभिन्नवर्णानीत्यर्थः । वाजिनः पुण्ड्रकाणि न शस्यन्ते न प्रशस्तानि भवन्ति ॥ जिह्वाकल्मषरूक्षाणीति पाठे जिह्मानि वक्राणि कल्मषाणि कृष्णपीतानि रूक्षाणि च । तथा भस्मचूर्णनिभानि दग्धचूर्णसदृशानि । तथा यानि च भिन्नवर्णानि मिश्रवर्णानि पुण्ड्रकाणां तानि न शस्यन्ते ॥ जिह्वाकृष्णेति पाठो न सङ्गतः ॥

८२ । आगन्तवो न तु सहजाः । अन्यवर्णाः स्ववर्णभिन्नवर्णा इत्यर्थः । विन्दूनां पुष्पसंज्ञात्वे नकुलः,—"यस्य रोमविभेदेन जायन्ते रोमविन्दवः । पुष्पाख्यः स परित्याज्यः सर्ववाजिभयावहः" इति ॥ शुभाशुभप्रदेशविशेषाश्रयेणैव हिताहितसंज्ञा तेषां भवतीत्यर्थः ॥

---

१ । जिह्वाकृष्णाग्निरूक्षाणि । खः ।
२ । भस्मचूर्णनिभानि । गः ।
३ । पुण्ड्रकाणां विनश्यन्ति । खः ।
४ । मिश्रवर्णानि यानि च । गः । कः ।
५ । हिताहितकारकाः । खः ।

तेषां प्रदेशभेदेन[1] लक्षणं यद् व्यवस्थितम् ।
तत्तथैव समासेन विस्पष्टं कीर्त्त्यतेऽधुना ॥ ८३ ॥
अपाने च ललाटे च भ्रुवोर्मूर्द्धनि[2] कर्णयोः ।
निगाले चैव केशान्ते पुष्पं धन्यतमं स्मृतम् ॥ ८४ ॥
स्कन्धे वक्षसि कक्षे[3] च मुष्कयोर्बाहुकेशयोः[4] ।
हन्वोः पृष्ठे च वाहानां पुष्पं स्वामिहितप्रदम् ॥ ८५ ॥
नाभौ केशे[5] तथा कण्ठे दन्ते चैव हि वाजिनाम् ।
पुष्पं धन्यतमं प्रोक्तं भर्त्तुः सर्व्वार्थसाधकम् ॥ ८६ ॥
अप्रशस्तानि दृष्टानि मुनिभिर्यानि वाजिनाम्[6] ।
तानि सम्यक् प्रवक्ष्यामि पुष्पाण्यागमदर्शनात्[7] ॥ ८७ ॥
अधरौष्ठे कठे[8] प्रोथे उत्तरौष्ठे तथैव च ।
घोणायां गण्डयोश्चैव शङ्खयोश्च तथा भ्रुवोः ॥ ८८ ॥

---

८३ । प्रदेशभेदेन अपानादिस्थानविशेषेण ॥

८८ । भ्रुवोरिति द्विवचनेन भ्रूद्वयस्यैव प्रशस्तत्वं एकस्यैव चाप्रशस्तत्वमिति गम्यते । एवं गण्डशङ्खयोरपि ज्ञेयम् ॥

---

१ । प्रदेशदेशे च । खः ।
२ । कचे मूर्द्धनि । खः । स्रुवे । कः ।
३ । कच्छायां । कः ।
४ । मुष्के वा केवले भुवि । गः । बाहुके मुखे । खः ।
५ । नाभिदेशे । कः । नाभौ देशे । गः ।
६ । प्राकृतः । खः ।
७ । पुष्पाण्यशुभानि दर्शनात् । खः । ८ । कटौ । गः ।

ग्रीवायाञ्च वहे चैव[1] स्तनयोः स्थूरके स्फिचि[2]।
पायौ क्रोड़े च पुष्पाणि निन्दितानीति निश्चयः॥ ८९॥
रक्तं पीतं तथा कृष्णं पुष्पं सर्वत्र नेष्यते।
शुभप्रदेशसञ्जातं[3] भवेत् साधारणं ततः॥ ९०॥
पुत्रलाभं धनप्राप्तिमारोग्यं विजयं तथा।
विन्द्यात् पुष्पैः शुभैर्भर्त्तुरशुभैश्च विपर्य्ययम्॥ ९१॥
सर्वाङ्ग[4]पुष्पितो वाजी परित्याज्यो न संशयः॥ ९२॥

गतयः।

दूरमुत्क्षिप्य यः पादांस्तप्ताङ्गारान् स्पृशन्निव।
पुरो याति[5] सुसंहृष्टो वाजी भद्रगतिस्तु सः॥ ९३॥
पूजिता वृषमातङ्गसिंहशार्दूलगामिनः।

---

८९। स्थूरके मन्दिरोपरिस्थप्रदेशे। स्फिचि कटिप्रोथे। स्त्रियां स्फिचौ कटिप्रोथे। इत्यमरः॥

९३-९४। अश्वानां गतिपूज्यत्वे शुक्रः,—"उच्चैः पदन्यासगतिः

---

१। ग्रीवायाश्चैव वाहे च। खः।
२। स्फिजि। खः।
३। शुभप्रदेशे। खः।
४। सर्व्वत्र। कः।
५। पुरतो याति संहृष्टः। गः।

अतोऽन्यगतयो[1] नेष्टाः सर्वदैव[2] तुरङ्गमाः ॥ ९४ ॥
सङ्कीर्णा विकटभ्रष्टा[3] वक्रा सौष्ठववर्जिता ।
अत्युर्द्धवलिता[4] चैव वाजिनां निन्दिता गतिः ॥ ९५ ॥
षोडशच्छोटिकाभिस्तु[5] करवेष्टितजानुभिः[6] ।
शतं द्विगुणितं गत्वा[7] हस्तानां पुनरेति यः ॥ ९६ ॥

---

द्विपव्याघ्रगतिश्च यः । मयूरहंसतित्तीरपारावतगतिश्च यः ॥ मृगोष्ट्र-वानरगतिः पूज्यो वृषगतिश्च यः'' इत्यादि ॥

९५ । गतिनिन्दितत्वमाह सङ्कीर्णेति । सङ्कीर्णा सङ्कुचिता । विकट-भ्रष्टेति विकटं विषमं यथा तथा भ्रष्टा स्खलिता द्रुतक्षिप्ताधःपा-तेत्यर्थः । वक्रा न तु सरला । सौष्ठववर्जिता रामणीयकविरहिता इत्यर्थः । अत्यूर्द्धा अत्युन्नता । वलिता भङ्गीयुक्ता ॥

९६ । उत्तममध्यमाधमगतौ परिमाणमाह । षोड़शेति । षोड़श-च्छोटिकाभिरिति षोड़शपरिमिताङ्गुलिस्फोटदानं यावता समयेन भवति तावता कालेनेत्यर्थः । करवेष्टितजानुभिरिति जानुनी कराभ्यां

---

१ । अतोऽन्यगतयो नेष्टाः । कः ।
२ । सर्व्वस्युश्चतुरङ्गमाः । खः ।
३ । वक्रभ्रष्टा । खः ।
४ । अत्यूर्द्धं चैव वक्रा च । खः ।
५ । षोड़शाच्छोटिकायास्तु । खः । घेयाः । कः ।
६ । करवेष्टितगात्रिभिः । गः ।
७ । दत्त्वा । कः ।

स शीघ्रगतिरित्युक्तो वाजी धन्यस्तपोधनैः।
दशहीना भवन्त्येते मध्यमाधमगा हयाः॥ ९७॥

वर्णाः।

चक्रवाकादिभिर्वर्णैः[1] शालिहोत्रादिभिः स्मृतैः।
पाटलाद्यैश्च लोकस्य व्यवहारो न सांप्रतम्॥ ९८॥
तस्मात् प्रसिद्धकान्[2] वर्णान् वाजिनां देहसम्भवान्।
समासेन यथायोगं कथयाम्यनुपूर्वशः[3]॥ ९९॥

---

वेष्टयित्वेत्यर्थः। यद्वा करवेष्टितगामिभिः करं वेष्टयित्वा गच्छद्भिरित्यर्थः॥

९७। दशहीना इति दशभिर्हंसैः हीना इत्यर्थः॥

९८-९९। यद्यपि चक्रवाकादिवर्णाः शालिहोत्रादिभिः स्मृताः, तथापि साम्प्रतं तेषां लोके अव्यवहारात् तान् परित्यज्य लोकप्रसिद्धानेव वर्णान् कथयति। ते च प्रसिद्धा वर्णाः नकुलेनोक्ता न तु वर्णविशेषेण सर्वेषां संज्ञाविशेषोऽकारि। "सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च। नीलः कृष्णोऽथ सर्वेषां श्वेतः श्रेष्ठतमः स्मृतः॥ पट्टाश्वो भूपतेर्वाजी सर्वश्वेतः प्रशस्यते"। तथा,—"श्वेतः शङ्खेन्दुसङ्काशो रक्तः कुङ्कुमसन्निभः। हरिद्रासदृशः पीतः सारङ्गः कर्बुरः

---

१। चक्रवाकादिभिर्व्वर्णैः। ग।
२। तस्मात् प्रसिद्धिमं वर्णं वाजिनां देहसम्भवम्। ग।
३। अनुपूर्वतः। ख।

श्वेतः कोकाह इत्युक्तः कृष्णः खुङ्गाह[1] उच्यते ।
पीतको हरितः प्रोक्तः कषायो रक्तकः स्मृतः ॥ १०० ॥
पक्वतालनिभो वाजी कयाहः परिकीर्त्तितः ।
पीयूषवर्णः सेराहो गर्द्दभाभः सुरूहकः[2] ॥ १०१ ॥
नीलो नीलक[3] एवाश्व स्त्रियूहः कपिलः स्मृतः ।

---

स्मृतः ॥ पिङ्गः कपिलकाकारो नीलो दूर्वाभ्रसन्निभः । कृष्णो जम्बू-फलाकारः शास्त्रज्ञैः समुदाहृतः ॥ पीताभः श्वेतपादो यस्तथा स्यात्सित-लोचनः । चक्रवाकः स विज्ञेयो राजार्हो वाजिसत्तमः" इति ॥

१०० । कोकाहः । अयं कर्कोऽपि उच्यते । "सिते तु कर्कको-काहौ" इति हेमचन्द्रः । खुङ्गाहः कृष्णघोटकः । "कृष्णवर्णे तु खुङ्गाहः" इति च हेमचन्द्रः । पीतको हरितः कथ्यते । "हरिद्रासदृशः पीतो-रक्तः कुम्कुमसन्निभः" इति च कषाये नकुलः । काकाहोऽपि क्वचित्पाठः ॥

१०१ । पक्वतालसदृशवर्णो वाजी कयाहः रक्ताश्वः । कियाहोऽपि क्वचित्पाठः । यथाह हेमचन्द्रः,—"कियाहो लोहितो हयः" इति । यः सेराहो वाजी सोऽमृतवर्ण इत्यर्थः । सुरूहकस्तु वाजी गर्द्दभवर्णः गर्द्दभवत् धूसरवर्ण इत्यर्थः । "सुरूहको गर्द्दभाभः" इति हेमचन्द्रः ॥

१०२ । नीलो दूर्वाभवर्णो वाजी नीलकः स्मृतः । तथा कपिलः

---

१ । पिङ्गाहः । कः ।
२ । सरूहकः । कः ।
३ । नीलो नीलयको वाश्वः । सनीलो नील एवासौ । कः । गः ।

खिलाहः[1] कपिलो वाजी पाण्डुकेशरवालधिः[2] ॥ १०१ ॥
हलाहश्चित्रलश्चैव खुङ्गाहः[3] श्वेतपीतकः।
ईषत्पीतः कुलाहस्तु यो भवेत् कृष्णजानुकः[4] ॥ १०२ ॥

---

चियूहः स्मृतः। नीलकचियूहयो र्मङ्कुलहेमचन्द्रौ। "नीलो दूर्वाभ्रसन्निभः। आनीलस्तु नीलकोऽथ चियूहः कपिलो हयः" इति। कपिलः पिङ्गलवर्णः। अयं चियूहो वोल्लाह एव कथ्यते। खिलाहो वाजी कपिलः पिङ्गलवर्णः किन्तु केशरपुच्छयोः पाण्डुवर्णः। अथ हेमचन्द्रः। "वोल्लाहस्त्वयमेव स्यात् पाण्डुकेशरवालधिः" इति। अयं खिलाहः वोल्लाह स्चियूह एवचेति हेमचन्द्रटीकायाम् ॥

१०२। हलाहः चित्रलः चित्रितः। "हलाहश्चित्रितोहयः" इति अभिधानचिन्तामणिः। खुङ्गाहः श्वेतपीतकः श्वेतपीतवर्णः। श्वेतपिचट इत्यपि पाठः। तस्यायमर्थः। श्वेतः शुभ्रवर्णः पिचटः पिचटवर्णश्च। (पिचट पिचुटी)। अथ हेमचन्द्र एवं लक्षणमाह। "खुङ्गाहः श्वेतपिङ्गलः" इति। खोङ्गाह इत्यपि क्वचित्पाठः। कुलाह ईषत्पीतवर्णः कृष्णपादजानुर्घोटकः। "कुलाहस्तु मनाक्पीतः कृष्णः स्यात् पादजानुनि" इति हेमचन्द्रः ॥

---

१। खिलाहः। खः।
२। पाण्डुकेशस्तु वालधिः। खः।
३। खुङ्गाहः श्वेतपिचटः। गः।
४। जानुकः। कः।

कृष्णा चास्ये भवेल्लेखा पृष्ठवंशानुगामिनी ।
उराहः[1] कृष्णजानुस्तु मनाक् पाण्डुस्तु यो भवेत् ॥ १०४ ॥
वोरुहानः[2] स्मृतो वाजी पाटलो यः प्रकीर्त्तितः ।
रक्तपीतकषायोत्थवर्णजो यस्य दृश्यते[3] ॥ १०५ ॥
उकनाहः[4] स विख्यातो वर्णो वाहस्य देहजः ।
पूर्वोक्तानाञ्च वर्णानां सुखपुण्ड्रेण वाजिनाम् ॥ १०६ ॥
ये भवन्त्यपरे भेदा स्तान् ब्रवीम्यनुपूर्वशः[5] ।

---

१०४ । उराहलक्षणे हेमचन्द्रः जंघायाः कृष्णत्वमाह । "उराहस्तु मनाक्पाण्डुः कृष्णजानो भवेद् यदि" इति । अयं उराह उकनाह एव ॥

१०५ । वेरुहाण इत्यत्र वोरुखानएव पाठ्यः । "वोरुखानस्तु पाटलः" इति हेमचन्द्रस्मरणात् । क्वचिद्वीरुहाणः पठ्यते ॥

१०६ । उकनाहलक्षणं हेमचन्द्र आह । "उकनाहः पीतरक्त-यः सएव तु कचित्" इति । अत्र दुकुलाहः दुष्कुलाह इत्यपि इदं लिपिकरप्रमादाद् भ्रान्तमेव प्रतीमः । उकनाहस्य साधुत्वे चन्द्र एव प्रमाणम् ॥

१०७ । पूर्वोक्ताः कषाहादयो सुखपुण्ड्रकेण युक्ताः कोकुराहादि-

---

१ । उरहः । क ।
२ । वीरहवः । क ।
३ । 'रक्तपीतकषायो वा वर्णो यो यस्य दृश्यते । क ।
४ । दुकूलाहः । ग । दुष्कुलाहः । क ।
५ । अनुपूर्वशः । क ।

कोकाहः पुण्ड्रकेणाश्वः कोकुराहः प्रकीर्त्तितः ॥ १०७ ॥
खरराहश्च[1] खङ्गाहो हरिको हरिरोहकः[2]।
कुलाहश्चैव[1] वोल्लाहः सेराहः सुरराहकः ॥ १०८ ॥
कुलाहः कुलराहस्तु सुराहः सुरराहकः[3]।
वीरराहो[4] भवेदश्वो वीरराहस्तु यः स्मृतः ॥ १०९ ॥

---

नामविशेषैः ख्याप्यन्ते इति तानेव क्रमेणाह कोकाह इत्यादिना। पूर्वोक्तलक्षणः कोकाहः पुण्ड्रकेण मुखपुण्ड्रकेण युक्त इत्यर्थः। कोकुराहः प्रकीर्त्तितः।

१०८। तथा खङ्गाहोऽपि मुखपुण्ड्रकेण युक्तः खरराह इत्युच्यत इत्यर्थः। एवं हरिकोऽपि मुखपुण्ड्रकेण हरिरोहकः। कुल्लाहश्चैवेति। कुलाहो वोल्लाहश्च वाजी मुखपुण्ड्रकयुक्तो यथाक्रमं सुराहः सुरराहश्च स्मृत इत्यर्थः॥ अयं पाठः क-पुस्तके नास्ति॥

१०९। कुलाहकुलराहौ तु यथाक्रमं सुराहसुरराहकलक्षणयुक्तावेव ज्ञेयौ। तथा वीरराहो मुखपुण्ड्रकेण युक्तो वीरराहः स्मृत इत्यर्थः। दुष्कुलाह उकलाहो वा पुण्ड्रकेण युक्तो दुरराहः कीर्त्तितः। तथा पियूह एव चिचिताङ्गः सन् पियुराह इति॥

---

१। मवलाहः। खः।
२। हरिराहकः। खः।
३। कुलाहः कुलराहः। सुराहः सुरराहः। खः।
४। कुलीरो दुरुलाहश्च। खः।
५। वीरराहः। खः।

दुकुलादी[1] दुरूराहः पुण्ड्रकेणैव कीर्त्तितः ।
चियूहस्त्रियुराहश्च चित्रलाङ्गश्च[2] यो भवेत् ॥ ११० ॥

अतऊर्द्ध्वं प्रवक्ष्यामि शुभाशुभविनिश्चयम् ।
वाजिदेहगतानां हि वर्णानां पूर्व्वशास्त्रतः ॥ १११ ॥

यस्य गौराणि[3] पीतानि गात्ररोमाणि वाजिनः ।
स भर्त्तुः श्रियमाधत्ते यस्य रक्तसितानि च[4] ॥ ११२ ॥

यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा ।
मूर्द्धजाश्च सिता[5] यस्य तं विद्यादष्टमङ्गलम् ॥११३ ॥

---

११२। सम्प्रति अङ्गविशेषेषु रोमवर्णविशेषेण वाजिनां संज्ञाविशेषानाह। यस्येत्यादि। चित्राणीति पाठे चित्राणि नानावर्णानि ॥

११३। अष्टमङ्गललक्षणं नकुलः। “यस्य पादाः सिताः सर्व्वे पुच्छं वक्षोमुखन्तथा। मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम्” इति। “पुच्छोरःखुरकेशास्यैः सितः स्यादष्टमङ्गलः” इति हेमचन्द्रः। “स एव हृदये स्कन्धे पुच्छे श्वेतोऽष्टमङ्गलः” इति शुकः। “मूर्द्धजाश्च सिताः” इति पाठ एव साधीयान्। तस्य नकुलादिभिर्धृतत्वात् ॥

---

१। दुकुलानः। कः।
२। चित्रिचाङ्गः। कः।
३। चित्राणि गौराणि। कः।
४। मुक्तासितानि च। खः।
५। मूर्द्धजाश्चासिताः। कः।

प्रभूतासितताराश्च[1] प्रशस्ता मुनिभिः स्मृताः।
रक्तपीतासितसितैरधन्यः कीर्त्तितो हयः ॥ ११४ ॥
प्रशस्तकृष्णतारस्तु मल्लिकाक्षः प्रकीर्त्तितः।
श्वेतया वेष्टितं[2] कृष्णं रेखया तारकं[3] भवेत् ॥ ११५ ॥
मल्लिकाक्षः स विज्ञेयः स्वामिनः सुखवर्द्धनः।
सिततारोऽप्रशस्तश्च स्वामिनः क्लेशवर्द्धनः ॥ ११६ ॥
सर्वश्वेतश्च[4] कृष्णश्च रक्तः पीतस्तथैव च।
एते सांग्रामिकाः प्रोक्ताः तुरङ्गा मुनिसत्तमैः ॥ ११७ ॥

---

११४। रक्तपीतासितसितैरिति रक्तादिवर्णचतुष्टयशबलैः तारकैरित्यर्थः ॥

११५। यस्य वाजिनः नेत्रे तारकं कृष्णं श्वेतरेखया वेष्टितं च। मल्लिकाक्षस्य लक्षणन्तु नकुलो नैवमाह “मुखे चन्द्रकसंवीतो जम्बूफलसमाकृतिः। श्वेतपादः सविज्ञेयो मल्लिकाक्षः स पूजितः” इति ॥

११७। सर्वश्वेत इत्यत्र सर्वशब्दः कृष्णादिभिः सह प्रत्येकं सम्बध्यते। “तथापि सर्वतः श्वेतो मध्यः पूज्यः सदैव हि” इति शुकः ॥

---

१। प्रभूताः सितताराश्च प्रशस्ता मुनिभिः स्मृताः। क।
२। श्वेतयावेष्टितं। ख।
३। तारकञ्च यत्। ख।
४। सर्वाङ्गश्वेतकश्च। क।

हरिताः किल जायन्ते वाजिनः पुण्यदर्शनाः ।
ते हिताय नरेन्द्राणां[1] जयारोग्यधनप्रदाः ॥ ११८ ॥
रक्तास्यमेहनः शस्तः श्यामकर्णश्च यः सितः ।
कपोतसमवर्णस्तु[2] यो वाहः शुक्लकेशरः[3] ॥ ११९ ॥
शुक्लपादमुखो[4] वाजी प्रशस्तः परिकीर्त्तितः ।
चतुर्णाञ्चैव वर्णानां शुक्लता यस्य वाजिनः ॥ १२० ॥
मुखे सिततरश्चैव पञ्चभद्रः स उच्यते ।
श्वेतमण्डलचिह्नश्च भर्त्तुः सर्व्वार्थसाधकः ॥ १२१ ॥
पाण्डुरा[5] यस्य रेखा स्यात् पृष्ठवंशानुगामिनी ।
श्वेतकृष्णशिरा यस्य[6] नैव धन्यः प्रकीर्त्तितः ॥ १२२ ॥

---

११८। श्यामकर्णस्य लक्षणं शुक्रः। "कर्णेश्यामः श्यामकर्णः सर्व्वतस्त्वेकवर्णभाक्" इति ॥

१२०। पञ्चभद्रः पञ्चकल्याणोऽपि कथ्यते नकुलशुक्राभ्याम्। तथा च "यस्य पादाः सिताः सर्व्वे तथा वक्त्रञ्च मध्यतः। कल्याण-पञ्चकः प्रोक्तः सर्व्वकल्याणकश्च सः॥ मुखे पत्सु सिताः पञ्चकल्याणोऽश्वः सदामतः" इति ॥

---

१। यतोऽहिता नरेन्द्राणां। खः।
२। कपोतेन च वर्णेन। खः।
३। शुक्लकेशकः। गः।
४। शुक्लपादमुखो वाजी। कः।
५। पाण्डुरः। खः।
६। श्वेतकृष्णशिरो यस्य नैव धन्यः प्रकीर्त्तितः। गः।

अन्यवर्णं शिरो यस्य पुच्छं वा यस्य वाजिनः।
पुच्छेन शिरसा वापि नानावर्णेन निन्दितः॥ १२३॥
अव्यक्तवर्णो[1] यो वाहस्तथा तित्तिरसन्निभः।
कुत्सितो वानराक्षश्च यो वा व्याघ्रावलीढकः॥ १२४॥

स्वराः।

ह्रेषितं मधुरञ्चैव तुरङ्गस्य प्रशस्यते।
अविच्छिन्नमदीनञ्च गम्भीरं सानुनासिकम्॥ १२५॥
दृष्ट्वाग्निपूर्णपात्रञ्च[2] ब्राह्मणं कुसुमानि च।
दधि चापि समालोक्य वाहानां ह्रेषितं शुभम्॥ १२६॥
वादित्रध्वनिमाकर्ण्य ह्रेषन्ते[3] यदि वाजिनः।
ग्रासपूर्णमुखाश्चैव तदा भर्त्तुर्जयो भवेत्॥ १२७॥
ध्वजाग्रञ्चैव[4] सूर्य्यञ्च पश्यन्तो वाजिनो यदा।
ह्रेषन्तो बहवो हृष्टा स्तदा विद्याज्जयं विभोः॥ १२८॥
अतो यद्विपरीतन्तु ह्रेषितं कुत्सितन्तु तत्[5]।
मिन्मिनं गद्गदं मूकं विरूक्षं कासजर्जरम्॥ १२९॥

---

१२५। अदीनमिति अकातरम्॥

१२९। मिन्मिनं (तोतला) इति प्रसिद्धं। गद्गदं अस्फुटं। विरूक्षम् अतिकर्कशम्॥

---

१। अव्यक्तवर्णः। कः।
२। दृष्ट्वा हि पूर्णपात्रञ्च। खः।
३। ह्रेषितं यदि वाजिनः। गः।
४। ध्वजां सविम्बं। कः।
५। यत्। खः।

ईदृशं ह्रेषितं[1] नेष्टं हयानाञ्च तपोधनैः ।
वाजिशास्त्रार्थतत्त्वज्ञैः कीर्त्तितं मुनिसत्तमैः ॥ १३० ॥
बाले रोगिणि वृद्धे[2] च क्षुधिते च पिपासिते[3] ।
श्रान्ते भीते कृशे[4] बाढे न ग्राह्यं स्वरलक्षणम् ॥ १३१ ॥
अथ यः प्लुततो[5]ऽश्वस्य शनैरविशदो[6] ध्वनिः ।
अन्तरुत्पद्यते कश्चित्तदश्वप्लुत उच्यते ॥ १३२ ॥
तत्र कूजत्यधो नाभेर्गुदवस्त्यण्डमाश्रितः ।
ततस्त्वन्तःशाखासु वायुरेवोर्द्धमुच्छलन् ॥ १३३ ॥

१३२ । अथेति । प्लुततः तन्नामकगतिधाराविशेषेण धावत इत्यर्थः । अश्वस्य यः कश्चिदविशदोऽपरिस्फुटो ध्वनिः अन्तरभ्यन्तरे उत्पद्यते सोऽश्वप्लुतं उच्यते । पुच्छत इति पाठे पुच्छात् वालधेः ॥

१३३-१३४ । प्लुतोत्पत्तौ कारणमाह । तत्रेति । तत्र ध्वन्युत्पत्तौ नाभेरधः गुदवस्त्यण्डमाश्रितः पायुवस्तिकोषप्रदेशगतः वायुरेव ऊर्द्धं उच्छलन् विसर्पन् विसृतिं गच्छन्निति यावत् । ततस्तु गुदवस्त्यण्डदयाश्रयेष्वित्यर्थः । अन्तःशाखासु आभ्यन्तरधमनीष्वित्यर्थः । कूजति शब्दं करोति । अतोहेतोः शिराणामश्वानां वेग ऊर्द्धवेग

१ । हृष्टं सहेषितम् । गः ।
२ । बाले च निर्गते । खः ।
३ । चापिवाधिते । खः ।
४ । तथा । कः ।
५ । पुच्छतः ।
६ । निर्मिश्रते । खः ।

अतोऽश्वानां न वेगः स्यात् स्थिरायां न च जृम्भणा।
तासामधोमुखत्वाच्च न भवेद् वडवास्वपि ॥ १३४ ॥

महादोषाः।

काकुदी कृष्णजिह्वश्च कृष्णप्रोथाण्डतालुकः।
करालो हीनदन्तश्च शृङ्गी चाधिकदन्तकः ॥ १३५ ॥

---

इत्यर्थः। जृम्भणा शाखासु प्रसर्पणञ्च वायोरिति शेषः। न भवेत्। वडवास्वपि तासां शाखानामधोमुखत्वात् न भवेत् सुत इति शेषः॥ अपिशब्दश्चार्थः॥

१३५। एते काकुद्यादिशातदन्तान्ताः सप्तविंशति र्वाहा दोषान्विता न ग्राह्या इति जयदत्तः। एतदारोहणे स्वामिनो विनाशात्। नकुलस्तु चतुर्दशविधान् दोषान्वितानाह,—"हीनदन्तोऽधिकश्चैव करालः कृष्णतालुकः। मुषली च तथा शृङ्गी चत्वेते स्वामिघातकाः॥ एकाण्डजातस्त्वेकाण्डो हीनाङ्गोऽप्यधिकाङ्गकः। परित्याज्यः स वाञ्छद्भिरन्विष्य परमं यशः॥ खण्डी वदनको वाजी कृष्णीचैव चतुर्थकः। वर्जनीयः प्रयत्नेन सर्वे ते पापकर्मणः॥ खण्डी च स्वामिनं हन्ति करालो धनसञ्चयम्। अतःपरं तथा वाजी शृङ्गी राष्ट्रविनाशनः" इति॥ एवमाग्नेयेऽप्युक्ताः सप्तविंशतिः संज्ञान्तरैश्च,—"हीनदन्तो विदन्तश्च करालः कृष्णतालुकः। कृष्णजिह्वश्च यमजो जातमुष्कश्च यस्तथा॥ द्विशफश्च तथा शृङ्गी त्रिकर्णो व्याघ्रवर्णकः। खरवर्णो भस्मवर्णो जातवर्णश्च काकुदी॥ श्वित्री च काकसादी च खरसारस्तथैव च। वानराक्षः कृष्णसटः कृष्णगुह्यस्तथैव च॥ कृष्णप्रोथश्च

एकाण्डश्चैव जाताण्डः[1] कञ्चुकी चिसरी[2] तथा ।
मार्जारपादो व्याघ्राभस्त्रिकर्णौ छिखुरी स्तनी ॥ १३६ ॥
यमजो वामनश्चैव कुब्जस्तित्तिरसन्निभः[3] ।
वानराक्षो विडालाक्षो मुषली चेन्द्रदृशकः ॥ १३७ ॥
येषां पृष्ठे हतो भर्त्ता जातदन्तस्तथैव च ।
एते दोषान्विता वाहा न ग्राह्या भूतिमिच्छता ॥ १३८ ॥
धनप्राणहरा ह्येते बन्धुविग्रहकारकाः ।
एषां चिह्नं प्रवक्ष्यामि येन जानन्ति सादिनः ॥ १३९ ॥
पूर्वशास्त्रानुसारेण मुनीनां वचनं यथा ।
आवर्त्ता यस्य ककुदि[4] काकुदी स उदाहृतः ॥ १४० ॥
करालो वाधरे दन्तो जायते यस्य चोत्तरा[5] ।

शूकश्च यस्य तित्तिरसन्निभः । विषमश्वेतपादश्च भुवावर्त्तविवर्जितः ॥ षड्भावर्त्तसंयुक्तो वर्जनीयस्तुरङ्गमः" इति । उक्तञ्च शुक्रनीतौ । "कृष्ण-तालुः कृष्णजिह्वः कृष्णौष्ठश्च विनिन्दितः । सर्व्वतः कृष्णवर्णो यः पुच्छे श्वेतः स निन्दितः" इत्यादि ॥

१४० । काकुदीलक्षणं स्पष्टम् ॥

१४१ । करालो दन्तुरः तुङ्गो वा दन्तो विद्यते यस्य स करालो

1 । एकाण्डो जन्मतोऽण्डश्च । गः ।
2 । चिसरिः । गः ।
3 । काकतित्तिरसन्निभः । खः ।
4 । ककुदे । गः ।
5 । करालो वाधरे दन्ते जायते यस्य चोत्तरम् । खः ।

चतुर्भिः पञ्चभिश्चैव हीनदन्तः प्रकीर्त्तितः ॥ १४१ ॥
सप्तभिश्चाष्टभिर्दन्तैः स्यातश्चाधिकदन्तकः ।
अङ्गुष्ठपर्वसङ्काशः छागशृङ्गोपमस्तथा ॥ १४२ ॥
जम्बूबदररूपश्च तथा चामलकोपमः ।
आम्रास्थिसदृशश्चापि हरीतक्याः फलोपमः ॥ १४३ ॥
दग्धचर्म्मनिभश्चापि वालुसंस्थान एव च ।
कीलः[1] कर्णान्तरे यस्य केशान्ते चापि दृश्यते ॥ १४४ ॥
धौरेयः सर्वपापानां शृङ्गी वाहः स कीर्त्तितः ।
एवंविधेन शृङ्गेन शृङ्गी राष्ट्रे न वासयेत् ॥ १४५ ॥

---

"करालो दन्तुरे तुङ्गे" इत्यमरः। यस्य अधरे नीचे उपरा वा ऊर्द्ध्वे देशे इति यावत्। दन्त एक एवेत्यर्थः। जायते स करालीति प्रकीर्त्तितः। चतुर्भिः पञ्चभिरित्यनेन षड्भिर्न्यूनैरिति अभिप्रेतम्। एवं सप्तभिरष्टाभिरित्यनेनापि षड्भिरधिकैरिति बोध्यम्। यद्वा करालो दन्तरोगविशेषः स यस्यास्तीति कराली तदुक्तं,—"शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः। करालान् विकृतान् दन्तान् करालो न स सिध्यति"—इति ॥

१४२-१४५। शृङ्गीलक्षणमाह अङ्गुष्ठेत्यादि ॥

१४४। कीलः शङ्कुवत् चिह्नमित्यर्थः ॥

१४५। धौरेयः अग्रवर्त्ती प्रधानमित्यर्थः।

---

१। काचः। खः।

एकेन[1] लम्बमानेन मुष्केणैकाण्डसंज्ञकः।
अत्यन्तरोमशाभ्यान्तु ताभ्यां जाताण्ड[2] उच्यते ॥१४६॥
स्कन्धे वक्षसि वाहोश्च अंसदेशे तथैव च।
अन्यवर्णो भवेद्वाजी कञ्चुकी स प्रकीर्त्तितः ॥१४७॥
यस्यान्यवर्णा रेखा स्यात्[3] पादे कूर्चे च वाजिनः।
मार्जारपादः प्रोक्तोऽसौ न धन्यः[4] कुलनाशनः ॥१४८॥
अन्यवर्णस्य वाहस्य शिरः कृष्णं यदा भवेत्।
चिसरी नाम सः[5] प्रोक्तो भर्त्तुः कुलविनाशनः ॥१४९॥
द्विखुरं गोखुराकारं खुरैर्विन्द्याद्विचक्षणः।
अथवा सीवनीयुक्तै[6] र्निम्नमध्यैस्तु निर्द्दिशेत् ॥१५०॥

---

१४६। ताभ्यां मुष्काभ्याम् ॥
१४८। अन्यवर्णा रेखा स्ववर्णभिन्नवर्णा रेखा ॥
१४९। अन्यवर्णस्य कृष्णभिन्नवर्णस्येत्यर्थः ॥
१५०। खुरैः गोखुराकारं गोखुरवत् द्विधाविभक्तखुरमित्यर्थः। त्रिवलीयुक्तैरिति पाठे भङ्गीयुक्तैः ॥

---

१। एकतः। खः।
२। जातखण्डमुच्यते। कः।
३। यस्यान्यवर्णा रेखाः स्युः। कः।
४। सधनं कुलनाशनः। कः।
५। तामसः। कः।
६। त्रिवलीयुक्तैः। खः।

वृषणाभ्यां सजाताभ्यां सञ्जातवृषणो भवेत् ।
तद्वद्वृषणसञ्जातस्तनाभ्यां विद्यते[१] स्तनी ॥ १५१ ॥
त्रिभिः कर्णैस्त्रिकर्णो च व्याघ्राभो व्याघ्रवर्णकः[२] ।
एकेनाङ्गेन हीनेन भिन्नेन[३] च विशेषतः ॥ १५२ ॥
यमजं वाजिनं[४] विन्द्याद् वामनं वामनाकृतिम् ।
वर्णादेकेन पादेन अन्यवर्णेन यो हयः ॥ १५३ ॥
मुषलीति समाख्यातो वाजिशास्त्रविशारदैः[५] ।
विरोधं नैव यो याति दृष्टाभ्यां मुष्कवर्जितः[६] ॥ १५४ ॥
इन्द्रवृद्धः स विख्यातो भर्त्तुश्च कुलनाशनः ।

---

१५१ । सजाताभ्यां सहस्तनेनेति शेषः । जाताभ्यां वृषणाभ्यां कोषाभ्यां । अस्य श्लोकस्य द्वितीयतृतीयपादौ ख-ग-पुस्तकयोर्नस्तः ॥

१५२ । भिन्नेन भग्नेन विषदृशेन वा एकाङ्गहीनो भिन्नाङ्गश्चेति द्विविधो यमजः ॥

१५३ । यो हयः वर्णात् स्ववर्णादित्यर्थः । अन्यवर्णेन भिन्नवर्णेन पदेन उपलक्षित इति शेषः ।

---

१ । विहितः । गः ।
२ । व्याघ्रचर्मकः । कः ।
३ । भिन्नेन । गः ।
४ । वासनं । कः ।
५ । भर्तुः कुलविनाशनः । खः ।
६ । मुष्कवर्जिताम् । कः ।

अथ चेद्वडवायान्तु[1] विरोधमधिगच्छति ॥ १५५ ॥
निगूढवृषणश्चाश्वः[2] स धन्यः सर्व्वकामदः ।
द्विवर्षात्तु[3] समारभ्य यावता पञ्चवार्षिकः ॥ १५६ ॥
दन्तानां मुष्कयोश्चैव सम्भवो वाजिनः स्मृतः ।
अत ऊर्द्ध्वं न जायन्ते मुष्कौ दन्ताश्च वाजिषु ॥ १५७ ॥
अशुभन्तु फलं वाच्यमभावेन शुभाशुभम्[4] ।
सुरथस्य गतं राज्यं ककुदस्यैव दूषणात् ॥ १५८ ॥
हतकम्बलवैकर्णापशुदन्ताच्च पाण्डुरात् ।
शृङ्गिणी स्तनदोषेण स्तनी च सगरे क्षयम् ।
जान्वावर्त्तेश्वदोषेण पञ्चत्वं रावणो गतः ॥ १५९ ॥

---

१५८-१५९ । इदं श्लोकद्वयं ग-पुस्तके नास्ति । अस्य ऐतिहासिकी वार्त्ता तत्त्वतः कुत्रापि नाधिगम्यते । केवलमेव सुरथस्य राज्यनाशोऽश्वार्थं युध्यमानस्य जैमिनीयेऽश्वमेधे, मार्कण्डेये च वैरहेतुको दृश्यते । सगरस्य चाश्वकारणेन वंशक्षयो महाभारते प्रसिद्धः । अश्वदोषेणेति न प्राप्यते प्रमाणम् । रावणस्य विनाशे अश्वदोषहेतुत्वं नैव दृश्यते ॥

---

१ । वड़वाजातु । खः ।　　३ । द्विवर्षन्तु । खः ।
२ । निगूढवृषणाश्च । कः ।　　४ । ततस्तथा । तद्द्वयोः । कः ।

उत्पाताः ।

अतःपरं प्रवक्ष्यामि तुरगाणां विभागतः ।
ज्वलितेन यथाङ्गेन फलं वाच्यं शुभाशुभम् ॥ १६० ॥
यदा ज्वलति वाहस्य सर्व्वगात्रे हुताशनः ।
तदा विन्द्यादनावृष्टिमब्दमेकं न संशयः ॥ १६१ ॥
अन्तःपुरविनाशस्तु मेहने ज्वलिते भवेत् ।
उदरे वित्तनाशस्तु[1] पायौ पुच्छे पराजयः ॥ १६२ ॥
उत्तमाङ्गे च वक्त्रे च स्कन्धे चैवासने तथा ।
भर्त्तुर्जयाय वाहानां ज्वलनं यच्च नेत्रजम् ॥ १६३ ॥
धूमं ललाटे वाहस्य तथा वक्षसि निन्दितम् ।
तथैव[2] ज्वलनं शस्तं यथा नासासमुद्भवम् ॥ १६४ ॥
यदा व्याधिं विना वाजी ग्रासं त्यजति दुर्म्मनाः ।
अश्रुपातञ्च कुरुते तदा भर्त्तुरशोभनम् ॥ १६५ ॥

---

१६१ । नकुलस्त्वत्र स्फुलिङ्गदर्शनस्य पराजयसूचकत्वमाह । यथा— "स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः । परचक्रागमात्तेषां विज्ञेयो हयपण्डितैः" इति ॥

१६५ । अत्र नकुलोऽप्येवमाह । यदाव्याधिं विनेत्यादि ॥

---

१ । वित्तनाशाय । गः ।    २ । तथैव । गः ।

स्वयमेव यदा वक्त्रं हृष्टो ढौकयते[1] हयः।
रणं कृत्वा[2] प्रयाणे तु तदा विद्याज्जयं प्रभोः॥ १६६॥
सर्व्वदैव शिरोघ्नस्तु[3] सर्व्वेषां नैव पूजितः।
वामपादाभिघातस्तु प्रभोर्यात्रानिषेधकः॥ १६७॥
स्वामिन्यारूढ़माचे तु[4] दक्षिणं पार्श्वमात्मनः।
तुरङ्गमो यदा पश्येत्तदा भर्त्तुर्जयो भवेत्॥ १६८॥
पुच्छभागं[5] यदा वाहो वामतो विकिरेत्तदा।
तदा भर्त्तुः प्रवासः स्याद् दक्षिणे विजयस्तथा॥ १६९॥
प्रकिरन्ति[6] यदात्यर्थं सर्व्वं पुच्छं तुरङ्गमाः।
अकस्मादेव जाताश्च तेषां भीतिः प्रभोः स्मृता॥ १७०॥

छायाः।

छाया वाजिशरीरेषु शुभाशुभनिवेदिनी।
वाजिनश्च प्रभोश्चैव तां ब्रवीम्यनुपूर्व्वशः॥ १७१॥

---

१७१। छाया लावण्यविशेषः।
१७२। पद्मरागाभयेति पद्मरागो मरकतः।

---

१। ढौकयते॥ गः।
२। कालिकायाः। गः।
३। शिरोघ्नस्तु। गः।
४। स्वामिना रूढमात्रेण। खः।
५। पुच्छं वाहं। खः।
६। प्रकिरन्ते। खः।

सुस्निग्धा पार्थिवी[1] छाया नानाज्योतिःसमन्विता[2] ।
पद्मरागारुणा चैवमाग्नेयी परिकीर्त्तिता ॥ १७२ ॥
शुद्धस्फटिकसंकाशा सुस्निग्धा चैव वारुणी ।
रूक्षा दीना च वायव्या परुषा[3] चैव निन्दिता ॥ १७३ ॥
पार्थिवी च तथाग्नेयी वारुणी या च कीर्त्तिता ।
तिस्रस्तु शुभदा[4]श्छाया वायवी त्वशुभप्रदा ॥ १७४ ॥
प्रस्विन्नानां[5] भवेद्गन्धो वाहानां गात्रसम्भवः ।
मतिमद्भिः स निर्द्दिष्टः शुभाशुभनिवेदकः[6] ॥ १७५ ॥
मनसः कुरुते तुष्टिं[7] घ्राणमार्गगतस्तु यः ।
स शुभो वाजिनां गन्धो विपरीतोऽतिकुत्सितः ॥ १७६ ॥
शुभगन्धो भवेद्वाजी धनपुत्रप्रदः[8] प्रभोः ।
मित्रावाप्तिजयञ्चैव कल्याणञ्च नियच्छति ॥ १७७ ॥

---

१७५ । प्रस्विन्नानां सञ्जातघर्म्माणामित्यर्थः ।

१७७ । शुभगन्धादेर्ज्ञानिसूचकत्वे,—नकुलः ।

---

१ । पृथिवी । खः ।
२ । नानायुति । खः ।
३ । पुरुषैश्चैव । खः ।
४ । शुभप्रदाः । खः ।
५ । प्रस्थितानां । खः ।
६ । निवेदिकः । कः ।
७ । मनसा कुरुते पुष्टिं । गः ।
८ । धनमायुःप्रदः । खः ।

अनिष्टे[1] चैव गन्धे च सर्व्वमेतदनिष्टकम् ।
तस्मात्[2] सर्व्वप्रयत्नेन सुगन्धोऽश्वः प्रपूजितः ॥ १७८ ॥
संग्राह्यो न तु दुर्गन्धो नायकेन विजानता ।
यथाशास्त्रं[3] समुद्दिष्टो गन्धस्तौरङ्गमो[4] मया ॥ १७९ ॥

सत्त्वानि ।

अमेध्ये कर्दमे चैव वत्समूत्रे[5] विशेषतः ।
घृणा यस्यास्ति वाहस्य देवसत्वः[6] प्रकीर्त्तितः ॥ १८० ॥
पिशाचसत्वो मन्तव्यो व्यत्ययेन तुरङ्गमः ।

---

"शुभगन्धः सदा विप्रः क्षत्रियो गुग्गुलगन्धकः । घृतगन्धः सदा वैश्यो मीनामोदीच शूद्रकः" इति ॥

१८० । सत्वं स्वभावधर्म्मः । स च कान्तप्रगल्भदीर्घग्रीवानतिक्रूरानतिमृदुत्वादिरूपः । देवसत्वस्य लक्षणमाह शुकः । "अश्रुहीनमुखः कान्तः प्रगल्भोत्तुङ्गनासिकः । दीर्घोद्धतग्रीवमुखः ह्रस्वकुक्षिखुरश्रुतिः । तुरप्रचण्डवेगश्च हंसमेघसमस्वनः । नातिक्रूरो नातिमृदु र्देवसत्वो मनोरमः" इति ॥

---

१ । अनिष्टश्चैव गन्धे तु सर्व्वमेतत् प्रतीपकी । कः ।
२ । तस्य स्यात् स प्रयत्नेन सुगन्धोऽश्वस्य पूजितः । गः ।
३ । यथाशास्त्रोदितः । खः ।
४ । सौरभदेशजः । खः ।
५ । वत्समूत्रे । खः ।
६ । देवसत्वः । खः ।

दैवसत्वः शुभो भर्त्तुः पैशाचश्चाशुभः स्मृतः ॥ १८१ ॥

प्रमाणम् ।

सार्द्धं[1] यवत्रयं प्रोक्तमङ्गुलस्य तपोधनैः ।
प्रमाणं शालिहोत्राद्यै र्वाजिशास्त्रविशारदैः ॥ १८२ ॥
हस्तोऽङ्गुलानां विंशत्या चतुरुत्तरया स्मृतः ।
चतुर्हस्तैस्तु विख्यातः शास्त्रोक्तैरुत्तमो हयः ॥ १८३ ॥
अर्द्धहस्तेन हीनस्तु भवेन्मध्यस्तुरङ्गमः ।
मुष्टिमूर्न्येन हस्तेन हीनश्चाप्यधमः स्मृतः ॥ १८४ ॥

---

१८१ । व्यत्ययेन देवसत्वगुणवैपरीत्येन कर्द्दमादौ घृणाराहित्य-रूपेणेत्यर्थः । देवसत्व इत्यादिपाठः पुस्तकान्तरे नास्ति ॥

१८२ । शुक्रस्तु वाजिमाने पञ्चयवात्मकमङ्गुलमाह—"पञ्च-यवाङ्गुलेनैव वाजिमानं पृथक् स्मृतम्" इति । सार्द्धमित्यादि मध्य-स्तुरङ्गम इत्यन्तः पाठः क-पुस्तके नास्ति ॥

१८३ । एतन्मते चतुर्विंशत्यङ्गुलपरिमितहस्तस्य हस्तचतुष्टयमौ-च्चत्यं । शुक्राचार्य्यमते तु औच्चन्तु मुखमानेन त्रिगुणमित्युक्तदिशा त्रिगुणचत्वारिंशाङ्गुलं विंशत्यधिकशताङ्गुलं वा भवति । नकुलमते तु अशीत्यङ्गुलं औच्चत्यं भवति । यथोक्तम्-"अशीत्यङ्गुल उत्सेधः" इति ॥

१८४ । सार्द्धत्रिहस्तपरिमितोऽमध्यम इति चतुरशीत्यङ्गुलो भवति । शुक्राचार्य्यमते तु पञ्चयवाङ्गुलपरिमाणस्य षष्ठत्यङ्गुलत्वः ॥

---

१ । ऊर्द्धम् ।

ऊर्द्धमानप्रमाणन्तु परिणाहं विनिर्द्दिशेत् ।
उत्तमानां[1] च मध्यमानां हीनानाञ्चैव वाजिनाम् ॥१८५॥
अर्द्धसप्तमहस्तन्तु श्रेष्ठं दैर्घ्येण निर्द्दिशेत् ।
षड्भिर्मुष्टिविहीनैश्च मध्यमश्च विचक्षणः ॥ १८६ ॥
पञ्चहस्तप्रमाणात्तु[1] जघन्यः समुदाहृतः ।
द्वात्रिंशदङ्गुलं वक्त्रमुत्तमाश्वस्य कीर्त्तितम् ॥ १८७ ॥

---

अधमस्य परिमाणं मुष्टिशून्येन हस्तेन हीनः त्रिहस्तः । शुक्राचार्य्यमते तु चतुरशीत्यङ्गुलोन्नतोऽधम इति ।

१८५ । परिणाहो विस्तारः । स च सर्व्वेषामेव वाजिनां स्वस्वोन्नत्येन समानः । उदरपरिणाहन्तु शुक्रः अङ्गुलाधिकं त्रिगुणं मुखपरिमाणादाह । "परिणाहस्तूदरस्य त्रिगुणस्त्र्यङ्गुलाधिकः" इति ॥ उत्तमानाञ्चेत्यादि—निर्द्दिशेदित्यन्तः पाठः क—पुस्तके नास्ति । मध्यमानां स्थाने मध्यानामिति पाठो युक्तः ।

१८६ । एतन्मते सार्द्धत्रियवाङ्गुलस्य चतुस्त्रिंशदङ्गुलहस्तपरिमाणस्य सार्द्धषड्हस्तमुत्तमस्य दैर्घ्यम् । शुक्रमते तु पञ्चयवपरिमिताङ्गुलस्य द्वात्रिंशाधिकशताङ्गुलम् ।"शिरोमणिं समारभ्य पुच्छमूलान्तमेवहि । तृतीयांशाधिकं दैर्घ्यं मुखमानाच्चतुर्गुणम्" इति । दीर्घन्तु अधिकं शतमिति च । अस्य श्लोकस्य प्रथमपादद्वयं ग-पुस्तके नास्ति ॥

१८७ । उत्तमाश्वमुखमानं द्वात्रिंशदङ्गुलम् । शुक्रमते तु चत्वारिंशाङ्गुलम् । तदुक्तम् "चत्वारिंशाङ्गुलमुखो वाजी यश्चोत्त-

---

१ । पञ्चहस्तप्रमाणन्तु । ख ।

पृष्ठं वक्षः कटिश्चैव मुखतुल्यं समादिशेत्।
अङ्गुलद्वयहीनन्तु मुखादि मध्यमाधमम्॥ १८८॥
निर्द्दिशेन्मतिमांश्चैव[1] वाजिशास्त्रविशारदः।
समाङ्गुलं खुरश्चैव उत्तमाश्वस्य कीर्त्तितम्॥ १८९॥
षडङ्गुलो भवेन्मध्यो जघन्यश्चतुरङ्गुलः।

सोत्तमः। सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते" इति। नकुलमते च सप्तविंशत्यङ्गुलम्॥

१८८। पृष्ठवक्षःकटिमानन्तु द्वात्रिंशदङ्गुलमित्यर्थः। शुक्रमते तु "वाजिनां मुखमानेन सर्व्वावयवकल्पना" इति वचनात् पृष्ठादीनां मानमपि चत्वारिंशदङ्गुलं ज्ञेयम्। नकुलमते च पृष्ठं चतुर्विंशाङ्गुलं वक्षः षोड़शाङ्गुलं कटिश्च सप्तविंशाङ्गुलेति। तदुक्तं "पृष्ठवंशः चतुर्विंशः सप्तविंशा तथा कटी। हृदयं षोड़शाङ्गुल"मिति। अङ्गुलद्वयहीनमिति मध्यमस्य त्रिंशदङ्गुलम्। अधमस्य च अष्टाविंशाङ्गुला मुखाद्यवयवा इत्यर्थः। अत्र शुक्रः। "द्वात्रिंशदङ्गुलमुखो मध्यमः स उदाहृतः। अष्टाविंशदङ्गुलो यो मुखे नीचः प्रकीर्त्तितः" इति॥

१८९। नकुलमते खुरपरिमाणं चतुरङ्गुलम्। तदुक्तं-"खुराश्च चतुरङ्गुलाः" इति।

१९०। मध्यजघनादिपरिमाणं नकुलस्य मते चतुश्चतुरङ्गुलम्। कर्णतात्वादिपरिमाणमाह नकुलः—"कर्णौ षडङ्गुलौ प्रोक्तौ तालुकं

१। [illegible]मान् वैद्यः। खः। २। चोत्तमे हये। खः।

षोड़शाङ्गुलदीर्घा तु जंघा चैवोत्तमा[1] स्मृता ॥ १९० ॥
चतुर्द्दश तथा मध्ये हीने[1] च द्वादशाङ्गुलः ।
एवंविधप्रमाणन्तु निर्द्दिष्टं शास्त्रशालिभिः ॥ १९१ ॥
अपाङ्गात् पुच्छमूलन्तु दैर्घ्येणाश्वं प्रमाणयेत् ।
खुरान्तात् ककुदं यावदूर्द्ध्वमानेन बुद्धिमान् ॥ १९२ ॥
वक्षोभागे तु संवेष्ट्य रज्वा वा सूचकेण वा ।
परिणाहं तुरङ्गस्य मापयेन्मतिमान् भिषक् ॥ १९३ ॥
एवं प्रमाणभागेन विभक्ताङ्गः शुभः स्मृतः ।
अतो हीनाधिकाङ्गाश्च हरयो नैव पूजिताः ॥ १९४ ॥

इति श्रीजयदत्तकृतेऽश्वशास्त्रे सर्व्वलक्षणे
तृतीयोऽध्यायः ।

---

चतुरङ्गुलम् । चत्वारिंशच्च सप्ताद्याः स्कन्धाः सम्यक् प्रकीर्त्तिताः । अतिसूक्ष्मं तथानिशं पुच्छं हस्तद्वयायतम् । लिङ्गं हस्तप्रमाणञ्च तथाण्डौ चतुरङ्गुलौ । मार्गस्थानं चतुर्विंशं । कटिकद्यान्तरं प्रोक्तं चत्वारिंशत् प्रमाणतः । मणिबन्धद्वयञ्चैव खुराश्च चतुरङ्गुलाः" इति ॥

१९२—१९३ । दैर्घ्यानत्यपरिणाहमानोपायमाह अपाङ्गादिति ।

---

१ । मध्या हीना । कः ।

## अथ चतुर्थोऽध्यायः ।

### आयुः ।

आयुर्लक्षणमश्वानामत ऊर्द्ध्वं प्रचक्षते[1] ।
शालिहोत्रादिनिर्द्दिष्टं[2] यथापूर्व्वं तपोधनैः ॥ १ ॥
सुसंहितास्तु[3] ये वाहा ह्रस्वकर्णास्तथैव च ।
स्वरनेत्रस्वभावेषु न हीनाश्चिरजीविनः ॥ २ ॥
महाघोणा महाकाया ये चाश्वाः पृथुवक्षसः ।
तेषां दीर्घं भवेदायुः स्निग्धाङ्गा[4] ये च सर्वदा ॥ ३ ॥
कर्णाग्रे पीड़िते येषां सिन्दूराभस्य दर्शनम् ।
शोणितस्य भवेत् क्षिप्रं ते मताश्चिरजीविनः ॥ ४ ॥
न विष्किरन्ति ये वालं स्वग्रासाय तुरङ्गमाः ।
न वा जिघ्रन्ति ये चापि तेऽपि दीर्घायुषो मताः ॥ ५ ॥

---

२ । सुसंहिताः सुघठितकलेवरा इत्यर्थः ।

---

१ । प्रवक्ष्यते । कः ।
२ । शालिहोत्रादिभिर्द्दिष्टं । खः ।
३ । सुसंहृताः । खः ।
४ । स्निग्धाङ्गाश्चैव ये सदा । खः ।

कुष्टिकानां क्रिया येषां दृश्यन्ते वाजिनां स्फुटाः।
प्रतिस्रोतः पिबन्त्यम्भो ये च ते दीर्घजीविनः॥ ६॥
पद्मपत्रदलाकारं जिह्वाग्रं यदि वाजिनाम्।
दन्ताश्च मौक्तिकाकारा लिङ्गं येषाञ्च निर्म्मलम्॥ ७॥
शीत्कारञ्च भवेद् येषां[1] लाङ्गूलं क्षिपतां पुनः[2]।
प्रस्वेदः शुभगन्धस्तु नखा[3] वै दर्पणोपमाः॥ ८॥
येषाञ्च दृढरोमाणि ते सर्व्वे चिरजीविनः।
स्निग्धगम्भीरदीर्घाश्च प्रोथजा यस्य वाजिनः।
भवन्ति विपुला रेखास्तं विद्याद्दीर्घजीवितम्॥ ९॥
छत्रचामरभृङ्गारखड्गशंखाजसन्निभाः।
शुक्तिवज्रदलाकारा-ध्वजभद्रासनोपमाः[4]॥
श्रीवृक्षस्वस्तिकाभासाः प्रोथरेखा[5]श्चिरायुषाम्॥१०॥
ऊर्द्ध्वं प्रोथे सिता रेखा यस्य वामेन चोन्नता[6]।
ह्रस्वा वा यस्य वाहस्य न चिरं तस्य जीवितम्॥ ११॥
ऊर्द्ध्वं प्रोथे[7] समा रेखा दृश्यन्ते यदि[8] वाजिनः।
तस्य मृत्युः समुद्दिष्टो दशमं प्राप्य वत्सरम्॥ १२॥

---

१। वापि। कः।
२। लाङ्गूलं चालनं पुनः। गः।
३। नखाश्च। गः।
४। पद्मासनोपमाः। खः।
५। प्रोथोत्थिता। खः।
६। चोन्नताः।
७। प्रोथ। खः।
८। यस्य। खः।

त्र्यङ्गुला द्वादश द्वे[1] च वर्षाणां तस्य जीवितम्।
त्रयोदशाब्दं जीवेद् यो रेखाः स्युश्चतुरङ्गुलाः ॥ १३ ॥
तिर्य्यग्गे चोर्द्धगे चैव रेखे द्वे यस्य वाजिनः[2]।
ग्रीवजे यस्य वाहस्य तस्य विद्याच्चतुर्द्दश ॥ १४ ॥
वामेन[3] वा दक्षिणेन शेते यश्चैव सर्व्वदा।
बहुमूत्राल्पमूत्रश्च चिरं जीवति नो हयः ॥ १५ ॥
विनतः पूर्व्वकायेन स्थूलजानुश्च यो हयः।
भ्रूनाक्षिकूटस्तब्धाक्षः[4] स्वल्पायुः स प्रकीर्त्तितः ॥ १६ ॥

वयः।

लक्षणेनापि संयुक्ता वयोवृद्धास्तु वाजिनः।
नैव कार्य्यकरा[5] येन ज्ञेयं तेषामतो[6] वयः ॥ १७ ॥

---

१५। अथ बह्वाहारस्याल्पमूत्रपुरीषस्य शीघ्रविनाशित्वं नकुल आह। "बह्वाहारः सुखशीलस्त्यजेत्तालाभ्र यो भृशम्। अल्पमूत्रपुरीषश्च सोऽपि शीघ्रं विनश्यति" इति ॥

१६। अस्मिन् विषये शुक्रः,—"दन्तानामुद्गमैर्व्वर्णैरायुर्ज्ञेयं हयाश्वयोः" इति ॥

१७। लक्षणेति। तेनेति येन हेतुना। अतो हेतोः बुधैः तेषां ज्ञेयं वय इति शेषः ॥

---

१। अङ्गुलद्वादशाब्दे च। गः।
२। जायते। गः।
३। दक्षिणेन च पार्श्वेन। खः।
४। भ्रूनाक्षिकूटरुक्षश्च। गः।
५। कार्य्यक्षमाः। गः।
६। ज्ञेयं तेषामितोऽन्यथा। खः।

जातदन्तद्वयं बाल्ये पतत्यब्दे तृतीयके ।
चतुरो दशनान् विन्द्याच्चतुर्थे पतितोत्थितान् ॥ १८ ॥
पञ्चमे पतितोद्भूतान् षड्वदन्ति[1] मनीषिणः ।
षष्ठाष्टासु च सर्व्वेषु[2] कालिकादिसमुद्भवः ॥ १९ ॥
कालिका हरिणी शुक्ला[3] काचा चैव समाक्षिका ।
शङ्खा चैव क्रमेणाश्ववयसः परिसूचिका ॥ २० ॥

---

१८ । बाल्ये पञ्चवर्षात्मककाले । तस्य पञ्चवर्षात्मकत्वे शुक्रः,—
"बाल्यमश्वस्य षोडशानां पञ्चसंवत्सरं मतं । मध्यं यावत् षोडशाब्दं वार्द्धकन्तु ततःपरम्" इति । अतएव वाजिनां बाल्यं पञ्चवर्षपर्य्यन्त-कालः । षष्ठादाषोड़शाब्दं यौवनम् । अत ऊर्द्धं वार्द्धक्यम् ।
जातदन्तद्वयम् इति जातेषु दन्तेषु षट्सु मध्ये द्वयं । "अश्वस्य षट् सिता दन्ताः प्रथमाब्दे भवन्ति हि । कृष्णलोहितवर्णास्तु द्वितीयेऽब्दे ह्यधोगताः" इति शुक्रः । पतितोत्थितान् आदौ पतितान् पश्चाद् उत्थितान् द्वितीयवारप्ररूढ़ानित्यर्थः ॥

१९ । षष्ठाष्टास्विति । षष्ठाद् वर्षाद् अष्टासु षष्ठसप्तमाष्टमेषु । सर्व्वेषु दन्तेषु ॥

२० । यदुक्तं कालिकादिसमुद्भव इति तदेव विवृणोति कालिकेति ॥

---

१ । दन्तांश्च । ग । २ । वर्षेषु । ख । ३ । शुक्लाः । ग ।

वक्रा तु[1] कालिका रेखा कृष्णा दन्ताग्रसंश्रिता ।
षष्ठे च सप्तमे वर्षे चाष्टमे च भवेत् क्रमात् ॥ २१ ॥
सा पीता हरिणी ज्ञेया कालिकास्थानमाश्रिता ।
नवमे दशमे वर्षे भवेदेकादशे तथा ॥ २२ ॥
कृष्णा चैव भवेच्छुक्ला दन्तमूर्ध्नि समुद्भवा ।
द्वादशाब्दं[2] समारभ्य[3] भवेद् यावच्चतुर्दश ॥ २३ ॥
सिता सिद्धार्थकाकारा काचेति परिकीर्त्तिता ।
पञ्चदशाब्दमारभ्य यावत्सप्तदशादितः[4] ॥ २४ ॥
माक्षिका माक्षिकाकारा[5] भवेदष्टादशादिषु[6] ।

---

२१ । कालिकारेखायाः स्थानाकारावाह । वक्रेति । कालिकायाः कालनिर्व्वाचनन्तु अत्र विशेषेण करोति षष्ठ इति ॥

२२ । हरिणीप्रभृतिरेखाणां स्थानकाललक्षणान्याह । सापीते-त्यादि-पञ्चभिः श्लोकैः ॥

२४ । अत्र शुक्लस्तु पञ्चदशाब्दादाह "दशपञ्चाब्दतस्तौ तु काचाभौ क्रमतः स्मृतौ" इति ॥

२५ । शुक्लोऽपि माक्षिकायामष्टादशाद्याह,—"अष्टादशाब्दतस्तौ हि मध्वाभौ भवतः क्रमात्" इति ॥

---

१ । वक्रान्ते । गः ।
२ । द्वादशाब्दात् । खः ।
३ । मासभेदा । गः ।
४ । सप्तदशाधिका । गः ।
५ । मक्षिकाकारा । खः ।
६ । षष्ठदशाधिका । गः ।

विंशत्यन्तेषु सर्वेषु वाजिनां दशनोद्भवः[१] ॥ २५ ॥
वयोविंशावसानेषु एकविंशादिषु त्रिषु ।
शङ्खरूपा[२] भवेच्छङ्खा पूर्वोक्त[३]स्थानमाश्रिता ॥ २६ ॥
छिद्रञ्च चलनं चैव तथा पातश्च यः स्मृतः ।
नवाब्दतः क्रमाद्दिद्याच्छङ्खनं तुरगात्[४] स्मृतम् ॥ २७ ॥
अतिवृद्धाः कषायाश्च तनवश्चैव ये द्विजाः[५] ।
ते भवन्ति द्विवर्षस्य शुक्लाश्चैवाब्दजन्मनः[६] ॥ २८ ॥
अखण्डशिरसः[७] सूक्ष्मा भवन्त्यपतितोत्थिताः ।

२६ । शङ्खाभे शुक्रोऽपि एवमाह यथा,—"शङ्खाभौ चैकविंशाब्दाच्चतुर्विंशाब्दतः सदा" इति ॥

२७ । "छिद्रं सच्चलनं पातो दन्तानाञ्च त्रिके त्रिके" इति शुक्रस्त्रिवर्षानन्तरमाह । व्यञ्जनं कालिकादिप्रकाशनमित्यर्थः ॥

२८ । दन्तोद्भेदपतनपुनरुत्थानादिकमुक्त्वा एकद्विवर्षजातानां लक्षणमाह "अतिवृद्धाः" इति ॥

२९ । अपतितोत्पतितोत्थानां परीक्षामाह अखण्डेत्यादि । अखण्डशिरस इति दन्तस्य निम्नकृष्णायतं खातमिति जयदत्तेन व्याख्-

१ । दशनोद्भवा । खः ।　　४ । तुराद्गतम् । खः ।
२ । शङ्खाकारा । खः ।　　५ । अयः । खः ।
३ । प्रयुक्त । खः ।　　६ । युक्ता चैव द्विजानां । खः ।
　　७ । इंष्टा । खः ।

खल्लाग्रा विपुला दन्ता भवन्ति पतितोत्थिताः॥ २९॥
खल्लभागे विनापूर्णे[1] व्यञ्जनानां न सम्भवाः[2]।
पूर्णेषु खल्लभागेषु जायन्ते कालिकादयः॥ ३०॥
निम्नं कृष्णञ्च दन्ताग्रं खल्लमित्यभिधीयते।
पूर्णतां तस्य जानीयात् षष्ठात्[3] प्रभृति वत्सरात्॥ ३१॥
खल्लेषु[4] कालिकाभावा नात्र कार्य्या विजानता।
नियता कालिका रेखा सुपूर्णे दन्तमस्तके॥ ३२॥
द्वयोर्भवति षष्ठेऽब्दे चतुर्णां सप्तमे तथा।
षण्णामष्टासु[5] वर्षेषु दन्तानां कालिकाक्रमः[6]॥ ३३॥
कालिकानुक्रमेणैव हरिण्यादिषु बुद्धिमान्।
द्वौ द्वौ वर्षौ जानीयाद्वाजिनां व्यञ्जनं प्रति॥ ३४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे आयुर्वेयोज्ञाने चतुर्थोऽध्यायः।



---

मेव लक्षणं परतः स्मृतम्। प्रशस्तं निम्नकृष्णान्तरहितं शिरो येषां ते तथोक्ताः॥

---

१। विनादूर्द्धं। ग।
२। सम्भूताः। ख।
३। षष्ठप्रभृतिवत्सरः। ख।
४। यान्तिनैव। ख।
५। षण्णामष्टासु। ख।
६। क्रमात्। ख।

## अथ पञ्चमोऽध्यायः ।

दशाक्षेत्रविवरणम् ।

दशादशकमश्वानां जीवितं परिकीर्त्तितम् ।
प्रवरं वाजिनामेतद् ब्रह्मणा सृजता प्रजाः ॥ १ ॥
वासराः सप्ततिर्द्वौ च वर्षाणाञ्च तथा त्रयम् ।
दशाप्रमाणं वाहानां शालिहोत्रेण कीर्त्तितम् ॥ २ ॥
प्रथमे प्रथमा चैवं द्वितीया च द्वितीयके ।
दशा एवं क्रमेणैव भवेत् क्षेत्रफलप्रदा ॥ ३ ॥
अपानादौ ललाटे तु प्रथमं क्षेत्रमुच्यते ।
ललाटान्मस्तकं यावद् द्वितीयं समुदाहृतम् ॥ ४ ॥
ग्रीवास्कन्धावधिच्छिन्नं तृतीयं परिकीर्त्तितम् ।
उरोजन्तु तथांशे च ककुदं काकसं तथा ॥ ५ ॥
चतुर्थं विहितं क्षेत्रं पञ्चमं चांसकं भवेत् ।
कटिं वदन्ति षष्ठञ्च सप्तमं स्फिगुदाहृतम् ॥ ६ ॥
खुरकौ चाष्टमं क्षेत्रं जंघा च नवमं स्मृतम् ।
कूर्चसन्धिः खुरं चैव दशमं परिकीर्त्तितम् ॥ ७ ॥
एवं बुद्धा भिषक् प्राज्ञः सदृशं फलमादिशेत् ।
क्षेत्रसाम्ये दशायास्तु वयोज्ञानपरायणः ॥ ८ ॥
ककुदावर्त्तिनोऽश्वस्य तथा शृङ्गान्वितस्य च ।
सर्वकालं फलं दुष्टं दशा तत्र निरर्थका ॥ ९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे दशाक्षेत्रीये पञ्चमोऽध्यायः ।

## अथ षष्ठोऽध्यायः ।

### जन्मदेशाः ।

अश्वानां जन्मदेशांस्तु प्रवक्ष्याम्यनुपूर्व्वशः ।
उत्तमानाञ्च मध्यानां हीनानां यत्र[1] सम्भवः ॥ १ ॥
उत्तमास्ताजिकाः प्रोक्तास्तथा पारसिकाश्च ये ।
केकाणाश्चैव ये वाहाः पृष्ठजा ये च कीर्त्तिताः ॥ २ ॥
तुरौ[2] जाताश्च कीराश्च भूरुष्टा भाण्डजाश्च ये ।
पार्व्वताः सैन्धवा मध्यास्तथा सारस्वता हयाः ॥ ३ ॥

---

१ । अश्वानां जन्मदेशभेदेन उत्तमत्वादिभेदोऽपि नकुलेन प्रदर्शितः,—"उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे । चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयादिति"—अत्र हेमचन्द्रः । "आजानेयः कुलीनः स्यात् तत्तद्देशास्तु सैन्धवाः । वनायुजाः पारसीकाः काम्बोजा वाह्लिकादयः" इति च स स देशोऽश्वानां जन्मभूमिरिति ॥

२ । नकुलस्तु ताजिकखरशाणोत्तराणामुत्तमाश्वत्वमाह । "ताजिकाः खरशाणाश्च उत्तराश्चोत्तमा हयाः"—इति । तथा गोजिकाणकेकाणयोर्मध्यमाश्वत्वमाह यथा "गोजिकाणाश्च केकाणाः प्रौढाहाराश्च मध्यमाः" इति ॥

३ । "नकुलस्तु मध्यमाश्वं षड्विधमाह-तद्यथा "गोजिकाणाश्च केकाणाः प्रौढाहाराश्च मध्यमाः । भाण्डजाश्चोत्तमाश्चाश्च राजपूजाश्च मध्यमाः"—इति ॥ तुरौ तुरुष्कदेशे ॥

---

१ । हीनानाञ्चैव सम्मतः । खः ।
२ । काश्मीरदेशजाताश्च सैन्धवा मध्यमाः स्मृताः । कः । उरौ । खः ।

सम्भलांश्चाः कृशाश्चैव[1] जटदेशोद्भवाश्च[2] ये।
अधमाष्टकृष्टैः सार्द्धं हये[3] प्राग्दक्षिणोद्भवाः ॥ ४ ॥
हस्तदीर्घाञ्चितग्रीवा[4] ह्रस्वकर्णा महाजवाः।
महाकाया महोरस्का निस्त्रासास्ताजिका मताः ॥ ५ ॥
अत्यन्तविततं येषां निर्मांसञ्च मुखं भवेत्।
पीनेन कटिदेशेन मुखराश्च भवन्ति ते ॥ ६ ॥
अध्वन्याश्च[5] महासाराः संग्रामे चैव पूजिताः।
अपि शस्त्रहताङ्गाश्च नैव मुञ्चन्ति सादिनम् ॥ ७ ॥
पारसीकास्ताजिकाभा[6] कोङ्काणाः केचिदुन्नताः[7]।
स्थूलाः श्लक्ष्णशरीराश्च[8] प्रधाना दीर्घपृष्ठकाः ॥ ८ ॥

---

४। सम्भलाः सम्भलदेशजाताः। प्राग्दक्षिणोद्भवाः—इति पूर्व्व-दक्षिणदेशजाता अश्वा अधमाः। नकुलेनतु गोकरादीनामधम-लक्षणम्। यथा "गोकराः सवरासाश्च सिन्धुपाराः कनीयसः। अन्य-देशोद्भवा ये च नीचनीचाश्च ते स्मृताः" इति ॥

५। महाजवा महावेगवन्तः। निस्त्रासा निर्भयाः ॥

८। श्लक्ष्णशरीराः कृशकायाः। श्लक्ष्णं दभ्रं कृशं तन्वित्यमरः ॥

---

१। कृशाः। खः।
२। जटादेशोद्भवाः। खः।
३। अधमानां गणाः। गः।
४। हस्तदीर्घाञ्चितग्रीवाः। गः।
५। अजातास्या महाशूराः संग्रामे नैव पूजिताः। गः।
६। स्युरधिकाः। खः।
७। किंचिदूनकाः। खः।
८। स्थूलश्लक्ष्णशरीराश्च। खः।

केकणादेशजातानां मध्यमानाञ्च वाजिनाम्।
ताजिकैः सदृशं वक्त्रं बाहुल्येन विनिर्द्दिशेत्[8] ॥ ९ ॥
सुवृत्तदेहस्तीक्ष्णश्च सप्रमाणेन मध्यमः।
उत्तजातः[1] समुद्दिष्टः किञ्चित् स्थूलो मनाग्जवः[2] ॥ १० ॥
अतिस्थूलोऽतितीक्ष्णश्च[3] ह्रस्वग्रीवस्तुरुस्तथा।
तुरुष्कः कीर्त्तितो वाजी स्थूलवक्त्र[4]मुखश्च यः ॥ ११ ॥
केकनाकारदेहस्तु[5] भवेन्माण्डविको हयः।
शान्त्या चैव[6] प्रमाणेन केवलं नैव तत्समः ॥ १२ ॥
सिन्धुदेशोद्भवो वाजी पृष्ठन्यग्धारकीरकः[7]।
आननञ्चापि दीर्घञ्च तस्य पृष्ठं प्रकीर्त्तितम्[8] ॥ १३ ॥

---

९। केकणः कोङ्कणस्य तुल्य एव ॥

१०। मनाग्जव इत्यपेक्षया मनोजव इति पाठः साधीयान् मध्यमस्य मनाग्जवत्वस्यासङ्गतत्वात् ॥

---

१। अत्युन्नतः। गः।
२। कीरस्थूलो मनोजवः। गः।
३। सूक्ष्मश्च ह्रस्वग्रीवस्तनुस्तथा। गः।
४। वंश। गः।
५। केकाणकारस्तु भवेन्माठविको हय। गः।
६। शान्त्या नैव। गः।
७। प्रधानस्यानुकारकः। गः।
८। समादिशेत्। गः।

## अथ सप्तमोऽध्यायः ॥

बाहनविधाने

विप्रादितद्वाहनविवरणम्।



ब्रह्मणैव यथोद्दिष्टो वाहानां वाहने[१] विधिः।
सारन्तस्य समुद्धृत्य सर्व्वं तत्कथयाम्यहम्॥ १॥
तुरङ्गवाहकस्यापि दोषस्य च गुणस्य च।
विशेषन्तु विधानेन तत्सर्व्वं कथयाम्यहम्॥ २॥

२। अश्वानां दोषगुणविषये नकुलेनैवमुक्तम्। तुरङ्गवाहकस्यापीति अपि शब्देन तुरङ्गस्यापि। दोषगुणौ वाहनादिशिक्षासम्भवाविति ज्ञेयौ॥ दोषस्येति अनेन स्थूलत्वमूर्खत्वक्रोधित्वादिकं तथाऽस्थानदण्डपातित्वादिकं बोद्धव्यम्॥ गुणस्य चेत्यनेन समनन्तरमेव वक्ष्यमाणं हयहृदयाभिज्ञत्वादिकं बोद्धव्यम्॥ सत्वेन इति सत्वं नाम अश्वानां नैसर्गिकं तेजो दर्पो वा त्रिविधगुणस्वाद्यः। यथाह भोजः,—"तेजोनिसर्गजं सत्त्वं वाजिनां स्फुरणं रजः। क्रोधस्तम इति ज्ञेयास्त्रयोऽपि सहजा गुणाः"-इति। जातिरूपेण इति जातिस्वरूपानुसारेणेत्यर्थः॥

१। वाहनो विधिः। गः।

सत्वेन[1] जायते जाती रूपेण तु च वाह्ययेत् ।
सामप्रधानं[2] दण्डञ्च त्रिविधं विनियोजयेत् ॥ ३ ॥
चासी लुब्धो दयालुश्च[3] विप्रः स परिकीर्त्तितः ।
शूरश्च[4] दृढ़मन्युश्च क्षत्रियस्तुरगः स्मृतः ॥ ४ ॥
पापिनः कल्मषा रूक्षा[5] दुष्टा वैश्याः प्रकीर्त्तिताः ।
विरूपा विषमाश्चैव शूद्राश्चण्डा उदाहृताः ॥ ५ ॥

---

३। अश्वानां क्षत्रियादिचतुर्व्विधजातीनामुत्पत्तिमाह नकुलः,—"वाजिनो जलजाः केचिद्वह्निजातास्तथापरे । समीरप्रभवाश्चान्ये उलूकमृगजास्तथा ॥ जलोद्भवा द्विजातीयाः क्षत्रिया वह्निसम्भवाः । समीरप्रभवा वैश्या एणोलूकास्तु शूद्रकाः"—इति । अपिच,—"विवेकी सदृशोविप्रः तेजस्वी क्षत्रियो बली । दुष्टभावस्तथा वैश्यः शूद्रो निःसत्वकारकः"—इति । एषां त्रिविधदण्डमप्याह नकुलः,—"ब्राह्मणः सामवाह्यो च भेदवाह्यो च क्षत्रियः । उपादानेन वैश्यः स्यात् शूद्रो दण्डेन ताड़ितः"—इति ॥ त्रिविधं दण्डमिति उत्तममध्यमाधमत्वेन त्रिरूपं दण्डमित्यर्थः ॥

४—५। क्षत्रियादीनां लक्षणमाह चासीत्यादिना श्लोकद्वयेन । पापिनोऽमङ्गलाः । विरूपाः कुत्सितरूपाः । विषमा विसदृशाङ्गा अङ्गसौष्ठवरहिता इत्यर्थः ॥

---

१। साम्येन जायते जातिः जातिरूपेण वाह्ययेत् । खः ।
२। समप्रदानदण्डञ्च त्रिविधं । गः ।
३। रसालुब्धः सुधातुश्च । गः ।
४। शूरश्चैव दृढ़ा मान्याः । गः ।　　५। कल्परूपाश्च । खः ।

ब्राह्मणान् शक्तिदानेन[1] साम्ना चैव तु क्षत्रियान्।
वैश्यं दण्डेन शब्देन शूद्रं दण्डेन वाहयेत्॥ ६॥
प्रत्यूषे वाहयेद्विप्रं क्षत्त्रियं प्रहरे गते।
वैश्यं सन्ध्यागते काले शूद्रं रात्रौ च वाहयेत्॥ ७॥

सत्वशक्तितद्वाहनविवरणम्।

सत्वञ्च त्रिविधं प्रोक्तमुत्तमाधममध्यमम्[2]।
उत्तमञ्चोपशामेन[3] साम्ना दण्डेन मध्यमम्॥ ८॥
शब्दाङ्गेन च दण्डेन वाहयेदधमं बुधः[4]।
सहजे निर्म्मले वाहे तैलदुग्धस्य रूपवान्[5]॥ ९॥

६। शक्तिदानेन इति यथोक्तवचनोच्चारणपूर्व्वकमारोहणात् प्राक् द्विजेऽश्वे यथावश्यकं द्विविधशक्तिसञ्चारणं कुर्य्यादित्यर्थः। शक्तिसञ्चारणवचनानि च जयदत्त एवास्मिन् प्रकरणे स्वयमेवाग्नेयादुद्धृत्य वक्ष्यति। यथा,—"हय गन्धर्व्वपुत्र त्वं शृणुष्व वचनं मम"—इत्यादि। साम्ना चैव तु क्षत्त्रियानिति आरोहणात् प्राक् परतो वक्ष्यमाणैर्यथोक्तवचनैः क्षत्त्रियमश्वं सान्त्वयन्नित्यर्थः। एतदप्याग्नेयपुराणादुद्धृतं जयदत्तेन यथा,—"स्मर राजेन्द्रपुत्रत्वं सत्यवाक्यमनुस्मर" इत्यादि॥

८। सत्वशक्तितद्वाहनप्रकरणमाह। सत्त्वं पूर्व्वं व्याख्यातम्॥

९। शब्दाङ्गेन दण्डेन इति केवलं शब्दरूपेण ताड़नेनेत्यर्थः।

१। भक्तिदानेन। गः। ३। उत्तमञ्चैव साम्येन। गः।
२। अधमोत्तममध्यमम्। गः। ४। त्रिभिः। गः।
५। सहजा निर्म्मला वाहास्तैलदुग्धमधारवत्। गः।

शक्तिश्च द्विविधा प्रोक्ता वलदौर्व्वल्यसम्भवा।
वलिष्ठो दुर्व्वलत्वेन दुर्व्वलोऽपि वलेन वा[1] ॥१०॥

रङ्गभूमिविवरणम्।

छलेनौपाधिकायाश्च सत्वं ज्ञात्वा च वाहयेत्।
सान्द्रां सुकठिनाञ्चैव पाषाणोदकसंयुताम् ॥११॥
तृणकाष्ठसमायुक्तां रङ्गभूमिन्तु वर्जयेत्।
समाञ्च विपुलाञ्चैव[2] किञ्चित्पांशुसमन्विताम् ॥
एकान्ते विजने रम्ये रङ्गभूमिन्तु कारयेत् ॥१२॥

---

रूपमाह सहजे इति। अत्र सहजादिशब्दत्रयं प्रथमान्तं भवितुं युज्यते। अन्यथा पाठो न लगति ॥

१०। शक्तिः वलसम्भवा दौर्व्वल्यसम्भवा चेति द्विविधा।

१२। समां नतु उन्नतानतां। विपुलां महतीं सुदीर्घप्रशस्तामित्यर्थः। किञ्चित्पांशुभिः अत्यल्पधूलिभिः समन्वितां युक्तां। इदं विशेषणं रङ्गभूमेरतिकाठिन्यं निवार्य्याश्वानां पादाघातेनाक्लेशकरत्वं सूचयति। अत्र नकुलः,—"समाञ्च विपुलाञ्चैव किञ्चित्पांशुसमन्वितां। एकान्ते विजने चैवं रङ्गभूमिं हयं नयेत्। सान्द्राञ्च कठिनाञ्चैव पाषाणोदकगर्त्तितां॥ तृणकाष्ठसमायुक्तां रङ्गभूमिं विवर्जयेत्" इति ॥

---

१। वलिष्ठे दुर्व्वलत्वञ्च वलित्वं दुर्व्वलेन च। गः।

२। सुविपुलाम्। गः।

दोषगुणताड़नविवरणम्।

स्थूलः क्रोधी च मूर्खश्च चित्तोत्सुकचलासनः।
अस्थाने दण्डपाती च वाजी तस्य न सिध्यति ॥१३॥
प्रचलति यस्य कटिरूर्द्धवाहुश्च दण्डवान्।
न तस्य वाहनं वाजी दुर्लक्ष्यं वाजिवाहितम्[1] ॥१४॥
दृढ़ासनोऽथ तत्वज्ञो जितमुष्टिर्[2]निरालसः।
अविरागी[3] स्थिरश्चापि षड़ेते वाजिवाहकाः ॥१५॥

---

१३। अतःपरं दोषगुणताड़नविवरणमाह,—

१४। दुर्लक्ष्यं वाजिवाहितमिति वाजिवाहितं दुःखेन लक्ष्यते दृश्यते इत्यर्थः॥

१५। दृढ़ासनत्वादिगुणसम्पन्ना एते षट् प्रशस्ता अश्वसादिनः। उक्तञ्च नाकुले प्रशस्ताश्वसादिलक्षणम्। यथा,—"चलकिसलयपादः कर्णमध्यैकदृष्टि, र्न चलति कटिदेशो व्यापितोऽपि स्थितो यः। हय-हृदयमभिज्ञः स्थानदण्डाभिपाती, स खलु तुरगयोक्ता पूज्यते पार्थिवेन्द्रैः॥ दार्ढ्यं मुष्टिगतं करेण लघुता क्रोधानिलैर्वाजिनः, सत्वैकस्थिरबुद्धिमध्यमनतिः शास्त्रार्थविद्धार्म्मिकः। काले दण्डनिपात-विश्रमपरस्ताम्बूलपूर्णाननः, श्रीमाल्लक्ष्मयुतो महाहयपरो राजाधिपैः पूज्यते। उरः स्थिरं यस्य चलौच द ौ, त्रिकोन्नतः संहतमानसश्च। स वाजिवाहः प्रथितः पृथिव्यां, शेषा नरा भारकरा हयानाम्। प्राज्ञः सत्यवलोत्साही दृढ़सर्व्वाङ्गसौष्ठवः। जितशीतातपालस्यो जित-

---

१। वाजिवाहनम्। गः। ३। अवैराग्यः। गः।
२। जितमूर्त्तिः। गः।

दोषगुणताड़नविवरणम्।

स्थूलः क्रोधी च मूर्खश्च चित्तोत्सुकचलासनः।
अस्थाने दण्डपाती च वाजी तस्य न सिध्यति ॥ १३ ॥
प्रचलति यस्य कटिरूर्द्ध्ववाहुश्च दण्डवान्।
न तस्य वाहनं वाजी दुर्लक्ष्यं वाजिवाहितम्[1] ॥ १४ ॥
दृढ़ासनोऽथ तत्त्वज्ञो जितमुष्टि[2]र्निरालसः।
अविरागी[3] स्थिरश्चापि षड़ेते वाजिवाहकाः ॥ १५ ॥

---

१३। अतःपरं दोषगुणताड़नविवरणमाह,—

१४। दुर्लक्ष्यं वाजिवाहितमिति वाजिवाहितं दुःखेन लक्ष्यते दृश्यते इत्यर्थः ॥

१५। दृढ़ासनत्वादिगुणसम्पन्ना एते षट् प्रशस्ता अश्वसादिनः। उक्तञ्च नाकुले प्रशस्ताश्वसादिलक्षणम्। यथा,—"चलकिसलयपादः कर्णमध्यैकदृष्टि, र्न चलति कटिदेशो व्यापितोऽपि स्थितो यः। हय-हृदयमभिज्ञः स्थानदण्डाभिपाती, स खलु तुरगयोक्ता पूज्यते पार्थिवेन्द्रैः॥ दार्ढ्यं मुष्टिगतं करेण लघुता क्रोधानिलैर्वाजिनः, सर्वैकस्थिरबुद्धिमध्यमनतिः शास्त्रार्थविद्धार्म्मिकः। काले दण्डनिपात-विभ्रमपरस्ताम्बूलपूर्णाननः, श्रीमाल्लक्षयुतो महाहयपरो राजाधिपैः पूज्यते। उरः स्थिरं यस्य चलौ च द ौ, चिकोन्नतः संहतमानसश्च। स वाजिवाहः प्रथितः पृथिव्यां, शेषा नरा भारकरा हयानाम्। प्राज्ञः सत्यवलोत्साही दृढ़सर्व्वाङ्गसौष्ठवः। जितशीतातपालस्यो जित-

---

१। वाजिवाहनम्। ग:। ३। अवैराग्यः। ग:।
२। जितमूर्त्तिः। ग:।

चित्तं यो नैव जानाति तुरङ्गस्य समासतः ।
न वहन्ति हयास्तस्य दण्डपातेन[1] ताडिताः ॥ १६ ॥
हेषिते वलिते[2] भीते तथा चोन्मार्गगामिनि ।
कुपितोद्भ्रान्तचित्ते वा षट्सु दण्डं निपातयेत् ॥ १७ ॥
हेषिते ताडयेन्मूर्ध्नि जानुभ्यां वलिते[3] तथा ।

---

जिद्रो जितासनः । हयकालबलप्राणहयकामास्त्रयोगवित् । शी-तोपचारसारज्ञो रणक्रीड़ासु शिक्षितः । वाजिनां हृदयज्ञश्च स्थाने दण्डनिपातवित् ॥ अदुष्टमनसो दक्षः सर्व्वक्लेशसहः शुचिः । ग्रासे धन्ये तु पानीये परव्यूहावलोकने । त्रिषु अज्ञानप्रदेशेषु निर्गमे कुश-लोऽस्त्रवित्" इति ॥

१७ । हेषितादिषु षट्सु कालेषु दण्डनिपातनमुक्तं । भोजस्तु द्वादशसु कालेषु कशादिताड़नमाह,—"तीक्ष्णं मध्यं पुनर्द्वाभ्यां जघन्यं मिश्रकैस्त्रिभिः । उपवेशेऽथ निद्रायां स्खलिते दुष्टचेष्टिते । वड़वा-लोकनोत्सुक्ये बहुगर्ज्जितहेषिते । सन्त्रासे च दुरुत्थाने विमार्ग-गमने भये ॥ शिक्षात्यागस्य समये सन्धाने चित्तविभ्रमे । दण्डः प्रयोज्यो वाहानां कालेषु द्वादशस्वपि" इति ।

१८ । तेषु कस्मिन् कुत्र आहन्यादित्यत् श्लोकद्वयेनाह हेषिते इत्यादि ॥ अत्र भोजोऽपि एवमाह,—"ग्रीवायां भीतमाहन्यात् वक्त्र-कीर्ण च वाजिनम् । विभ्रान्तचित्तमधरे त्यक्तशिक्षञ्च ताड़येत् ॥

---

१ । दण्डेनैव निपातयेत् । गः ।        २ । स्खलिते । गः ।
३ । स्खलिते । गः ।

क्रुद्धे उरसि[1] हन्तव्यो भ्रान्तचित्ते[2] तथोदरे॥१८॥
भीतञ्च ताड़येत् पश्चात् मुखे चोन्मार्गगामिनम्[3]।
ज्ञात्वा दोषञ्च रूपञ्च स्थानेष्वेतेषु ताड़येत्॥१९॥
अस्थानताड़ितो वाजी यावज्जीवं न सिध्यति।
नो जहाति च तद्दोषं यावज्जीवत्यसौ हयः॥२०॥
कुपिते पुच्छसंस्थाने भ्रान्तौ जानुद्वये तथा।
सर्व्वस्याप्राप्तदण्डस्य दण्डमेकं निपातयेत्॥२१॥
अस्थाने ताड़ितो वाजी बह्वन् दोषानवाप्नुयात्।
तावद्भवन्ति ते दोषा यावज्जीवत्यसौ हयः॥२२॥
अवाहिता विनश्यन्ति सर्व्वकर्म्मक्षमा अपि।
कृशा व्याधिपरीताङ्गा जायन्तेऽत्यन्तवाहनात्॥२३॥

---

प्रद्वेषिते स्कन्धवाङ्को; वड़वालोकिनं तथा। उपवेशे च निद्रायां कटिदेशे च ताड़येत्॥ दुश्चेष्टितं मुखे हन्यादुन्मार्गप्रस्थितं तथा। जघने स्खलिते हन्यात् नेत्रमार्गे दुरुत्थितम्। यः कुण्ठप्रकृतिर्वाजी तं सर्व्वत्रैव ताड़ये"दिति॥ अत्र नकुलोऽपि,—"द्वेषिते स्कन्धसंस्थानं भ्रान्ते जानुद्वयं तथा। सर्व्वस्य प्राप्तदण्डस्य दण्डमेकं निपातयेत्॥ ......समुद्दिष्टं स्खलने जघनान्तरे। भीते वक्षःस्थलं हन्यात् वक्त्रे त्वोन्मार्गगामिनि। कुपिते पुच्छसंस्थानं भ्रान्ते जानुद्वयं तथा"— इति॥

---

१। कुपितोरसि। गः। ३। उन्मार्गगामिनि। गः।
२। भ्रान्तचित्तम्। गः।

पञ्च धाराः प्रवक्ष्यामि ऋषिभिर्याः[1] प्रकीर्त्तिताः ।
प्रथमा विक्रमा धारा द्वितीया पुलका स्मृता ॥ २४ ॥
तृतीया पूर्णकण्ठी तु चतुर्थी त्वरिता स्मृता ।
पञ्चमी चैव या धारा श्रूयते न च दृश्यते[2] ।
षष्ठी चैव तु या धारा निरालम्बा प्रकीर्त्तिता[3] ॥ २५ ॥

२४ । पञ्च धारा इति धाराख्या वाजिनां पञ्च गतय इत्यर्थः । यथोक्तं शुक्रेण,—"गतयः षड्विधा, धाराः स्कन्दितं रेचितं प्लुतम् । धौरीतकं वल्गितञ्च तासां लक्ष्म पृथक् पृथक्" इति ॥ "धौरितं वल्गितं प्लुत्युत्तेजितोत्तेजितानि च । गतयः पञ्च धाराख्यास्तुरङ्गाणां क्रमादिमाः" ॥ इति हेमचन्द्रः ॥ "गतिः पुला चतुष्का च तद्वन्मध्यजवापरा । पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः" —इति ॥ "गतिरेका प्लुता चास्य चातुरीचा द्वितीयका । वेगसन्धिस्तृतीया च धारा वेगवती तुरी ॥ धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति । सर्व्वकर्म्मकृतो वाजी तस्मात्तां परिवर्जयेत्" —इति नकुलः,—"आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च धाराः"—इत्यमरः ॥ पञ्चविधधारासंज्ञा ग्रन्थविशेषेषु विभिन्नाः कृता अपि फलतस्तुल्या एव ज्ञेयाः । अत्र षष्ठ्या निरालम्बायाः स्वर्गएव प्रसिद्धत्वात् मर्त्यलोके पञ्चैव धर्त्तव्याः ।

१ । मुनिभिः । गः ।
२ । रालम्बा प्रकीर्त्तिता । खः ।
३ । श्रूयते न च दृश्यते । खः ।

विक्रमा गतिधारा तु चतुःपादप्लुता स्मृता[1] ।
मुखपादसमायुक्ता पूर्णकण्ठी च या[2] भवेत् ॥ २६ ॥
स्वेच्छया त्वरिता धारा ताड़िता चैव पञ्चमी ।
षष्ठी चैव तु या धारा स्वर्गलोकेषु तिष्ठति[3] ॥ २७ ॥
या सङ्ख्या रोमकूपानां वाहकस्य हयस्य च ।
तावद्वर्षान् वसेत् स्वर्गे हयपृष्ठे हतो नरः ॥ २८ ॥
यल्लोकं वाजिपृष्ठेषु हता गच्छन्ति मानवाः ।
तं लोकं नाधिगच्छन्ति वडवासु हताश्च ये ॥ २९ ॥

---

२६ । विक्रमाया लक्षणं जयदत्तेन स्वयमेव कृतं न पुलकाया इति तदेव कथ्यते। पुलानाम प्लुताद्यनेकापरनामा हयानां गतिविशेष इति मल्लिनाथः। पुलनालक्षणं हयलीलावत्यां। यथा,—"प्लुतां प्रव-ल्गितामाकर्या धारा पुलनाभिधा। क्षिपति समविशेषानुत्क्षिप-त्यग्रपादाम्॥ प्रसरति पुरतोऽश्वः साथ धारा पुलाख्या। तथा,— पार्ष्णिप्रधानं प्रविधाय रागाद् वल्गां स्वधीकृत्य वहेत्पुलाख्याम्"— इत्यादि । पुटः खुरः । पुटो लुटनवेष्टने ॥

२८-२९ । इदं श्लोकद्वयं ख-ग-पुस्तकयोर्नास्ति ।

---

१ । गतिधारा च चतुष्पादी पुटा । गः । चतुष्का पुलका मता । खः ।
२ । तु या । गः ।
३ । स्वर्गलोकेऽवतिष्ठति । गः । स्वर्गलोकेषु गीयते । खः ।

वल्गाश्च संप्रवक्ष्यामि मुनिभिः परिकीर्त्तिताः[१] ।
पुष्पदन्ती च गोकर्णी तूलोलूला तुलोद्धृता ॥ ३० ॥
नागपीडी पुष्पधारी दृढ़मुष्टी च रजस्तनी[२] ।
द्विहस्ती चैकहस्ती च शुभगा शोभना मता ॥ ३१ ॥
इत्येता द्वादश[३] वल्गा मुनिभिः परिकीर्त्तिताः ।
आरूढ़ः कर्णमध्ये तु मनो लक्षति वाजिनः ॥ ३२ ॥
शनैस्तु वाहयेत्पूर्व्वं पश्चात् पुलकमादिशेत् ।
न वक्रो न तथोत्तानो न कुब्जो नाप्यधोमुखः ॥ ३३ ॥
न भवेत् स्तब्धगात्रस्तु स भवेदश्ववाहकः ।
स्थिरोरुः स्थिरपार्श्वश्च त्रिकोन्नतः स्थिरासनः ॥ ३४ ॥

३०। वल्गाश्वमुखरज्जुः। सा च पुष्पदन्त्यादिभेदेन द्वादशधा। हयलीलावत्यान्तु उत्क्षिप्तादिभेदेन चतुर्दशविधा। तदुक्तं,—"उत्क्षिप्ता शिथिला तथोत्तरवती मन्दा च वैहायसी विक्षिप्तैककराङ्कुकन्धरसमोत्कीर्णा विभक्ता तथा। अत्युत्क्षिप्ततलोद्धृते खलु तथा व्यागूढ़गोकर्णिके वाहानां कथिताश्चतुर्दशविधा वल्गाप्रभेदाः समाः"—इति॥

३२। पूर्व्वं प्रथमम्।

१। याः प्रकीर्त्तिताः। गः।
२। दृढ़मुष्टिश्च कुचनी। गः।
३। द्वादशाः। गः।

दक्षिणादितुरङ्गस्य[1] चासने तु दृढः सदा ।
अश्ववाराः समाख्याताः शेषास्तु भयदायकाः[2] ॥ ३५ ॥
ग्रीष्मादिषु न कर्त्तव्यमृतुषु त्रिषु वाहनम् ।
हेमन्तादिषु कर्त्तव्यं सादिभिः शास्त्रवेदिभिः ॥ ३६ ॥
प्रतिपत्सु त्रयोदश्यां पञ्चम्यां[3] वा सिते दले ।
धृतिसिद्ध्यादियोगेषु वासरे चन्द्रसूर्य्ययोः ॥ ३७ ॥
मूलरोहिणिहस्तेषु पुष्ये चैवोत्तरासु च ।
एवंविधे दिने सादी वाहनं वाहयेत् शुभे ॥ ३८ ॥

---

३५। अश्ववारा अश्वसादिनः ।

३६। ग्रीष्मादिष्विति आदिपदेन वर्षाशरदोर्ग्रहणम् । हेमन्तादिषु हिमशिशिरवसन्तेषु। उक्तञ्च अग्निपुराणे,—"हेमन्तः शिशिरश्चैव वसन्तश्चाश्ववाहने । ग्रीष्मे शरदि वर्षासु निषिद्धं वाहनं हये" इति । ग्रीष्मादिषु ऋतुत्रयेषु—इत्यनेन ज्यैष्ठात्कार्त्तिकपर्य्यन्तं वाहननिषेधः, तस्मात् मार्गशीर्षादिवैशाखपर्य्यन्तं वाहनविधिश्च सूचितो भवति द्विमासिकर्त्तुविभागात् ॥

३७-३८। अश्वानां आदिवाहने तिथिनक्षत्रादीन्याह । प्रतिपत्स्वित्यादि । सिते दले शुक्लपक्षे। उत्तरास्विति बहुवचनेन उत्तराषाढायां उत्तरफल्गुन्यां उत्तरभाद्रपदे चेति ज्ञेयम्। उक्तञ्चाग्निपुराणे,

---

१। दक्षिणां दिशि तुरङ्गस्य । गः।
२। शेषाःस्युर्भारदायकाः। गः ।
३। द्वादश्यां वा । गः ।

रङ्गभूमौ च रैवन्तं स्थापयेत् पूजयेत्ततः ।
पुष्पैर्धूपैः प्रदीपैश्च चन्दनैः पायसैस्तथा ॥ ३९ ॥

—"अश्विनी श्रवणं हस्तं उत्तरात्रितयं तथा । नक्षत्राणि प्रशस्तानि हयानामादिवाहने" इति ॥

३९। रङ्गभूमौ रणक्षेत्रे अश्वविनयनक्षेत्रे वा । रैवन्तमिति । रैवन्तः सूर्य्यतनयो गुह्यकाधिपतिः तम् । स्थापयेदिति प्रतिमया घटेन वेतिशेषः । तस्योत्पत्तौ वह्निपुराणं यथा,—"ततोऽसौ योगमास्थाय स्वां भार्य्यां वड़वां रविः । ददर्श नियमस्थां तामश्वरूपमथाकरोत् ॥ मैथुनायोपचक्राम सूर्य्योऽसौ च त्वरान्वितः । नेच्छन्ती तेन संयोगं परपुंसोऽभिशङ्कया ॥ सम्मुखात् सम्मुखी तेजो मुखनासिकया रवेः । देवौ यतः प्रजायेतामश्विनौ भिषगन्वयौ । नासत्यौ द्वौ तृतीयस्तु रैवन्तोऽश्वप्रवाहकः" इति । .. गुह्यकाधिपतित्वे च रैवन्तो विनियोजितः ॥ इति मार्कण्डेयपुराणम् ॥ तथा रैवन्तस्य पूजाविधिश्च राज्ञा यथा विधेयस्तत्र कालिकापुराणम्,—"सप्तमे हि तु रैवन्तं पूजयेत्तोरणान्तरे । सूर्य्यपुत्रं महाबाहुं द्विभुजं कवचोज्वलम् । ज्वलन्तं शुक्लवस्त्रेण केशान् वितत्य वाससा । कशां वामकरे बिभ्रद्दक्षिणे तु करे पुनः । खड्गं न्यस्य महातीक्ष्णं सितसैन्धवसंस्थितं । एवंविधन्तु रैवन्तं प्रतिमायां घटेऽपि वा । सूर्य्यपूजाविधानेन पूजयेत्तोरणान्तरे" इति ॥ पूर्व्वास्यमुपविष्टस्याश्वस्य वपुषि यथाक्रमं प्रणवादिनमोऽन्तेन स्वबीजेन देवादियोजनं कृत्वा पूजयेदिति शेषः । तदुक्तमग्निपुराणे,—"स्नातस्य प्राङ्मुखस्याथ देवान् वपुषि योजयेत् । प्रणवादि नमोऽन्तेन स्वबीजेन यथाक्रमम्" इति ॥

पक्वान्नैः पञ्चशब्दैश्च प्रातःशुचिः[1] सुवाससः ।
रक्ताम्बरधरो भूत्वा रक्तपुष्पधरस्तथा ॥ ४० ॥

ओं नमो रैवन्ताय अश्वहृदयाय ह्रीं क्लीं ओं नमोऽतिश्वेताय[2] सौम्यरूपाय इमं[3] मम अश्वं साधय साधय बन्धय बन्धय वश्यं कुरु कुरु महावीर्य्याय रैवन्ताय नमः ॥ ४१ ॥

---

४० । पञ्चशब्दैरिति गवाजमेषगजाश्वैरित्यर्थः । तदुक्तं तिथ्यादितत्त्वे तस्य पूजाविधौ,—"द्वारोपान्ते सुदीप्तश्च संपूज्यो हव्यवाहनः । यवाक्षतघृतोपेतैः तण्डुलैश्च सुतर्पितः ॥ संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च । स्कन्दः सभार्य्यो रुद्रश्च तथा नन्दीश्वरो मुनिः । गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः । उरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः । पूज्यश्चाश्वैश्च रेवन्तो यथाविभवविस्तरैः" इति ॥

४१ । पर्य्याणयेत् मन्त्राह्वयेत् । जयदत्तेन पर्य्याणनात् पूर्व्वं ओं नम इत्यादि मन्त्रजपस्य एकविंशतिवारं विधिः कृतः । अग्निपुराणेतु—एतन्मन्त्रेण सह "हयगन्धर्व्वराज त्वम्" इत्यादि कर्णजापस्य विधिः कृतः यथा,—"कर्णजापं ततः कृत्वा विमुह्य च तथाप्यरीन् । पर्य्याणयेद्धयं सादी वाहयेद्युद्धतोऽभयः" इति ॥

---

१ । स्नातः । गः ।

२ । श्वेताय । खः ।

३ । इममश्वं । गः ।

एतन्मन्त्रं जपेत्प्राज्ञो हयस्य दक्षिणे श्रुतौ।
एकविंशतिवारांश्च ततः पर्य्याणयेद्धयम्॥ ४२॥
क्रोशमेकं तमारुह्य[1] नयेद्दीक्षां शनैः शनैः।
वल्गाग्रहश्च कर्त्तव्यः सव्यापसव्यमेव च॥ ४३॥
विक्रमा पुलका पूर्णकण्ठी च त्वरिता तथा।
खलीनादि प्रयोक्तव्यं[2] सादिना वाजिनां क्रमात्॥४४॥
नातिस्थूलं[3] कृशं नाति न स्तब्धं नातिकर्कशम्।
सप्ताङ्गुलप्रमाणन्तु खलीनं कारयेद्बुधः॥ ४५॥
खलीनादिषु लौहेषु धारासु[4] विक्रमादिषु।
क्रमेणैव तुरङ्गाणां कटानि संप्रयोजयेत्॥ ४६॥
खलीनादौ च धारासु यदा सुशिक्षितो हयः।
तदा कटेषु तं सादी भ्रामयेद्विक्रमादिभिः॥ ४७॥
शतहस्तादिकां भूमिं सप्तहस्तावसानिकाम्।
भ्रामयेद्वाजिनं सादी सव्यं चैवापसव्यकम्[5]॥ ४८॥

---

४६। कटानीति अश्वचालनाय रचिता शतहस्तादिका मण्डलादयः पञ्चविधा भूमय इत्यर्थः॥

---

१। समारुह्य हयदीक्षा। गः।
२। खलीनादी प्रयोक्तव्या। खः।
३। अतिस्थूलं। गः।
४। धारयोर्विक्रमादिषु। खः।
५। सव्यापसव्यमेव च। गः।

मण्डलं चतुरस्रञ्च गोमूत्रं चार्द्धचन्द्रकम् ।
नागपाशक्रमेणैव भ्रामयेत् कटपञ्चकम् ॥ ४९ ॥
एवमन्येषु लोहेषु चिह्नेव भ्रामयेत्कटे ।
य एवं वाहयेद्वाहं तस्य कष्टं न जायते ॥ ५० ॥
दद्याद्भयमभीतस्य भीतस्यापि हरेद्भयम्[1] ।
रहस्यं सादिनामेतद्वाहनेऽस्मिन्निवेदितम् ॥ ५१ ॥
पूर्व्वोक्तेषु च देशेषु[2] षट्सु दोषेषु ताड़येत् ।
न जातु सादिनान्यस्मिन् काले दोषशतैरपि ॥ ५२ ॥
दम्यमानस्य वाहस्य यो दोषः सादिदोषतः ।
जायतेऽसौ निराकर्त्तुं सादिना नैव शक्यते ॥ ५३ ॥
एवं शास्त्रविधानेन यः सादी वाहयेद्धयान् ।
हयस्तस्य सिध्यन्ति भवन्ति फलदायकाः ॥ ५४ ॥
वाहनं सह दुष्टश्च धूपालेपनमंचकैः ।
तदहं संप्रवक्ष्यामि[3] मुनिभिः कीर्त्तितं यथा ॥ ५५ ॥

४९। "धनुरष्टादश योज्यं वाजिनां मण्डलं क्रमात्। ह्रासो-त्ययेच्चैवं तावद् यावत्कटकपञ्चकम्॥ तदूर्द्धं मण्डली योज्या गोमूत्रा तदनन्तरम्। ऋजुवर्त्मसुवर्त्तौ च गोमूत्रा सर्व्वकर्मसु। युज्यमाना न दुष्यन्ते प्रायशोऽपि विचक्षणैः" ॥ इति नकुलः।

१। अपहरेद्भयम्। गः। २। स्थानेषु। गः।
३। साम्प्रतं वच्मि। गः।

अस्थिभिर्दंशनैश्चैव वृकाणाञ्च[1] तथा बुधैः।
विषमकरदंष्ट्राभि र्धूपमुक्तं[2] हि सर्पिषा ॥ ५६ ॥
एलागुरुमदोशीरनागकेसरचन्दनैः।
सर्जिकातैलसंयुक्तै र्धूपयेद्दुष्टवाजिनम् ॥ ५७ ॥
विषलौहगदैलाभिस्तैलाज्यदधिचन्दनैः।
निःशेषदोषनाशाय धूपमुक्तं हि वाजिनाम् ॥ ५८ ॥
विलिप्ता[3] गोमयैः प्रातर्निशीथे सर्व्वसन्धिषु।
अष्टम्याञ्च विशेषेण दुष्टाः सिध्यन्ति धूपिताः ॥ ५९ ॥
कासीसं चन्दनं कौन्तीसिद्धार्थमरिचानि च।

---

५६। अत्र वृकास्थिदशनविषमकरदंष्ट्राणां चूर्णं कर्षत्रयं घृतञ्च कर्षमात्रं ग्राह्यं। "धूपे चूर्णे त्रयः कर्षा घृतकर्षश्च गौरभः" इति परिभाषास्मरणात्॥ अत्र धूपस्य नपुंसकत्वमसाधु।

५७। अत्रापि एलादीनां त्रयः कर्षा ग्राह्याः। तैलस्य च कर्षः। मदो मृगमदः॥ अयं द्वितीयो धूपः। एला क्षुद्रैला। उशीरं (गन्धवेणामूल)। नागकेशरं नागेश्वरपुष्पं। चन्दनं रक्तचन्दनं। सर्जिका शालनिर्यासः। सर्जिक्षारो वा।

५८। तृतीयमाह विषेति। विषं पद्मकेशरं। गदो विषम्।

५९। धूपिताः पूर्व्वोक्तै र्धूपैरित्यर्थः।

---

१। वृश्चिकानां। गः।
२। धूमसम्मर्दि। खः।
३। विलिप्या। खः।

सैन्धवं वडवामूत्रं गोमूत्रं[1] कार्णजं मलम् ॥ ६० ॥
सुनिगुप्तानि[2] पिष्टानि कणायासवचानि[3] च ।
अञ्जनं सर्व्वदुष्टानां देयं पर्व्वणि पर्व्वणि ॥ ६१ ॥
अनेनाभ्यञ्जितो वाजी निर्व्वाणमधिगच्छति ।
कोपं मोहं भयं त्यक्त्वा वश्यः स्यात् सादिनो भृशम् ॥ ६२ ॥

सादिकार्य्यविवरणम् ।

प्रातः[4] सादी शुचिः स्नातः शुक्लाम्बरधरस्तथा ।
उपोषितो यति[5]र्भूत्वा जपेत्कर्णे च दक्षिणे ॥ ६३ ॥
हय गन्धर्व्वराज त्वं[6] शृणुष्व वचनं मम ।
गन्धर्व्वकुलजातस्त्वं मा भूयाः कुलदूषणः ॥ ६४ ॥
द्विजानां सत्यवाक्यानां सोमस्य गरुड़स्य च ।

---

६०-६१ । कासीसादीनां समभागं गोवडवाजमूत्रेण निष्पिष्य अञ्जनं विधेयम् । कासीसं उपधातुविशेषः । (हिराकष्) इति भाषा । चन्दनं रक्तचन्दनं । कौन्ती रेणुकं । सिद्धार्थो गौरसर्षपः । कार्णजं मलं कर्णगूथं । (काणेर खल) । कणा पिप्पली । अथ कणायासवचानि चेति पाठो भवितुं युक्तः । यासो दुरालभा ।

६२-६३ । अभ्यञ्जितः सर्व्वतः कृताभ्यञ्जन इत्यर्थः । निर्व्वाणं शान्तिम् ।

---

१ । कार्णजं मलमुत्तमम् । गः ।　　४ । स्नातः सादी शुचिः शान्तः । गः ।
२ । सुनिर्गुप्तानि दृष्टानि । गः ।　　५ । उपोषितः यतिः । खः ।
३ । सवसानि च । गः ।　　६ । गन्धर्व्वराजस्त्वं । गः ।

रुद्रस्य वरुणस्यैव पवनस्य बलेन च ॥ ६५ ॥
हुताशनस्य दीप्तस्य[1] स्मर जातिं तुरङ्गम ।
स्मर राजेन्द्रपुत्रस्त्वं सत्यवाक्यमनुस्मर ॥ ६६ ॥
स्मर त्वं वारुणीं कन्यां स्मर त्वं कौस्तुभं मणिम् ।
क्षीरोदसागरे चैवमवमथ्य[2] सुरासुरैः ॥ ६७ ॥
तत्र देवकुले जातः स्ववाक्यं परिपालय ।
कुले जातस्त्वमश्वानां मित्रं मे भव शाश्वतम् ॥ ६८ ॥
शृणु मित्र त्वमेतद्वै सिद्धो मे भव वाहनम् ।
विजयेऽहं[3] धराञ्चैव संग्रामे सिद्धिमावह ॥ ६९ ॥
तव[4] पृष्ठं समारुह्य हता दैत्याः सुरैः पुरा ।
अधुना त्वां समारुह्य जेष्यामि रिपुवाहिनीम् ॥ ७० ॥
मन्त्रजापं ततः कृत्वा मन्त्रेणानेन बुद्धिमान् ।
विसृज्य सर्व्वदेवांश्च ततः पर्य्याणयेद्धयम् ॥ ७१ ॥
वाह्यागमेषु[5] येऽभिज्ञाः कुर्व्वन्ति हरिवाहनम ।
सुहृदस्ते च वाह्यानामन्ये तु हरिभ्रमवः[6] ॥ ७२ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे वाहनविधौ सप्तमोऽध्यायः ॥

---

१ । दीप्ताच्च । गः ।
२ । मथ्यमाने । गः ।
३ । विजयोऽमे । खः ।
४ । भवत्-पृष्ठं । गः ।
५ । वाहनेषु च ये वर्गाः । गः ।
६ । हरिभ्रमवत् । खः ।

## अथाष्टमोऽध्यायः ।

वन्ध्योपचारः ।

अथातः संप्रवक्ष्यामि वन्ध्याया गर्भधारणम् ।
शालिहोत्रादिभिः प्रोक्तं यथापूर्व्वं तपोधनैः ॥ १ ॥
घृतेन वड़वामादौ स्निग्धां पाणिन्तु[1] वेधयेत् ।
ततोनिरूहयेदश्वां यथाशास्त्रं विचक्षणः ॥ २ ॥
ततोऽनुवासयेत् प्राज्ञः सप्तरात्रन्तु वाहयेत् ।
कुड़वं विल्वचूर्णस्य माक्षिकं कुड़वद्वयम् ॥ ३ ॥
क्षीराढ़कं भिषग्दत्वा तैलप्रस्थं विपाचयेत् ।
मधुना मूर्च्छितं कृत्वा वैद्यस्तत्पाययेद्धयीम्[2] ॥ ४ ॥

---

२। निरूहयेत् निरूहवस्तिं दापयेत् ।

३। अनुवासयेदनुवासनवस्तिं प्रयोजयेदित्यर्थः ॥

४। माक्षिकं मधु क्षीराढ़कं दुग्धप्रस्थचतुष्टयं। कुड़वः प्रस्थचतुर्थांशः। पाकप्रक्रिया यथा—आदौ तिलतैलस्य प्रस्थं मधुना मूर्च्छयित्वा ततः कल्कभूतं विल्वत्वक्चूर्णं दत्वा क्षीराढ़केन सह क्षीरपाकविधानेन पचेत् ॥ पानार्थं घृतप्रस्थांशो देयः ।

---

१। पीष्णौ। गः।   २। वैद्यस्तत्पाययेद्धयीम्। खः।

महास्नेहस्य प्रस्थांशं[1] योन्यां वस्तिं प्रदापयेत्।
सर्व्वं प्रवेशयेन्नेत्रं सम्पूर्णं द्वादशाङ्गुलम् ॥ ५ ॥
अपामार्गवचाविल्वशिग्रुवीजरसोनकैः।
त्रिफलापिप्पलीवाजि[2]गन्धासर्षपसंयुतम् ॥ ६ ॥
सन्नीय भोजयेदश्वीं यावकं[3] लवणाम्भसा।
विल्वचूर्णयुतं दध्ना कृशरं पाययेत्ततः ॥ ७ ॥
मागधीत्रिफलाशिग्रुवीजापामार्गमुस्तकैः।
सुचूर्णितैः पचत्तैलं वचामरिचसर्षपैः ॥ ८ ॥

---

५। वस्तिदानमाह। प्रथमं द्वादशाङ्गुलं सर्व्वं नेत्रं नयनसाधनीं नाड़ीं सम्पूर्णं प्रवेशयेत् योनिमार्गे इत्यर्थः। अथ तेन नेत्रेण महास्नेहस्य घृतस्य कुड़वं योन्यां वस्तिं प्रदापयेत्।

६। अत्रापामार्गादीनां मिलित्वा पलं चूर्णं लवणवारिणा भोजयेत्। लवणस्य पलं वारि च प्रस्थमात्रं गृह्लीयात्। अपामार्गः (आपां)। विल्वं विल्वशलाटुः लम्वा। शिग्रुवीजं शोभाञ्जनवीजं (साजनेवीज)। वाजिगन्धा अश्वगन्धा। सर्षपः श्वेतसिद्धार्थकः। यावकं कुलत्थं।

७। कृसरः तुल्यतिलान्नं। "तिलतण्डुलसम्पक्वः कृसरः सोऽभिधीयते" इति परिभाषा। विल्वचूर्णस्य पलम्।

८। अत्र तैलस्य प्रस्थः। मागध्यादीनां मिलित्वा कुड़वः। पाकार्थं जलञ्चाढ़कं देयम्।

---

१। प्रत्येकं। गः। २। चैव गन्धसर्षपसंयुतैः। गः।
३। यावकं। खः।

वस्तौ पानं[1] प्रदातव्यं तैलमेतद्विचक्षणैः ।
यावकश्च ततो देयमन्नं दधिसमन्वितम् ॥ ९ ॥
एवंविधैः प्रयोगैश्च बन्ध्या भवति गर्भिणी ।
शीतपाक्यौ च[2] मेदे च वृद्धे द्वे त्रिफलावचा ॥१०॥
क्वाथयेन्मतिमांस्तोये द्रोणे पादावशेषितम् ।
कृत्वा संस्राव्य वस्त्राच्च देयं तत्र घृताढकम् ॥ ११ ॥
बला चातिबला मेदे तथा क्षीरविदारिका ।
जीवकर्षभकौ चैव यष्टीमधुकशारिवे[3] ॥ १२ ॥

---

९ । यावकं यवसम्बन्धि अन्नं यवापेक्षया पञ्चगुणे तोये पक्वा दधिप्रस्थेन सह देयम् ॥

१० । शीतपाक्यौ काकोलीक्षीरकाकोल्यौ । मेदे मेदमहामेदे । एतदभावे अश्वगन्धाशारिवे देये । वृद्धे ऋद्धिवृद्धी । एतदभावे बलामहाबले ग्राह्ये । शीतपाक्यादीनां प्रत्येकं पलं । वारि ३२ प्रस्थमितं । बला वाट्यालकं । अतिबला पीतवाट्यालकं । क्षीरविदारी शुक्लभूमिकुष्माण्डो । जीवकर्षभकौ जीवकः ऋषभकश्चेति द्वौ । एतदभावे गुडूची वंशलोचना च देया । शारिवा श्यामालता । एषां प्रत्येकं पलं देयम् ।

---

१ । वस्तौ पानं । खः ।
२ । शीतपाक्यौ च मेदे द्वे द्वे मेदे त्रिफलापि च । खः ।
३ । यष्टीमधु च शारिवा । गः ।

चूर्णयित्वा क्षिपेत्तच्च शनैर्मृदग्निना पचेत् ।
स्नेहानुवासनादेतद्[1] बन्ध्यायाः स्यात् फलप्रदम् ॥१३॥
क्वाथं रौहीतकं क्षीरं माक्षिकं रोहिणीद्वयम्[2] ।
विडङ्गेन समालोड्य पाययेन्मतिमान् भिषक् ॥ १४ ॥
एतैश्च पिण्डिकां कृत्वा योन्यां तस्याः प्रवेशयेत् ।
ततः संयोजयेदश्वं पश्चात्तोयावगाहनम्[3] ॥ १५ ॥
कारयेन्मस्तकं चास्या अम्बुभिः परिषेचयेत् ।
एवं गर्भं प्रगृह्णाति कर्त्तव्यो नात्र संशयः ॥ १६ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे बन्ध्योपचारेऽष्टमोऽध्यायः ।

---

१४। रौहीतकमिति रोहीतको दाड़िम्बपुष्पकः (रोढ़ा) इति प्रसिद्धः। तेन रौहीतकं। रौहितकस्य पलं वारिणश्च प्रस्थः। एतस्य पादावशिष्टं क्वाथम ।

---

१। पानात् तैलं बन्ध्याफलप्रदम्। ख॰।

२। रोहिणीवचा।ः।

३। तोयेऽवगाहयेत्। ग॰।

# अथ नवमोऽध्यायः।

गर्भज्ञानः।

अथातः संप्रवक्ष्यामि सगर्भायास्तु लक्षणम्।
योन्यां[१] वीजग्रहे तृप्ति लोचनाविलता तथा॥ १॥
सगर्भा ताड़येदश्वं गर्भस्य परिलक्षणम्[२]।
काचिन्मूका जड़ीभूता निर्विकारा त्यजेद्वृषम्॥ २॥
काचित् कण्डूयमानाश्वा गर्भिण्यपि प्रहर्षते।
काचिद्रागवशाद्वापि समूचा ताड़येद्वृषम्॥ ३॥
रुणद्धि परुषा[३] काचिदश्वा पुच्छेन[४] योनिकम्।
विन्यस्तकर्णी[५] क्रोधाद्वा वृषं दृष्ट्वापसर्पिणी॥ ४॥
शूनाधोयोनिभागा च सदा कान्तिविधारिणी[६]।
प्रशस्तरन्ध्रा[७] स्निग्धाङ्गी निविड़ोदरबन्धना[८]॥ ५॥

---

२। वृषः शुक्रधारी। अत्र पुंघोटक इत्यर्थः।

३। विन्यस्तकर्णी पर्य्यस्तकर्णी।

४। शूनाधोयोनिभागा यस्या योन्या अधो भागः शुष्को भवति।

---

१। योन्या वीजग्रहे तृप्तिं। खः।
२। परिरक्षणात्। गः।
३। वड़वा। गः।
४। बद्धपुच्छेन। गः।
५। अत्यस्तकर्णी। गः।
६। कान्तिविदारिणी। गः।
७। प्रशस्तरन्ध्रा च। गः।
८। अचिरोदरबन्धना। खः।

गर्भोपलिप्तपार्श्वा च वडवा गर्भिणी मता।
शरीरोपचयः शोभानिर्वृत्ति र्गतिमन्दता[1] ॥ ६ ॥
श्वासः[2] स्वल्पाशनत्वञ्च शरीरस्य च पुष्टता।
स्निग्धता चैव रोमाणां घनरन्ध्रत्वमेव[3] च ॥ ७ ॥
क्षान्ता दान्ता प्रशान्ता च वृषं नेच्छति गर्भिणी।
प्रथमे च द्वितीये च मांसशोभा प्रजायते ॥ ८ ॥
तृतीये च चतुर्थे च पक्वमांसञ्च वर्द्धयेत्।
पञ्चमे चैव षष्ठे च त्वचि रोमं प्रसीदति ॥ ९ ॥
सप्तमे वाष्टमे मासे योनिः सम्पद्यते पृथुः।
पादाः श्नूयन्ति नवमे तस्याधश्चाति[4]वर्द्धते ॥ १० ॥
दशमे चैकादशे वा[5] द्वादशे वा प्रसूयते।
एवं नानाविधैर्ज्ञेया गर्भिणी हयकोविदैः ॥ ११ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे गर्भज्ञाने नवमोऽध्यायः।

---

१०। पादाः श्नूयन्ति स्फीता भवन्ति।

---

१। अतिमन्दता। गः।
२। श्वासाल्पं वामनत्वञ्च। गः।
३। घनता रन्ध्र एव च। गः।
४। मास्यधः। गः।
५। चैव। गः।

## अथ दशमोऽध्यायः ।

सूतिकोपचारः ।

गर्भन्तु निर्गतं ज्ञात्वा वारिणा परिषेचयेत् ।
ऋतुं[१] विज्ञाय मतिमान् शीतोष्णेन च वा पुनः ॥१॥
अथ मातुः स्तनौ धौतौ पाययेत् परिगृह्य तम्[२] ।
विलग्नेषु च गर्भेषु जरायुषु पतत्सु च ॥ २ ॥
समान्येतानि मेधावी भेषजान्युपकल्पयेत् ।
ज्योतिष्मती तेजवती शङ्खपुष्पी शतावरी ॥ ३ ॥
भार्गी वचा विशल्या च तथा लाङ्गलिकापि च ।
एतत् संहृत्य संभारं ग्रन्थयेत् सर्षपैः सह ॥ ४ ॥
ततः शिरसि कण्ठे च पुच्छे चाप्युपयोजयेत् ।
लाङ्गलीविल्वशुण्ठीनां चूर्णं तोयेन पाययेत् ॥ ५ ॥

---

३-४ । ज्योतिष्मती (मालकांगनी)। तेजवती गजपिप्पली । शंखपुष्पी चोरपुष्पी (चोरकाचुकि)। शतावरी (शतमूली) । भार्गी (वामनहाटी)। वचा (वच्)। विशल्या दन्ती गुड़ूची वा । लाङ्गलिका (ईष्लाङुले)।

५ । तत इति । लाङ्गली (ईष्लाङुले)। विल्वः प्रसिद्धः । तथा शुण्ठी च । आसां द्रव्यत्रयाणां चूर्णं समभागेन मिलितं पलं तोयेन

---

१ । ज्ञातुं । खः ।  २ । परिगृह्यते । गः ।

एवं विमुच्यते गर्भो जरायूंषि पतन्ति च ।
प्रतिपानैस्ततः कोष्ठं शोधयेद्वक्ष्यमाणकैः ॥ ६ ॥
सीधुमधु[1] त्रिकटुकैः पूर्व्वाह्ने पाययेद्वधीम् ।
पैष्टिकीं वा सुरां दद्याद् गुड़तैलेन संयुताम् ॥ ७ ॥
अस्यै दापयेद् ग्रासं सुजीर्णे प्रतिपानके ।
ततो न पाययेत् क्षीरमेकरात्रिं त्रिकोनिधिः ॥ ८ ॥

---

षष्टिपलमितेनेत्यर्थः । उक्तञ्च जयदत्तेन,—"विंशतिस्त्रिगुणाश्चैव वारिमानं प्रकीर्त्तितम्"—इति ॥

६ । प्रतिपानैरिति । ततो वक्ष्यमाणैः प्रतिपानैः पानयोगैः कोष्ठं शोधयेत् कोष्ठजाड्यमपनयेदित्यर्थः ॥

७ । प्रतिपानयुगलमाह । सीध्विति । अत्र त्रिकटुकं समभागं मिलित्वा पलं ग्राह्यम् । "मरिचस्य च शुण्ठ्याश्च पिप्पलीनां तथैव च । एतत्त्रिकटुकं प्रोक्तं व्योषाख्यं त्र्यूषणं तथा"—इति ॥ सीधुः मधूकपुष्पोत्थः सुराविशेषः । तदुक्तं सुश्रुते । "सीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः । रूक्षः कषायकफहृद् वातपित्तप्रकोपनः"—इति ॥ तस्य [illegible] । तथा मधनस्य कुड़वः । सर्व्वमेकत्र मेलयित्वा पूर्व्वाह्ने पाययेदित्यर्थः । द्वितीयं योगं कथयति । पैष्टिकीमिति । गुड़तैलेन संयुक्तां पैष्टिकीं सुरां दद्यात् । अत्र पैष्टिक्याः प्रस्थः । गुड़स्य पलाष्टकं । तैलस्य च कुड़वः प्रस्थार्द्धं वा "

८ । त्रिकोनिधिरिति पाठो न सङ्गति ॥

---

१ । सीधुना त्रिकटुकेन । गः ।

चतुर्थे दिवसे प्राप्ते तोयं चैव शृतं पिबेत्।
तदा[1] न मुच्यते योन्या फेनं गर्भोदकन्तु वा॥ ९॥
यस्माद्विमुक्तगर्भायाः कोष्ठे वायुरुदीर्य्यते।
तस्माद् घृतं प्रदातव्यं प्रसूतायां[2] विजानता॥ १०॥
यवाः[3] सर्व्वे हिता दूर्व्वा यावकं सर्पिषा सह।
दशमेऽहनि संप्राप्ते सवत्सां स्नपयेद्धयीम्॥ ११॥
गन्धाद्यैः पूजयेत् पुष्पैर्गन्धधूपैश्च धूपयेत्।

क्षीरशोधनम्॥

अथ दुष्टस्य वक्ष्यामि क्षीरस्य परिशोधनम्॥ १२॥

---

९। चतुर्थ इति। शृतं तोयं पक्वं जलम्।

१०। तस्मादिति। अत्र पानार्थे घृतं चतुःपलं देयम्। उक्तञ्च "चतुः पलः घृतं देयं लेह्ये पाने च भोजने"। इति।

११। यवा इति। यवदानपरिमाणं तावदेकदिने आढकचतुष्टयं। एतदुत्तमस्य। मध्यमादीनान्तु उत्तमपरिमाणात् पादहीनं कनीयसस्तु सार्द्धहीनं ज्ञेयम्। एवं द्रव्यमात्रायां जयदत्तेन वर्णितं द्रष्टव्यम्॥ यावकमित्यादि। सर्पिषा कुड़वत्रयमितेनेत्यर्थः। यावकं कुलत्थं आढकद्वयं दद्यात्।

---

१। यदा। खः। २। प्रसूतायाः। गः।
३। यवः र्थे हितां दूर्व्वाम्। खः।

जम्बूकषायं क्षौद्रेण मिश्रितं पाययेद्वयीम् ।
पञ्चवल्कलमादाय क्षालितं जर्जरीकृतम् ॥ १३ ॥
वारिणा साधयेद्वैद्यो रात्र्युषितञ्च कारयेत् ।
प्रभाते[1] दापयेदस्यां शर्करामधुमिश्रितम् ॥ १४ ॥
अजाजी भद्रमुस्ता च शृङ्गवेरञ्च सर्षपम् ।
तुम्बुरूणि विडङ्गानि चित्रकं देवदारु च ॥ १५ ॥
पिप्पली च हरिद्रे द्वे पाठां शिग्रुञ्च पेषयेत्[2] ।
कल्कं सौवीरकेणैव सन्नीय प्रतिभोजयेत् ॥ १६ ॥

---

१३ । जम्बूकषायं क्षौद्रेणेति । अत्र जम्बूत्वक् पलपरिमिता । पाकार्थं जलं आढ़कपरिमितं । पादशेषं कृत्वा प्रस्थद्वयं मधुनः कुड़वं प्रक्षिप्य च पाययेत्॥ तथा पञ्चवल्कलं न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसानां त्वचः पलपरिमिताः पूर्ववत् जलेन साधयित्वा दापयेत् । जर्जरीकृतं कुट्टितमित्यर्थः । "न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्र-संयुक्तैः पञ्चवल्कलमुच्यते"—इति निघण्टुः । तत्र प्रक्षेपश्च शर्करा मधु चेति तयोः प्रत्येकं कुड़वो देयः॥ अजाजीत्यादि एषां समभागेन पलं गृहीत्वा दृषदि संपिष्य प्रस्थपरिमितकाञ्जिकेन गोलयित्वा दद्यात् । अजाजी जीरकं तुम्बरुः धन्याकं । हरिद्रे इति हरिद्रा दारुहरिद्रा च । पाठा अविद्धकर्णा (आकनादि) इति यस्या भाषा । शिग्रुः शोभाञ्जनं । (साजने) ॥

---

१ । प्रस्रुतं । खः ।　　　२ । सर्वा सर्व्वेषु । गः ।

गुड़तैलसमायुक्तां तीक्ष्णां वा पाययेत् सुराम्।
दुष्टस्य शोधना योगा क्षीरस्यैते विवर्द्धनाः॥ १७॥

किशोरोपचारप्रकरणम्।

क्षौद्रञ्च नवनीतञ्च मिश्रितं[1] लेहयेच्छिशुम्।
मासमेकं किशोरन्तु ततो भोजनमाचरेत्॥ १८॥
गोधूमान्नं यवान्नञ्च सुसिद्धं पयसान्वितम्।
मधुसर्पिःसमायुक्तं किशोराणां प्रशस्यते॥ १९॥
तक्रं[2] वा घृतसंयुक्तं मधुक्षीरविमिश्रितम्।
पाययेच्च किशोरांस्तु सद्योबलविवर्द्धनम्॥ २०॥
एवं किशोरा वर्द्धन्ते बलवन्तो भवन्ति च।

१७। गुड़ेति। इदं प्रतिपानं तीक्ष्णसुराप्रस्थेन गुड़तैलयोः प्रत्येकं यथाक्रमं प्रस्थार्द्धं पलाष्टकं च मिश्रयित्वा योजनीयमित्यर्थः। "स्नान्यक्तक्षयहिता सुरा बृंहणदीपनी"—इति सुश्रुतम्॥

१८। अत्र किशोरोपचारप्रकरणे अन्नपानादिकं सर्व्वमेव साधारणवत् केवलं मात्राया विशेषोऽस्तीति बोध्यम्॥ अत्र क्षौद्रं कुड़वांशं नवनीतञ्च पलं एकत्र शिशोर्लेहने देयम्। द्रव्यमात्राध्याये तेषां उत्तमेभ्यः सर्वद्रव्याणां पादव्यवस्थाया उक्तत्वात् तथा परिमाणं योज्यम्॥

१। मिश्रित्वा। गः।
२। तक्रो घृतसंयुक्ता मधुक्षीरविमिश्रिताः। गः।

शरीरेन्द्रियधात्वग्नि[1]दोषाः प्रकृतयस्तथा ॥ २१ ॥
बलानाञ्च तुरङ्गानां तुल्यरूपा भवन्ति ते।
चान्येव व्याधिरूपाणि तदेव तु चिकित्सितम् ॥ २२ ॥
च एव वातस्तत्पित्तं स श्लेष्मा तद्धि शोणितम्।
विशेषः केवलस्तत्र मात्राया परिकीर्त्तितः ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे सूतिकोपचारे दशमोऽध्यायः।



१। शरीरेन्द्रियजात्वग्निदोषाः। ख।

## अथैकादशोऽध्यायः ।

द्रव्यमात्राज्ञानः ।

प्रधानमध्यहीनानां देशकालवलं प्रति ।
वाजिनामुपयोगाय द्रव्यमात्रा विधीयते ॥ १ ॥
पक्वगुञ्जाफलैर्माषो अष्टभिः परिकीर्त्तितः ।
माषैः षोड़शभिः कर्षस्तैश्चतुर्भिः पलं भवेत् ॥ २ ॥
चतुःपलैः स्यात् कुड़वः प्रस्थः षोड़शभिः पलैः ।
चतुःषष्ट्या पलैरेक[1] आढ़कः परिकीर्त्तितः ॥ ३ ॥
शतद्वयं पलानान्तु[2] षट्पञ्चाशत्तथैव च ।
द्रोणस्य कीर्त्तिता संख्या प्रमाणज्ञानकोविदैः ॥ ४ ॥

१ । द्रव्यमात्रेति मात्राशब्देन सम्यगयोगो वक्तव्यः ।

२ । एष मानविधिः केवलं वाजिचिकित्सिताय, चरकादिमान-विलक्षणएव । चरकादिमानविधिस्तु एवं प्रदर्शितश्चक्रपाणिना,— "द्वात्रिंशन्माषकैर्माषश्चरकस्य तु तैः पलम् । अष्टचत्वारिंशता स्यात् सुश्रुतस्य तु माषकः ॥ द्वादशभिर्धान्यमाषैश्चतुःषष्ठ्या तु तैः पलम् । एतच्च तुलितं पञ्चरक्तिमाषात्मकं पलम् ॥ चरकार्द्धपलोन्मानं चरके दशरक्तिकैः । माषैः पलं चतुःषष्ठ्या यद्भवेत्तत् तथेरितम् ॥ तस्मात् पलं चतुःषष्ठ्या माषकैर्दशरक्तिकैः । चरकानुमतं वैद्यैः चिकित्सास्रुप-युज्यते" इति । माषो अष्टभिरित्यत्र लुप्तोऽकारः साधुः ॥

१ । एव । गः ।     २ । च । खः ।

शुष्कद्रव्यस्य या मात्रा सा[१] द्रवे द्विगुणा भवेत्।
मूलादीनामशुष्काणां द्रव्यतुल्यो विधिः स्मृतः ॥५॥
एकस्मिन्नेव दातव्यं दिने वाहस्य निस्तुषैः ।
च विनष्टैर्यवैः पूर्णमाढ़कानां चतुष्टयम् ॥६॥
उत्तमाधमहीनानां पादहीनन्तु दापयेत् ।
पादो न आढ़को देयः सुसिद्धो भोजने तथा ॥७॥
शालेश्च तण्डुलानां तु अर्द्धञ्चैव प्रदापयेत् ।

५। मूलादीनामित्यादिपदेन गुड़ूचीकुटजवासाकुष्माण्डशतावर्य्यादीनां ग्रहणम्। एषामार्द्राणामपि सर्वकार्य्येषु द्विगुणं न ग्राह्यम्। उक्तञ्च शार्ङ्गधरे,—"नवान्येवहि योज्यानि द्रव्याण्यखिलकर्म्मसु। विना विड़ङ्गकृष्णाभ्यां गुड़धान्याज्यमाचिकैः॥ गुड़ूची कुटजो वासा कुष्माण्डश्च शतावरी । अश्वगन्धा सहचरी शतपुष्पा प्रसारणी॥ प्रयोक्तव्या सदैवार्द्रा द्विगुणं नैव कारयेत्"—इति । विड़ङ्गादीनि नवानि न प्रशस्तानीति ज्ञेयम्। "शुष्कद्रव्ये तु या मात्रा चार्द्रस्य द्विगुणा हि सा। शुष्कस्य गुरुतीक्ष्णत्वात् तस्मादर्द्धं प्रकीर्त्तितम्"—इति परिभाषा॥

६। एकस्मिन्दिने यवाढ़कचतुष्टयस्य दाने अग्निपुराणम्,—"निस्तुषाणां प्रदातव्या यवानां चतुराढ़की"–इति ।

७। उत्तमे पूर्णा मात्रा मध्यमाधमयोरुत्तरोत्तरं पादहीना कर्त्तव्या ।

८। सार्द्धहीनन्त्विति पाठो युक्तः ।

१। सार्द्रस्य द्विगुणा मता । ख। ।

कनीयसोऽर्द्धहीनञ्चेदिति मानं शरीरिणाम् ॥ ८ ।

चणकाश्चैव माषाश्च ये चान्ये ब्रीहयस्तथा ।
यवार्द्धेन प्रयोक्तव्या देशसात्म्येन खादने ॥ ९ ॥

मुद्गप्रस्थास्त्रयो योज्या[१] वाजिनां मुद्गभोजने ।
त्रयश्च स्नेहकुड़वा एकश्च लवणस्य तु ॥ १० ॥

तत्प्रमाणेन तैलेन लवणेन तथैव च ।
माषा मुद्गसमा देया भोजनाय च वाजिनाम् ॥ ११ ॥

सर्पिषश्चापि पानार्थं[२] प्रस्थं दद्याद्विचक्षणः ।
मधुनः कुड़वं चापि फाणितस्य तथैव च ॥ १२ ॥

शर्कराश्चैव खण्डञ्च तथा मत्स्यण्डिकामपि ।
फाणितस्य प्रमाणेन दापयेन्मतिमान् भिषक् ॥ १३ ॥

---

८-११ । वाजिनां भोजनार्थे यवादीनामेवं मात्रा ;-एकदिने यवस्याढ़कचतुष्टयं । चणकमाषब्रीह्यादीनां आढ़कद्वयं मात्रा । मुद्गस्य च प्रस्थत्रयं । यत्रयत्र भोजने स्नेहव्यवस्था सर्वत्रैव स्नेहस्य कुड़वत्रयं लवणस्य च कुड़वो देयः । "चणकब्रीहिमौद्गानि कलायं वापि दापयेत् । अहोरात्रेण चार्द्धस्य यवस्य तुला दश ॥ अष्टौ शुष्कस्य दातव्यास्तत्रोऽथ बुषस्य वा"—इति अग्निपुराणम् । एवं माषभोजनेऽपि माषस्य ३ प्रस्थाः । तैलस्य ३ कुड़वाः । लवणस्य च कुड़वः ॥

१२ । फाणितं (फेणी) इति प्रसिद्धम् ।

---

१ मुद्गप्रस्थो नियोज्यो हि । गः । २ । सर्पिषश्चापि पानेऽर्द्धप्रस्थं । गः ।

अर्द्धप्रस्थन्तु तैलस्य पलान्यष्टौ गुड़स्य च ।
प्रतिपाने[1] सुरायाश्च प्रस्थमेकं प्रदापयेत् ॥ १४ ॥
चूर्णं च लवणं पिण्डीं पलैकां[2] चैव[2] बुद्धिमान् ।
चतुःपलं घृताद्दद्यात्स्नेहे पाने च भोजने[3] ॥ १५ ॥
पलानि दश कल्कस्य निरूहे संप्रदापयेत् ।
आढ़कञ्च कषायस्य दद्याद्बुद्धिमतां वरः ॥ १६ ॥
तावत्प्रमाणं क्षीरञ्च क्षीरवस्तौ प्रकीर्त्तितम् ।
...स्थः प्रदातव्यो निरूहे चैव वाजिनाम्[4] ॥ १७ ॥
...भ्यङ्गं कारयेत्तावत् यावद्बिन्दोश्च्युति[5] र्भवेत् ।
...षायप्रतिपानार्थे[6] द्वौ प्रस्थौ परिकीर्त्तितौ ॥ १८ ॥
प्रतिपानात्पलं[7] यूषं द्विगुणञ्चैव दापयेत् ।
अर्द्धाढ़कश्च दातव्यो रसस्नेहो[8] विचक्षणैः ॥ १९ ॥

---

१४-१५ । प्रतिपाने सुराया इति पानं प्रति सुराया एकः प्रस्थो देयः ।

१८ । कषायपानं प्रति द्वौ प्रस्थौ स्नेहादीनां मात्रा ।

१९ । प्रतिपानार्थे यत्र यूषव्यवस्था वर्त्तते, तत्र यूषो द्विगुणो ग्राह्यः ।

---

१ । प्रतिमाने । गः ।
२ । चैव पिण्डिकाश्चैव । खः ।
३ । घृतं दद्यात्स्नेहयेत्पानभोजने । गः ।
४ । वाजिनम् । खः ।
५ । श्रुतिः । खः ।
६ । कषायप्रतिपानार्थं । गः ।
७ । प्रतिमानात् । गः ।
८ । रसस्य । खः ।

पेयार्थे तण्डुलप्रस्थो[१] यवागूर्द्विगुणेन तु ।
भोजितस्यानुपानाय सुराप्रस्थः प्रकीर्त्तितः ॥ २० ॥
दापयेत्तण्डुलप्रस्थं[२] तण्डुलोदककर्म्मणि ।
यवागूमण्डकल्केन दद्याद्वै तण्डुलोदकम् ॥ २१ ॥
द्वौ प्रस्थौ शक्तुकानान्तु शक्तुपाने प्रदापयेत् ।
गुडस्य च पलान्यष्टौ आढकञ्चैव[३] वारिणः ॥ २२ ॥

---

२० । यत्र यत्र पेया व्यवस्था तत्र तत्र तण्डुलस्य प्रस्थो ग्राह्यः । पेया मण्डः । तथा यत्र यत्र यवागूव्यवस्था तत्र तत्र तण्डुलप्रस्थद्वयं ग्राह्यम् ॥ तथा पाकार्थं जलं पेयायां चतुर्द्दशगुणं दत्वा अर्द्धशृतं कर्त्तव्यम् । एवं यवाग्वां पाकार्थं जलं तण्डुलापेक्षया षड्गुणं देयमिति । पेयादिलक्षणमाह चक्रपाणिः,—"सिक्थकैरहितोमण्डः पेया सिक्थसमन्विता । यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा" इति । एषां पाकेऽपि वारिव्यवस्थामाह स एव । "अन्नं पञ्चगुणे साध्यं विलेपीतु चतुर्गुणे । मण्डश्चतुर्द्दशगुणे यवागूः षड्गुणेऽम्भसि" इति ॥

२१ । तण्डुलोदककर्म्मणि तण्डुलप्रस्थं गृहीत्वा कुट्टयित्वा च[?]गुणे वारिणि प्रक्षिप्य मर्द्दयित्वा गालयितव्यम् ।

२२ । प्रस्थमात्रे शक्तुनि जलाढकमात्रा ।

---

१ । तण्डुलः प्रस्थः । गः ।
२ । तण्डुलं प्रस्थं । गः ।
३ । इक्षोरसं समं । खः ।

इक्षोरससमं[1] देयं पानार्थे च गुड़ोदकम्।
प्रतिपाने[2] पलं देयं द्रव्याणां सुरया सह॥ २३॥
स्नेहस्य कुड़वश्चैव नस्यार्थे परिकोर्त्तितः।
भेदनीये च तीक्ष्णे[3] च पादोनं संप्रदापयेत्॥ २४॥
कर्णयोः पूरणे स्नेहो भवेन्नावनसंमितः।
शिरोविरेके दातव्यमर्द्धन्तु कुड़वस्य वै॥ २५॥
औषधस्य पलं देयं हिङ्गोरेकश्च माषकः।
नस्यप्रदाने चाश्वस्य[4] कर्षमेकं प्रदापयेत्॥ २६॥
धूपे चूर्णे[5] त्रयः कर्षा घृतकर्षश्च सौरभः।
अनिर्द्दिष्टकषायस्तु पादशेषः प्रकीर्त्तितः॥ २७॥
निर्विशेषप्रमाणानां द्रव्याणां पलमादिशेत्।
रुधिरस्याढ़को देयः पानार्थे यत्र युज्यते॥ २८॥

---

२३। इक्षोरससममिति अर्द्धाढ़कं गुड़ोदकं देयम्। तथा प्रतिपाने सुराप्रस्थेन सह द्रव्यपलं देयम्।

२४। पादोनमिति कुड़वांशविहीनं भेदनीयादि द्रव्यं देयम्।

२५। नावनसंमित इति नस्यविहितस्नेहकुड़व एव देयः।

२८। यत्र यत्र द्रव्याणां परिमाणं न निर्द्दिष्टं तत्र तत्र द्रव्यपलं ग्राह्यम्।

---

१। सम। गः। ४। देयस्य। गः।
२। प्रतिमाने। खः। ५। धूपे चूर्णे। खः।
३। भेदने दापयेत्तीक्ष्णे पादोनं। खः।

विंशतिस्त्रिगुणाश्चैव वारिमानं प्रकीर्त्तिताः।
अनुपानं तथाशीतिशतं जाङ्गलचारिणाम् ॥ २९ ॥
मांसानां दापयेत्[1] सम्यक् पलसङ्ख्यामिमां बुधः।
रसके भोजने देयं[2] वाजिनां हितकाम्यया ॥ ३० ॥
शिशुमारोद्रकुम्भीरगोधामण्डूककर्कटाः।
शङ्खकच्छपशुक्त्याद्याः कीर्त्तिता जलजन्तवः[3] ॥ ३१ ॥
गवयो गण्डको हस्ती शूकरो महिषो रुरुः।
आनूपाः कथिता ह्येते ये चान्येऽनूपवासिनः ॥ ३२ ॥
कृष्णसारशशद्वीपिच्छागसिंहतरक्षवः।
शम्बरैणकनीलाण्डवृषभोष्ट्राविकैड़काः ॥ ३३ ॥

---

३१। शिशुमारादयो जलजन्तवः। तेषु शिशुमारः शिशुघ्नः (शुशोक) इति प्रसिद्धः। उद्रो जलविड़ालः (उद्बिड़ाल्) इति प्रसिद्धः। मांसमष्टधोक्तं वैद्यकेषु मृगविष्कुरप्रतुदविलेशयप्रसहमहामृगजलचरमत्स्यभेदेन। इति।

३२। एतेऽनूपवासिनो महामृगमध्ये धृताः। गवयः सास्नाककुदरहितो गोसदृशः। गण्डकः खड्गी। महिषोऽश्वशत्रुः। रुरुो लोहितवर्णः।

३३। कृष्णसारः (कालसार्)। शशः शशकः। एष विलेशयः। द्वीपी चित्रकव्याघ्रः। तरक्षुः मृगादनः। शम्बरः विकटबड़-

---

१। कारयेत्। खः।
२। चैव। खः।
३। जलसम्भवाः। गः।

जाङ्गलाः पशवः प्रोक्ता ये चान्ये स्थलवासिनः[१]।
शशोऽतिलघुरेतेषां गुरुश्चैवाविकस्तथा[२] ॥ ३४ ॥
जम्बूवेतसहिन्तालकदलीनलवेणुभिः।
युक्तो बहुजलो[३] निम्नो देशोऽनूप उदाहृतः ॥ ३५ ॥
करीरुकशमीपीलु[४]करीरद्रुमशङ्करैः[५]।
खदिरैश्चापि संयुक्तस्तथा च वकुलैर्युतः ॥ ३६ ॥
जलहीनस्थलीप्रायो देशो जाङ्गल उच्यते।
साधारणो द्विरूपस्था[६]स्तज्जाः साधारणा मृगाः ॥ ३७ ॥
तेषां मांसप्रयोगेतु मात्रा साधारणा स्मृता।
पशवः पक्षिणश्चापि ज्ञेया देशसमाः सदा ॥ ३८ ॥
वारिजा गुरवः स्निग्धा वातघ्नाः श्लेष्मशुक्रलाः।
आनूपा वारिजैस्तुल्या किञ्चिच्च लघवः स्मृताः ॥ ३९ ॥
त्रिदोषशमना वल्या जाङ्गला मृगपक्षिणः[७]।
अनभिष्यन्दिनो हृद्याः कायाग्नेश्चापि रोधिनः ॥ ४० ॥

---

त्रिषाणो मृगः। एणकः कृष्णवर्णमृगः। नीलाण्डो वृष्यः। आविकः कम्बलकः। एड्को मेषो वनछगलो वा।

---

१। स्थलचारिणः। गः।
२। गुर्वी चैवाविका स्मृता। खः।
३। यद्विजलो। गः।
४। पीलू। गः।
५। सागरैः। खः।
६। द्विरूपस्य। खः।
७। मृगपक्षिणः। गः।

साधारणाः समुद्भूता ज्ञेयाः साधारणाः सदा।
रसवीर्य्यविपाकाश्च[1] तेषां साधारणा मताः॥ ४१॥
कल्काच्चतुर्गुणः स्नेहः स्नेहात् क्वाथश्चतुर्गुणः।
स्नेहपाके विधिश्चायं समानः परिकीर्त्तितः॥ ४२॥
स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते च नोऽशब्दस्तदा सिद्धिं विनिर्दिशेत्॥ ४३॥
व्रणे नस्ये तथा वस्तौ मृदुपाकः प्रकीर्त्तितः।
अभ्यङ्गे मध्यपाकस्तु पाने किञ्चिद्दरो भवेत्॥ ४४॥
मध्यमोत्तमहीनानामेवमेव विचक्षणः।
वयोऽनुरूपद्रव्याणि[2] दापयेच्च शरीरतः॥ ४५॥
वर्षजाते[3] भवेत्पादो द्वौ पादौ च द्विहायने।
त्रयस्त्रिहायने देयाः पूर्णं दद्यात्ततः परम्॥ ४६॥
कृशे चाल्पप्रमाणे च दद्यान्मात्रां कनीयसीम्।
महाकाये तथा स्थूले प्रयोज्या मध्यमोत्तमाः॥ ४७॥

---

४२। तैलपाकविधाने द्रव्यमानमाह कल्कादित्यादि।
४३। पाकसिद्धिलक्षणमाह। स्नेहेति।

---

१। विपाकेषु। खः।
२। यथानुरूपद्रव्याणां। गः।
३। द्वौ चैव। गः।

खाद्यपानप्रलेपेषु[1] वाह्ये चापि तपोधनैः।
अनिर्द्दिष्टे जलं प्रोक्तं लवणञ्चैव सैन्धवम्॥ ४७॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे द्रव्यमाचाख्याने एकादशोऽध्यायः॥

---

## अथ द्वादशोऽध्यायः॥

निघण्टुः।

निघण्टुं संप्रवक्ष्यामि पूर्व्वशास्त्रानुसारतः।
द्रव्याणामवबोधस्तु येन सम्यक् प्रजायते॥ १॥
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता।
वृषो वासाटरूषश्च वासकः परिकीर्त्तितः॥ २॥

---

४७। अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं मतमिति चक्रपाणिः। लवणञ्चैवेति स्थाने लवणे चैवेति पाठो युक्तः॥

१। निघण्टुर्नामसङ्ग्रह इति हेमचन्द्रः। द्रव्याणामिति अस्मिन् शास्त्रे प्रयुक्तानां गुडूच्यादिधातुजातान्तानामौषधीनाम्॥

२। वत्सादनीपञ्चकं (गुलञ्च)। मधुपर्णी कुण्डली चक्रलक्षणापि एतत्पर्य्यायः। वृषादिचतुष्कं (वाकस)। वासायां सिंहास्यः वाजिदन्तश्च॥

---

१। खाद्ये पाने प्रलेपेऽङ्गे। ख।

कुरुविन्दं घनं मुस्तं मेघाख्यं नागकेशरम्।
उदीच्यो जलनामा[1] च वहिरिष्टश्च वालकः॥ ३॥
उरुवूको व्याघ्रदलस्तथा गन्धर्व्वहस्तकः।
एरण्डः कीर्त्तितो वैद्यै र्वातारिश्च विशेषतः॥ ४॥
ब्रह्मदण्डी च भार्गी च तथा च द्विजयष्टिका।
मकूलोदुम्बरदला[2] दन्ती प्रोक्ता निकुम्भिका॥ ५॥
एकाष्ठीला स्मृता पाठा अम्बष्ठा च प्रकीर्त्तिता।
उषणा चविका चव्या; अजमोदा च दीप्यकः॥ ६॥

३। कुरुविन्दपञ्चकं (मुता)। एषु कुरुविन्दं कुरुविल्लं वा नागरमुस्तायां वर्त्तते। वालेयं परिपेलवमपि मुस्तावाचकं। गाङ्गेयं भद्रमस्तं कुटन्नटश्च नागरमुस्तावाचकम्॥ उदीच्यचतुष्कं (वाला)। ह्रीवेरं दिव्यं केशनाम च तद्वाचकम्॥

४। उरूवकपञ्चकं (एरण्ड)। एरण्डे—व्याघ्रपुच्छः रुचकः, चित्रकः, रुवुकः, पञ्चाङ्गुलः, वर्द्धमानः, मण्डः, वर्द्धमानः, व्यड़म्बकश्चापि॥

५। ब्रह्मदण्डी-त्रिकं (वामनहाटी)। फञ्जिका, पद्मापि। मकूलादिचतुष्कं (दन्ती)। दन्त्यां प्रत्यक्श्रेणी चित्रा उपचित्रा अणुरेवती द्राक्षायणी विशल्या च पर्य्यायशब्दः॥

६। एकाष्ठीलात्रिकं (आकनादि)। पाठायां अविद्धकर्णी, स्थापनी श्रेयसी रसा पापचेली प्राचीना वनतिक्तिकापि। उषणात्रिकं (चइ)। अजमोदाद्विकं (राधुनि)। यमान्यां उग्रगन्धा॥

१। अजनामा। खः।
२। मुकुलोदुम्बरा दन्ती प्रोक्ता च नवकुम्भिका। गः।

जिङ्गी च विकसा वापि मञ्जिष्ठा परिकीर्त्तिता।
अनन्ता सारिवा गोपी सूक्ष्मा देवीलता लघुः॥ ७॥
मृद्वीका गोस्तनी द्राक्षा कच्छुरा[1] च शठी स्मृता।
श्रीवेष्टकं[2] दधिकं स्यात्सुरभी शल्लकी सुधा॥ ८॥
कच्छुरा ताम्रपुष्पी च नादेयी भूमिजम्बुका।
अश्वत्थः पिप्पलो वोधिर्न्यग्रोधो वहुपाद्वटः॥ ९॥
उदुम्बरस्तु यज्ञाङ्गो गर्द्दभाण्डः[3] कपीतनः।
पाषाणभेदो विख्यातः शिलाभेदोऽश्मभेदकः॥ १०॥

७। जिङ्गीत्रिकं (मञ्जिष्ठा)। मञ्जिष्ठायां समङ्गा कालमेषी मण्डूकपर्णी भण्डीरः योजनवल्ली योजनपर्णी च। अनन्तापट्कं (श्यामालता)। श्यामलतायां उत्पलशारिवा च॥

८। मृद्वीकात्रिकं (द्राक्षा)। कच्छुराद्विकं (शठी)। श्रीवेष्टकपञ्चकं (शल्लकी)। द्राक्षायां स्वाद्वी मधुरसेति च॥

९। कच्छुराचतुष्कं (नारङ्गा)। अश्वत्थत्रिकं (अश्वत्थ)। न्यग्रोधत्रिकं (वट)। अश्वत्थे चलदलः कुञ्जराशनोऽपि। वटे व्यामस्य, नागरङ्गे ऐरावतोऽपि॥

१०। पाषाणादित्रिकं (पातरकुचा)। उदुम्बरद्विकं (यज्ञडुम्बुर)। गर्द्दभाण्डद्विकं (पाकुड़)। उडुम्बरे जन्तुफलः हेमदुग्धश्चापि। गर्द्दभाण्डः प्लक्षः, स च कन्दरालः सुपार्श्वकस्य। अयस्य पत्रकाण्डफलादिभिरश्वत्थाकारः॥

---

१। कच्छुरावापि। गः। २। गर्द्दभाङ्गः। खः।
२। श्रीवेष्टकं। खः।

वृक्षादनी च वन्दाकी[1] सुरसा तुलसी स्मृता ।
राक्षसी चैव चण्डाच चोरपुष्पाभिधीयते[2] ॥ ११ ॥
अगुरुर्लोहसंज्ञस्तु राजार्हश्चापि[3] कीर्त्तितः ।
यवानिकातु भूतीका, खदिरं दन्तधावनम् ॥ १२ ॥
नलदा[4] चैव मांसीतु हेमाख्यं[5] नागकेशरम् ।
गोधावती च सुवहा, गुन्द्रस्तेजनकः शरः[6] ॥ १३ ॥
चूड़ाला चक्रला चैव उच्चटा परिकीर्त्तिता ।
बीजं कुटजवृक्षस्य कीर्त्तितं मुनिभिः पुरा ॥ १४ ॥

---

११। वृक्षादनीद्विकं (परगाछा)। सुरसाद्विकं (तुलसी)। राक्षसीचिकं (चोरकाँचकी)। वृक्षादन्यां वन्दा वृक्षरुहा जीवन्तिकापि च। चोरपुष्पार्थां शंखिनी केशिन्यपि च ॥

१२। अगुरुचिकं (अगुरु)। अगुरौ वंशिकः जोंगकश्चापि। खदिरे गायत्री वालतनयश्चापि॥

१३। नलदाद्विकं (जटामांसी) जटामांस्यां तपस्विनी, जटिला लोमशा मिषिः किरातिनी चेति। हेमद्विकं (नागेश्वर) द्विपाङ्कः सर्पाङ्कस्ताम्येयश्च नागकेशरपर्य्यायः। गोधावतीद्विका (गोयालिया लता)। गुन्द्रत्रिकः (शर) ॥

१४। चूड़ालाचिका (ओकड़ा)। इन्द्रयवे भद्रयवमपि ॥

---

१। गन्धाकी। खः।
२। तथा। गः।
३। सोऽप्रख्या, प्रकीर्त्तितः। खः।
४। जलदा। गः।
५। मेदाख्यं। गः।
६। शरः। गः।

कलिङ्गन्द्रयवाह्वन्तु वसुको वसुहट्टकः[१]।
त्रुटिर्वयस्था सूक्ष्मैला स्थूलैला तालकाफलम्[२] ॥ १५ ॥
अक्षीवश्चाक्षकश्चैव अजकः[३] परिकीर्त्तितः।
युग्मपत्रः कोविदारः कुरवः[४] कोकिलाक्षकः ॥ १६ ॥
शिग्रुः शोभाञ्जनः प्रोक्त[५]स्तत्फलं मरिचं सितम्।
अतिपत्रा महापत्रा सूक्ष्मपत्रा वला स्मृता ॥ १७ ॥
समङ्गा वाधपुष्पी च वातला[६] वाथ कादली।
महाद्रुमश्च वज्री च सुहा चैव[७] सुही स्मृता ॥ १८ ॥

---

१५। कलिङ्गद्विकं (इन्द्रयव)। वसुकद्विकं (वक्फुल)। त्रुटि-त्रिकं (छोटएलाच्)। स्थूलद्विकं (वड़एलाच्)। सूक्ष्मैलायां त्रिपुटा कोरङ्गी उपकुञ्चिकापि। स्थूलैलायां पृथ्वीका, चन्द्रवाला निष्कुटिः तथा बहुलापि॥

१६। अक्षीवत्रिकं (रुद्राक्ष)। युग्मपत्रद्विकं (रक्तकाञ्चन)। कुरव-द्विकं (झाँटी)। कोविदारे चमरिकः कुद्दालश्चापि।

१७। शिग्रुद्विकं (साजने)। शिग्रौ तीक्ष्णगन्धा चीरमोचकापि। शिग्रुफलं श्वेतमरिचमुच्यते। अतिपत्रचतुष्कं (वेलेड़ा)।

१८। समङ्गाचतुष्कं (समङ्गा)। सुह्यां सीजपड़ी वज्रद्रुः गुड़ा समन्तदुग्धा च॥

---

१। वसुहट्टकः। गः।
२। तालकाफलकं तथा। खः।
३। कच्छुकः।
४। त्रुटिः। गः।
५। जरकः। खः।
६। वाधाला वाप्यथादनी। खः
७। सुहः। गः।

अर्कस्य रविनामानि विज्ञेयानि विचक्षणैः ।
धत्तूरः काञ्चनः प्रोक्तस्तथाचोन्मत्तकः स्मृतः[1] ॥ १९ ॥
करवीरोऽश्वमारश्च चित्रको वह्निसंज्ञकः[2] ।
कोषातकी महाजाली देवदाली च कीर्त्तिता ॥ २० ॥
धामार्गवश्च विख्यातो घोषा[3] चेतिच सूरिभिः ।
आरग्वधः कृतमालो[4] व्याधिघ्नश्चतुरङ्गुलः ॥ २१ ॥
मार्जनस्तिल्वकश्चैव सावरो लोध्र उच्यते ।
नक्तमालः करञ्जश्च चिरविल्वः प्रकीर्त्तितः ॥ २२ ॥

---

१९। अर्कपर्य्याये वसुकः आस्फोतः गणरूपः विकीरणः मन्दारः अर्कपर्णश्च। धत्तूरत्रिकं (धुतुरा)। धुस्तूरपर्य्याये कितवो धूर्त्तश्च ॥

२०। करवीरद्विकं (करवी)। करवीरपर्य्याये प्रतिहासः शतप्रासः चण्डातश्च। चित्रकद्विकं (चिते)। कोषातकीत्रिकं (श्वेतघोषा)। महाजाली पीतघोषा ॥

२१। धामार्गवः पीतघोषा ॥

२२। मार्जनचतुष्कः (लोध्काष्ठ)। मार्जनतिल्वकौ रक्तलोध्रौ। एतत्पर्य्यायस्तिरीटस्तिन्दुजश्च। सावरः पाटियारोध्रः। महारोध्रः शावरश्च तत्पर्य्यायः। सम्पाको राजवृचश्च। लोध्रपर्य्याये गालवश्च। नक्तमालेत्यादित्रिकः करञ्जवर्गः॥

---

१। असः। खः।
२। घोषकः। खः।
३। विख्यातः। गः।
४। मार्जारः। खः।

पूतीकरञ्जः पूतीकः प्रकीर्य्यः कलिमारकः।
कपित्थस्तु दधित्थः स्यान्मालूरो विल्व उच्यते ॥ २३ ॥
झाटलो मुष्ककः प्रोक्तस्तथा वै घण्टकः स्मृतः।
इक्षको वत्सकश्चैव कुटजो गिरिमल्लिका ॥ २४ ॥
वीजको वीजपूरश्च[1] मातुलुङ्गश्च पूरकः।
कदली कीर्त्तिता रम्भा हरिद्रा राचिनामिका ॥ २५ ॥
द्रवन्ती चैव चित्रा च तथा मूषकपर्णिका[2]।
सर्व्वानुभूतिः सरला त्रृता कालमेषिका ॥ २६ ॥

२३। पूतीकरञ्जादित्रिकं (नाटाकरञ्ज)। पूतीका कलिमाल्य-श्चास्य पर्य्यायः। कपित्थद्विकं (कयेत्)। कपित्थस्य पर्य्यायो ग्राही मन्मथः दधिफलः पुष्पफलः दन्तशठश्च। मालूरद्विकं (वेल्)॥

२४। झाटलादित्रिकः घण्टापारुलिपर्य्यायः। घण्टको नागव-ल्लायाश्चापि वर्त्तते। अस्य पर्य्यायो मोचश्च। अयं इचकादिचतुष्कः कुटजपर्य्यायः॥

२५। वीजकचतुष्को जम्बीरपर्य्यायः (टाबालेबु)। फलपूरो रुचकश्चास्य पर्य्यायः। वारणवुसा मोचा, अंशुमत्फला काष्ठीला चेत्यपि कदलीपर्य्यायः॥ पाटलोऽपि पाठः।

२६। द्रव्यन्तीत्रिका (उन्दुरकाणीपाना)। उपचित्रा न्यग्रोधी शम्बरी वृषा प्रत्यक्श्रेणी सुतश्रेणी रण्डा च एतत्पर्य्यायः। उप-

१। वीजजम्बश्च। गः।
२। मूषिका मूषपर्णिका। खः।

मसूरविदला वापि त्रिवृत्प्रोक्ता त्रिकण्टका।
यष्टिका त्रिदला रूपं क्लीतकं मधुयष्टिका॥२७॥
यष्ट्याह्वं[1] मधुकञ्चैव कीर्त्तितं शास्त्रशालिभिः।
हैमवत्युग्रगन्धा च षड्ग्रन्था च वचा स्मृता॥२८॥
शकुलादन्यरिष्टा च कटुका कटुरोहिणी।
फलिनी च प्रियङ्गुः स्यात् द्विषक्सेना च कीर्त्तिता॥२९॥
यवासो धन्वयासश्च दुस्पर्शा च दुरालभा।
श्वेतभण्डा च खुरिका शारदी गिरिकर्णिका॥३०॥

---

त्रिचा दन्तीवाचिकाऽपि। सर्व्वानुभूत्यादिस्त्रिवृत्पर्य्यायः। (श्वेत-तेवड़ी)। अस्याः पर्य्यायः त्रिपुटा त्रिभण्डी रेचनी चेति। काल-मेषिका अरुणमूलात्रिवृत्। अस्याः पर्य्यायः श्यामा पालिन्धी सुषेणिका काला अर्द्धचन्द्रा चेति।

२७-२८। यष्टिकाष्टकं (यष्टिमधु)॥

२८। हैमवत्यादिचतुष्को वचापर्य्यायः। (वच)। हैमवती शुक्ला वचा। गोलोमी शतपर्व्विका चेत्यपि वचापर्य्यायः॥

२९। शकुलादन्यादिः कटुकीपर्य्यायः। शकुलादनी कटुकी। मत्स्यपित्ता चक्राङ्गी कृष्णकटुकीपर्य्यायः। कटुः कटम्वरा अशोक-रोहिणी च कटुकीपर्य्यायः। फलिनीत्रयं (प्रियङ्गु)। महिला लता गोवन्दनी गुन्द्रा फली गन्धफली कारम्भा प्रियकश्च प्रियङ्गुपर्य्यायः॥

३०। यवासादिचतुष्को दुरालभापर्य्यायः। यासः कुनाशः

---

१। यष्ट्याह्वं मधुरं। गः।

अपराजिता समुद्दिष्टा वेणुवंशश्च कीर्त्तितः ।
शंखिणी तिक्तला प्रोक्ता, सप्तला चर्म्मकारिका ॥ ३१ ॥
ऋषभः स्याद्दृषभको जीवकः कूर्चशीर्षकः ।
शीतपाकोच[1] काकोली माषपर्णी महासहा ॥ ३२ ॥
मुद्गपर्णी क्षुद्रसहा, पयस्यादित्यपुष्पिका ।
क्षीरिका राजवृक्षश्च[2] तथा वै पार्थिवादनी ॥ ३३ ॥

---

रोदनी कच्छुरा अनन्ता समुद्रान्ताचेत्यपि तत्पर्य्यायः । श्वेतभण्डा-दिपञ्चकं (श्वेतापराजिता)। आस्फोता विष्णुक्रान्तापि तत्पर्य्यायः ॥

३१ । शंखिनी तिक्तला चोरपुष्पी । सप्तला चर्म्मकशाच नवमा-लिकायां (चामरकषा) । एतत्पर्य्यायः, विमला सातला भूरिफेना चेत्यपि ज्ञेयः ॥

३२ । ऋषभः स्वनामख्यातः । शृङ्गी वृषभो वृषश्च एतत्प-र्य्यायः। जीवकः स्वनामख्यातः। एतत्पर्य्यायश्च मधुरकः शृङ्गो ह्रस्वाङ्गश्च । माषपर्णी (माषाणी) । एतत्पर्य्यायः—हयपुच्छी काम्बोजी चेति ॥

३३ । मुद्गपर्णी मुगानीति प्रसिद्धा । काकमुद्गा सहा चेत्यपि एतत्पर्य्यायः। पयस्या पञ्चका। पयस्यादित्यपुष्पिका चेति लोहितार्के-ऽपि वर्त्तते। (लाक्षाकन्द) ।

---

१ । शीतापादी च । गः ।

२ । राजक्षवकः । ख० ।

शालपर्ण्यंशुमती स्यात्तथा चापि स्थिरा ध्रुवा।
पृश्निपर्णी पृथक्पर्णी कलशी धावनी गुहा ॥ ३४ ॥
वार्त्ताकी वृहती सिंही भाण्टाकी दुष्प्रधर्षणी।
निदिग्धिका स्पृशा व्याघ्री क्षुद्रिका कण्टकारिका ॥३५॥
राटं पिण्डीतकं गोलं श्वसनं मदनं फलम्।
लामज्जको मृणालश्च सेव्यश्चोशीर उच्यते ॥ ३६ ॥
पलङ्कषा च चिचांशुर्गुग्गुलुः कौशिकः पुरः।
श्योणाको दीर्घवृन्तश्च कट्वङ्गश्चैव टुण्टुकः ॥ ३७ ॥
काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला।
हरिवालं सुगन्धञ्च ऐलेयं चैलवालुकम् ॥ ३८ ॥

---

३४। शालपर्णी चतुष्का (शालपाणि)। विदारीगन्धापि शाल-पर्ण्यां वर्त्तते। पृश्निपर्णी पञ्चका (चाकुले) ॥

३५। वार्त्ताकी पञ्चका (वृहती)। निदिग्धिकादिपञ्चकः कण्ट-कारीपर्य्यायः ॥

३६। राटादिर्मदनपर्य्यायः। मरुवकः करहाटः शल्यश्च मदन-पर्य्यायः। लामज्जकश्चतुष्कः (गन्धवेणा)। अभयं नलदं जलाशयं लघुलयं अवदाहं इष्टकापथश्चापि तत्पर्य्यायः।

३७। पलङ्कषा पञ्चका (गुग्गुल्)। श्योणाकश्चतुष्कः (शोणा) ॥

३८। काकोदुम्बरिका चतुष्का (फेगुड़ा) इति पार्व्वतीयभाषा। हरिवालादिरैलवालुकपर्य्यायः ॥

---

१। वधो। गः।

वक्रं नतञ्च तगरं जिम्भं कालानुशारिवा ।
अभीरुर्बहुपुत्री च तथा मूला शतावरी ॥ ३९ ॥
दूर्व्वा सहस्रवीर्य्या स्याच्छतवीर्य्या तु सा मता ।
छत्रा मधुरिका प्रोक्ता मिषिर्माङ्गलिका च सा ॥४०॥
भरद्वाजी च कार्पासी शृङ्गी कर्कटशृङ्गिका ।
कुटन्नटञ्च धन्यञ्च प्लवञ्च परिपेलवम् ॥ ४१ ॥
गोकण्टको गोक्षुरकः खरदंष्ट्रा त्रिकण्टकः ।
बिम्बी रक्तफला प्रोक्ता तथा रक्तोष्ठका मता ॥ ४२ ॥

---

३९ । वक्रादि पञ्चकं (शीउलिछोप्) तगरपादिक इत्यपि प्रसिद्धम् । अभीरुरित्यादिः शतमूलीपर्य्यायः—इन्दीवरी वरी च्छयप्रोक्ता भीरुपत्री नारायणी चेत्यपि तत्पर्य्यायः ।

४० । दूर्व्वादि त्रिकं (दूर्व्वा) । शतपर्व्वा भार्गवी अनन्ताचापि दूर्व्वापर्य्याये वर्त्तते । छत्रादि चतुष्टयं मधुरिकापर्य्यायः (मौरी) । शालेयः मिश्रेयः शीतशिवोऽपि ॥

४१ । भरद्वाजी द्वयी कार्पासे वर्त्तते । तुण्डिकेरी, समुद्रान्ता बदरेति च तत्पर्य्यायः । भरद्वाजी वनकार्पासी । शृङ्ग्यादि द्वयं कर्कटशृङ्ग्यां वर्त्तते । (काँकड़ाशृङ्गी) । कुटन्नटादि चतुष्टयं कैवर्त्त-मुस्तायां वर्त्तते । दाशपुरं वालेयं गोपुरं गोनर्द्दञ्चापि तत्पर्य्यायः ॥

४२ । गोकण्टकादि चतुष्टयं गोक्षुरपर्य्यायवाचकम् । एत दतिरिक्तोऽपि पर्य्यायशब्दः पलंकषा इक्षुगन्धा स्वादुकण्टकः वन-शृङ्गाटश्चेति ॥

सैरीयकः सहचरी वाणा दासी कुरुण्टका।
कुस्तुम्बुरुश्च धन्याको गोलोमी भूतकेशिका[1] ॥ ४३ ॥
श्रेयसी चैव चण्डा च रास्ना च परिकीर्त्तिता।
अर्ज्जुनः ककुभः पार्थः क्षीरस्रो धनञ्जयः ॥ ४४ ॥
— — — — प्रियको जीवको मतः।
ज्योतिष्मती हैमवती तेजोवत्यप्युदाहृता ॥ ४५ ॥

---

४३। सैरीयको (झाँटी)। सहचरी कुरुण्टकश्च (पीतझिण्टी)। वाणा दासी च 'नीलझिण्टी'। कुरुवको रक्तझिण्टी। कुस्तुम्बुरु धन्याकम्। वेषणा उग्रा वितानश्च तत्पर्य्यायः। गोलोमी क्षुद्रक्षुपविशेषः (गोधुमा, पाथुरी) इति भाषा। श्वेतदूर्व्वायाश्च। गोलोमो भूतकेशश्च पच्यते।

४४। श्रेयसी चिका (रास्ना)। श्रेयसी गजपिप्पली पाठा च। चण्डा, कपिकच्छुः शंखपुष्पी च। अर्ज्जुनादिः पञ्चकोऽर्जुनवृक्षपर्य्यायः।

४५। ज्योतिष्मत्यादि त्रयं वचापर्य्यायवाचकम्। "तीक्ष्णोग्रगन्धा जटिला मङ्गल्या विजया वचा। षड्ग्रन्थोग्राच रक्षोघ्नी सिता हैमवती च सा। मेध्या षड्ग्रन्थिका श्वेता वचा स्याद्दीर्घपत्रिका"। इति श्वेतवचा॥ "कुलिञ्जो गन्धमूलश्च तीक्ष्णगन्धश्च वर्व्वरः"। इति भैरवी वचा।

---

१। मितकेशिका। खः।

कुठेरकोऽर्जकश्चैव[1] पर्णासः परिकीर्त्तितः ।
ब्रह्मपुष्पः[2] फणिज्झस्तु, तर्कारी वैजयन्तिका ॥ ४६ ॥
त्रायमाणा सहृचाणी[3] कोलवल्ली च पिप्पली ।
नीलिनी चैव नीली स्यात् सोमराजी च वाकुची ॥४७॥
रोहीतकः प्लीहशत्रुः, वातपोषस्तु किंशुकः ।
सर्पदंष्ट्रा वृश्चिकाली आस्फोता वनमालिका[4] ॥ ४८ ॥

४६ । कुठेरकादि त्रिकं श्वेततुलसीपर्य्यायवाचकम् । तथा कटिञ्जरः श्वेतपत्रश्च । फणिज्झको गन्धतुलसी । तर्कारी वैजयन्तिकेति द्वयं जयन्तीवाचकम् ।

४७ । त्रायमाणादिर्द्विको बलालतापर्य्यायः । कोलवल्ली गजपिप्पली । "श्रेयसी कोलवल्ली च गजाह्वा हस्तिपिप्पली"। इति मुक्तावली । नीलिनी नीलीचेति (नील)। तत्पर्य्यायः कला क्लीतकिका ग्रामीणा मधुपर्णिका रञ्जनी श्रीफली तुत्था द्रोणी दोला चेति ।

४८ । रोहीतकः प्लीहशत्रुरिति (रोढ़ा) वाचकः। एतत्पर्य्यायो वरतिक्तो रोहितश्च । वातपोषः किंशुकश्च पलाशे वर्त्तते । एतत्पर्य्यायो वातप्रस्थः। वातपोषस्थाने वातपोत इति मुक्तावली । सर्पदंष्ट्रा वृश्चिकाली (विछाटी)। एतत्पर्य्यायः; महाकाली क्रोष्टुः धूमरपत्रिका वृश्चिपत्री नागदन्तिका चेति । विछवास्थाने वित्तन्नं पठ्यते क्वचित् । आस्फोता द्विका । (हापरमाली)।

१ । कटहस्चैव । गः ॥ ३ । सुहृद्रोणी । गः ॥
२ । ब्रह्मपुष्पापराभिद्रः । खः ॥ ४ । वनमल्लिका । खः ।

चित्रा गवाक्षी गोडुम्बी[1] सुषवी कारवेल्लिका[2]।
मार्कवो भृङ्गराजः स्यात् सुनिषण्णं वितुन्नकम् ॥४९॥
काला गृध्रनखी हिंस्रा सर्पगन्धा तु नाकुली ।
कट्वम्बरा[3] प्रसारणी गोजिह्वा दर्व्विपत्रिका[4] ॥ ५०॥
महौषधं शृङ्गवेरं नागरं विश्वभेषजम् ।
मागधी चोपकुल्या च वैदेही पिप्पली कणा ॥५१॥
शितोपला शिता चापि शर्करा परिकीर्त्तिता।
विशेषौ द्वौ तु खण्डस्य मत्स्यण्डी फाणितौ समौ ॥५२॥

---

४९। चित्रादि त्रिकं। (गोमुक्)। "चित्रा गवाक्षी गोडुम्बा गोडुम्बा नृपवल्लभा"। इति मुक्तावली। सुषवी द्विकं। (करेलाउच्छे)। तोयवल्ली कटिल्लश्च । मार्कवो द्विकः (भीमराज)। सुनिषण्णं द्विकं (शुषणिशाक्) ।

५०। कालादि त्रयं कण्टकपालोति प्रसिद्धम्। कट्वम्बरा चतुष्का। (गन्धभादुले)। सरणा राजवला भद्रवलेति च तत्पर्य्यायः।

५१। महौषधादि चतुष्कं शुण्ठीवाचकम् ।(शुँट्)। मागध्यादि चतुष्कं पिप्पलीवाचकम्। (पिपुल)।

५२। शितोपलादि त्रिकं शर्करावाचकम्। खण्डस्य द्वौ विशेषौ मत्स्यण्डीफाणितौ च। मत्स्यण्डी (मिछुरि)। फाणितः (फेणी)।

---

१। गोदग्धा। खः।
२। कारविल्वकः। गः।
३। कटंवरी।
४। दीर्घपत्रिका।

गुटिको मिषरो मत्स्यो मत्स्यण्डी परिकीर्त्तितः[1] ।
फाणितस्तद्द्रवश्चापि विहितो मुनिपुङ्गवैः ॥ ५३ ॥
हरीतक्यभया पथ्या अमोघा चाव्यथा शिवा ।
धात्री चामलकी प्रोक्ता विभीतोऽक्षः कलिद्रुमः ॥५४॥
जन्तुकं रामठं हिङ्गु वेलनं परिपोषणम्[2] ।
जरणो जीरकोऽजाजी कारवी कृष्णजीरकः ॥ ५५ ॥
भद्रं श्रीचन्दनं श्वेतं कर्पूरं चन्द्रनामकम् ।
किराततिक्तं भूनिम्बं क्षौद्रं पुष्परसो मधु ॥ ५६ ॥

---

५३ । गुटिकादि चतुष्कं मत्स्यण्डीपर्य्यायवाचकम् ।

५४ । हरीतक्यादि षट्कं हरीतकीवाचकम् । वयःस्था पूतना अमृता चेतकी श्रेयसी चेति तत्पर्य्यायः । धात्र्यादि द्विकं आमलकवाचकम् । तीर्था कर्षफलाच तत्पर्य्यायः । तथा विभीतकादि त्रिकम् । संवर्त्तः कल्पवृत्तश्च तत्पर्य्यायः ।

५५ । जन्तुकादि पञ्चकं हिङ्गुपर्य्यायवोधकम् । जरणादि त्रयं जीरके वर्त्तते ।

५६ । भद्रं श्रीचन्दनञ्च श्वेतचन्दनवोधकम् । चन्द्रनामकमिति चन्द्रपर्य्यायवाचकशब्दमात्रं कर्पूरवाचकम् । किराततिक्तादि द्विकं (चिरेता) । क्षौद्रादि त्रयं मधुवाचकम् ।

---

१ । चापि मत्स्यण्डी खण्डस्य परिकीर्त्तितः । गः ।

२ । परिचोषणम् । खः ।

प्रसन्ना मदिरा कल्या गौड़ी शुण्डी सुधा सुरा।
अवन्ती सैव धान्याम्लः काञ्जिकस्थारणालकः ॥५७॥
उदश्विन्मथितं चैव तक्रं घोलं प्रकीर्त्तितम्।
दधिमण्डं स्मृतं मस्तु मनाग् जातन्तु मण्डकम् ॥५८॥
प्रपौण्डरीकं श्रीपुष्पं सैन्धवं लवणोत्तमम्।
कापोतः सर्ज्जिकाक्षारो यवक्षारो यवाग्रजः ॥५९॥

---

५७। प्रसन्नाद्यष्टकं सुरावाचकम्। धान्याम्लादि त्रिकं काञ्जिकबोधकम्।

५८। उदश्वित् अर्द्धजलयुक्ते घोले वर्त्तते। तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलमित्युक्तेः। तदुक्तं "किलाटं दधि दुग्धस्य तक्रं पादजलान्वितम्। तक्रं गोरसजं घोलं कालसेयं विलोड़ितम्"—इति मुक्तावल्याम्॥ दधिमण्डं मस्तु (मात्)। मण्डं दधिभवं मस्त्विति कोषः। मण्डं (माड़्)॥

५९। प्रपौण्डरीकं श्रीपुष्पञ्च (पुण्डरीयाकाष्ठ)। श्रीपुष्पं पुण्डरीयाविशेषः। अस्य पर्य्याये मुक्तावली,—"प्रपौण्डरीकं पुण्ड्र्यं भूतघ्नी श्रवणाह्वया"। अन्या,—"प्रपौण्डरीकं चक्षुष्यं शीतं श्रीपुष्पमुण्डरि" इति॥ कपोतद्वयं सर्जिक्षारे (साचिक्षार)। "कापोतं सर्जिका सर्जिः शूलघ्नी सुखवर्चसः"—इति मुक्तावली॥ यवक्षारो यवसम्भूतः क्षारः। "पाक्यक्षारो यावशूको यवक्षारो यवाग्रजः"—इति मुक्तावली।

मनःशिला तु वैगन्धि हरिता नटमण्डनम्[१]।
सौवर्चलन्तु रुचकं गन्धाश्मा तु[२] वलीयसी ॥ ६० ॥
हरेणुर्ब्राह्मणी कौन्ती रोहिषं[३] रक्तचित्रकम्।
शरणं क्रियते[४] कर्म्म चण्डलैर्येन सर्व्वदा ॥ ६१ ॥
तं प्राहुर्मुनयो गव्यं मधूच्छिष्टन्तु सिक्थकम्।
अजस्तुमा रुद्रवंती[५] कलायस्तु हरेणुका ॥ ६२ ॥

---

६०। मनःशिला द्विका(मनछाल)। मनःशिलायाः पर्य्यायो यथा,—"मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका। नैपाली कुनटी गोला मनोगुप्तोत्तमाशिला"—इत्यमरः। हरितालपर्य्यायशब्दाश्च यथा,—"पिञ्जरं पित्तलं तालमालं च हरितालकम्। छत्राङ्गं काञ्चनरसं गोदन्तं नटमण्डनम्"—इति मुक्तावली॥ सौवर्चलं द्विकं। (सौवर्चल-लवण)। कृष्णलवणं मात्रश्चास्य पर्य्यायः॥ गन्धोऽश्मा गन्धकम्। अस्य पर्य्यायः,—"गौरीवीजं वलिर्गन्धः पाषाणो गन्धकः स्मृतः"—इति मुक्तावली॥

६१। हरेण्वादि त्रयं (रेणुक)। भस्मगन्धिनी कपिला च तत्पर्य्यायः। रोहिषादि द्विकं। (रांचिचे)।

६२। अतस्तुमा रुद्रवती इति पाठोयुक्तः॥

---

१। हरितालमलं नटम्। खः।
२। गन्धामात्रचवीयसा। खः।
३। रोहितं। गः।
४। सरणोक्रियते चर्म्म। गः।
५। मात्रद्रवनी। खः।

अपामार्गः शैखरिकः प्रत्यक्पुष्पी मयूरकः ।
पुनर्णवा तु वर्षाभूः शोतघ्नो प्रावृषायणी ॥ ६३ ॥
वृश्चिका श्वेतनामा स्याद् रक्तनामा कठिल्लिका ।
इन्द्राणी इन्द्रसुरसा[१] निर्गुण्डी सिन्धुवारिका ॥६४॥
शूकशिम्बात्मगुप्ता च कपिकच्छुर्मर्कटी ।
इक्ष्वाकुः कटुतुम्बी स्यात्तिक्तालाबूर्नृपात्मजा ॥ ६५ ॥
वैकङ्कतो मधुपर्णी स्निग्धा तु स्वादुकण्टकः ।
वञ्जुलो निचुलः शीतो जलकासश्च वेतसः ॥ ६६ ॥
वारिजो निजुलश्चैव हिज्जलः परिकीर्त्तितः ।
चिञ्चा[२] तिन्तिलिका प्रोक्ता फेनिलश्चाप्यरिष्टकः ॥६७॥

---

६३ । अपामार्गादि चतुष्कं । (आपाङ्) । पुनर्णवादि पञ्चकं । कठिल्लिका रक्तपुनर्णवा । अत्र कठिल्लक इति पाठोयुक्तः ॥

६४ । इन्द्राण्यादि चतुष्कं निर्गुण्ड्यां वर्त्तते (निशिन्दा) । इन्द्र-सुरिसोऽपि पाठः ।

६५ । शूकशिम्बादि त्रयम् । (आलाकुशी) । इक्ष्वाकादि चतुष्कं । (तितलाउ) ।

६६ । वैकङ्कतादि चतुष्कं । (वंइची) । वञ्जुलादि पञ्चकम् (वेत्) ॥

६७ । वारिजादि त्रयं (हिजल्) ॥ चिञ्चादि द्वयं (तेंतुल) । फेनिलादि द्वयम् । (रीटा)॥

---

१ । इन्द्राणी इन्द्ररसा । ग० । २ । चिम्बा । ख० ।

काश्मरी सर्व्वतोभद्रा श्रीपर्णी भद्रपर्णिका[1] ।
शेलुः श्लेष्मान्तकः शीत उद्दालो बहुवारकः ॥ ६८ ॥
विल्वकाश्मर्य्यश्योणाकपाटलागणिकारिकाः[2] ।
पञ्चमूलं स्मृतं श्रेष्ठं शास्त्रमार्गानुसारिभिः ॥ ६९ ॥
गोक्षुरो वृहती चैव शालपर्णी निदिग्धिका ।
पञ्चमूलं भवेत् सूक्ष्मं पृश्निपर्णी समायुतम् ॥ ७० ॥
पञ्चमूलोभयञ्चैव दशमूलमिति स्मृतम् ।
सन्निपातभवे रोगे हितमेतत् प्रकीर्त्तितम् ॥ ७१ ॥
मरिचस्य च[3] शुण्ठ्याश्च पिप्पलीनां तथैव च ।
एतत्त्रिकटुकं प्रोक्तं व्योषाख्यं त्र्यूषणं तथा ॥ ७२ ॥
त्वगेलापत्रसंयोगे त्रिसुगन्धि त्रिजातकम् ।
नागकेसरसंयुक्तं चातुर्जातकमुच्यते ॥ ७३ ॥
लवणैः कटुचूर्णैश्च घृष्यते यद्व्रणं बुधैः ।
प्रतिसारं[4] ततः प्रोक्तं वाजिशास्त्रविशारदैः ॥ ७४ ॥

---

६८ । काश्मर्य्यादि चतुष्कं (गामार) । एतत्पर्य्यायः,—"भद्रा गाम्भारी गोपभद्रिका कुमुदा कट्फला कृष्णवृन्तिका च"—इति ॥ शेल्वादि पञ्चकम् । (वालता) ॥

---

१ । भद्रपर्णिका । ख० ।
२ । गणकारिका । ग० ।
३ । मरिचं नागरञ्चैव । ग० ।
४ । प्रतिसारयं तत्प्रोक्तं । ख० ।

अनुवासनसंज्ञौ तु निरूहास्थापने स्मृतौ ।
वस्तिसंज्ञा समुद्दिष्टा एषामेव तपोधनैः ॥ ७५ ॥
घ्राणमार्गेण यच्चूर्णं प्रेर्य्यते मुखवायुना ।
प्रधमनं तद्विख्यातं धावनं क्षालनं स्मृतम् ॥ ७६ ॥
काष्ठाहारिकगोपालमालाकारवनेचरान् ।
दृष्ट्वा नामानि जानीयात् भेषजानां विचक्षणः ॥ ७७ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे निघण्टौ द्वादशोऽध्यायः ॥ १२ ॥

---

७५ । अनुवासनसंज्ञावित्यत्र अनुवासनसंज्ञे स्मृते इति पाठः साधीयान् ॥

७७ । दृष्ट्वास्थाने पृष्ट्वेति साधुः ॥

## अथ त्रयोदशोऽध्यायः।

ऋतुविभागविवरणम्।

स्वस्थवृत्तं प्रवक्ष्यामि तुरगाणां समासतः।
शालिहोत्रादिभिः प्रोक्तं यथा सम्यक् प्रकीर्त्तितम् ॥१॥
श्रावणश्च तथा भाद्रो द्वौ मासौ ऋतुवर्षकौ।
आश्विनः कार्त्तिकश्चैव शरत्कालः प्रकीर्त्तितः ॥ २ ॥
मार्गपौषौ तु हेमन्तः शिशिरो माघफाल्गुनौ।
वसन्तश्चैत्रवैशाखौ ग्रीष्मो ज्यैष्ठः शुचिस्तथा ॥ ३ ॥

शालानिर्म्माणविवरणम्।

प्रागुदक्प्रवणे देशे स्थाणुकण्टकवर्जिते।
चिताचैत्यविहीने च शालां कुर्व्वीत पण्डितः[१] ॥ ४ ॥

१। स्वस्थवृत्तमिति अरोगिणि यद् वृत्तम् ॥

२। सुश्रुतमते तु नैवं ऋतुविभागः,—तद्यथा,—"भाद्रपदाश्वयुजौ वर्षा। कार्त्तिकमार्गशीर्षौ शरत्। पौषमाघौ हेमन्तः। फाल्गुनचैत्रौ वसन्तः। वैशाखज्यैष्ठौ ग्रीष्मः। आषाढ़श्रावणौ प्रावृट्" इति ॥

४। प्रागुदक्प्रवणे पूर्व्वोत्तरप्रवणे। स्थाणुः शङ्कुः। स्थाणु र्वा ना शङ्कुरित्यमरः। चैत्यमायतनं। चैत्यमायतनमित्यमरः। शाला वाजिशाला ॥

१। कुर्व्वन्ति पण्डिताः। ग०।

शुष्का[1] शाला च कर्त्तव्या इष्टकाष्ठेन संस्थिता।
शिरसि स्थापयेद्देवं रैवन्तं पूजयेत् सदा ॥ ५ ॥
कार्य्या[2] चिहस्तविस्तीर्णा लाक्षायाः[3] पिण्डिका शुभा।
शालाप्रमाणदीर्घा च तस्यां[4] वासं प्रदापयेत् ॥ ६ ॥
द्वौ हस्तावुच्छ्रयेणास्या मानञ्चैव[5] प्रकीर्त्तितम्।
तर्ज्जकं काष्ठदण्डांश्च प्रान्तेऽस्याः स्थापयेद्बहिः ॥ ७ ॥
अग्निकार्य्यं ततः कृत्वा द्विजान् संभोज्य चादरात्।
कृत्वा पुण्याहवादिञ्च ततो वाहान् निवेशयेत्[6] ॥ ८ ॥
सम्मुखान् स्थापयेत्तांस्तु[7] पुष्पगन्धादिपूजितान्।
रज्जुद्वयनिबद्धांश्च पश्चात्पाशेन संयुतान् ॥ ९ ॥

---

५। इष्टकाष्ठेन संस्थिता इष्टकेन काष्ठेन वा कुट्टिमितेत्यर्थः: लाक्षायाः पिण्डिकेति जतुमयी पीठिकेत्यर्थः। वैरन्तपूजाविधिः पूर्व्वमुक्तः ॥

७। तर्ज्जकुः। अत्र तर्ज्जकुस्थाने तट्टक इति पाठोयुक्तः।

९। शालायामश्वबन्धनं कथं कार्य्यमित्यत्राग्निपुराणं,—"द्वौ रज्जुबन्धौ दुष्टानां पक्षयोरुभयोरपि। पश्चाद्बन्धश्च कर्त्तव्यो दूरकीलकपाश्रयः॥ वासयेयुस्त्वास्तृते स्थाने कृतधूपनभूमयः। यत्नोपन्यस्त-

---

१। सुशुष्का। खः।
२। कुर्य्यात्। ग०।
३। लाक्षायाः। ख०।
४। तदावासं। गः।
५। मानञ्चैवं। ख०।
६। प्रशान्तयेत्। खः।
७। सम्मुखं स्थापयेत्तावत्। गः।

लौहञ्च निम्बपत्राणि गुग्गुलुं सर्षपान् घृतम्।
चैलबद्धं वचां हिङ्गुं बध्नीयाद्वाजिशालाङ्गले ॥ १० ॥
समीपे वानरः कार्य्यः वाजिनां नित्यतो वहिः।
सवत्सो वृषभश्चैव मुक्तो यश्चापि कुक्कुरः ॥ ११ ॥
शालापार्श्वे कुटीं कृत्वा स्थापयेत् सर्व्वभेषजम्[१]।
घृततैलानि पक्वानि पुटकां नालिकां तथा ॥ १२ ॥
आलोकं कारयेत्प्राज्ञः प्रदीपैः सर्व्वरात्रिकैः।
जाग्रतः पुरुषास्तत्र तिष्ठेयुः शस्त्रपाणयः ॥ १३ ॥
वालुकापूरितं कार्य्यं संस्कृतं चत्वरं तथा।
लुठनाय च वाहानां भवेच्च क्रमणाय च ॥ १४ ॥

वर्षापोषणविवरणम्।

शालाप्रविष्टमात्रस्य नैव कार्य्यः क्रियाक्रमः।
दशाहं द्वादशाहं वा पथ्या तैलेन संयुता ॥ १५ ॥
ततो निम्बः प्रदातव्यो वर्षादौ पलपञ्चकः।
सप्ताहमुत्तमाश्वाय शुण्ठीदीप्यकसैन्धवैः ॥ १६ ॥

---

यवषाः सप्रदीपाः सुरचिताः ॥ वृकवाकाजकपयो धार्य्याश्चाश्वगृहे मृगाः"—इति ॥

१५। शालाप्रविष्टेत्यारभ्य पोषयेद्भिषक् इत्यन्ता सार्द्धद्वादशश्लोकाः ग-पुस्तके न सन्ति ॥

१६। वर्षादौ वर्षाप्रारम्भे उत्तमायाश्वाय दशाहं द्वादशाहं वा तैलेन कटुतैलेन संयुता पथ्या देयेति शेषः। पथ्यायास्तु पलपञ्चकं

स्वस्थं बुद्ध्वा ततो वाहं दद्याद् गोमूत्रसंयुतम्।
हरीतकीपलं....कटुतैलेन मूर्च्छितम्॥ १७॥
आदौ पञ्च प्रदातव्या हरीतक्यो विजानता।
पञ्च पञ्च च वृद्धायां यावत् पूर्णं शतं भवेत्॥ १८॥
उत्तमाश्वे शतं प्रोक्तमशीतिर्मध्यमे तथा।
अधमे विहिता षष्टिरश्वज्ञानपरायणैः॥ १९॥
मासे भाद्रपदे विद्वान् समानीय हरीतकीम्।
दशाहं केवलं तस्मै घासं दद्यात् समाहितः॥ २०॥

---

गृहीला प्रस्थार्द्धेन तैलेन सह देयम्। योगोऽयं रुधिरोद्गमसंशमनः। नकुलस्तु,—अनेन योगेन सह गोमूत्रं ददाति। दशाह द्वादशाहस्थले एकविंशतिदिवसानाह। तदुक्तम्,—"दद्याद्गोमूत्रसंयुक्तां सतैलाञ्च हरितकीम्। दिनं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः॥ ततः शुद्धिमवाप्नोति निःशेषाद्रुधिरोद्गमात्"—इति। ततःपरं एष निम्बयोगो देयः। शुण्ठीदीप्यकसैन्धवैः शृङ्गवेरजीरकनिम्बत्वचः समभागेन कल्कीकृत्य सप्ताहं देयाः॥

१७। स्वस्थवृत्ते हरितकीविधानमाह स्वस्थमिति। स्वस्थे अश्वे कटुतैलेन सार्षपतैलेन मूर्च्छितं पक्वमित्यर्थः। पञ्च हरितकी गोमूत्रेण पिष्ट्वा दद्यात्॥

२०। ततो द्वादशाहं केवलं घासं दद्यात्। "ततोनवतृणाहारं संप्राप्य सुमनोहरं। परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते"—इति नकुलः॥

कल्पोक्तेन विधानेन यथामात्रं यथाबलम्।
रसोनं गुग्गुलुञ्चापि प्रदद्याद्वाजिनां ततः॥ २१॥
प्रथमे प्रहरे चैव वर्षाकाले न चारयेत्।
द्वितीये च तृतीये च चारयेन्नतु पश्चिमे॥ २२॥
प्रभाते निस्तुषा देया यवा मध्यदिने तथा।
सन्ध्याकाले भिषक् प्राज्ञः पुनश्चैवावचारयेत्॥ २३॥

---

२१। कल्पोक्तेन विधानेनेति रसोनादिकल्पोक्तव्यवस्थया। सा चेयम्। प्रथमे दिने रसोनरसं मातुलुङ्गरसञ्च समभागं मिलित्वा पलद्वयं। ततं एकैकवृद्ध्या विंशतिपलपर्यन्तमुत्तमाश्वाय दद्यात्। मध्यमाय चतुर्दश अधमाय च पलाष्टकमिति। यथाबलमिति उत्तममध्यमाधमबलत्वं विविच्येत्यर्थः। एवं गुग्गुलोरपि पलपञ्चकं पलचतुष्टयं पलत्रयञ्च यथासङ्ख्यमुत्तममध्यमाधमेभ्य एकदिने पानाय भोजनाय वा देयम्॥ तथा वर्षासु पानार्थं नवोदकं तृष्णम्बुसेकञ्च विशेषेण निषिद्धः। तत्र दोषमाह,—"तृष्णाभोभिस्तु सिक्ताङ्गस्तेजसा त्यज्यते हयः। अप्युद्धोदकजान् रोगान् प्राप्नोति शतशः परान्॥ नवोदकप्रधानेन बलहीनश्च जायते" इति नकुलः॥

२२। वर्षायामश्ववाहननिषेधोऽपि नकुलेन कृतः। "न प्रायो वाहयेदश्वं प्रावृट्काले कथञ्चन। य इच्छेद्वाजिनस्तस्य वाहनं द्वैमासिकम्"—इति॥

दुर्द्दिने नोदकं देयं वाहेद्वा दापयेद्बुधः।
दिवसस्याष्टमे भागे भोजनस्य भवेद्विधिः॥ २४॥
तस्य पानं प्रयोगश्च पूर्व्वाह्ले चैव कीर्त्तितम्।
पिप्पलीशृङ्गवेरेण चित्रकेण समाह्वया॥ २५॥
लवणैः सुरया सार्द्धं प्रतिपानं घनागमे।

शरत्पोषणविवरणम्।

शरदाद्याश्विने मासेऽश्वान्नो कारयेच्च श्रमम्।
घासैर्यवैश्च तत्प्राज्ञः कैवलैः पोषयेद्भिषक्॥ २६॥

---

२४। दुर्द्दिने मेघावृतदिवसे कौपोदकमृते अन्यजलदाननिषेधः कर्त्तव्यः। "कूपोदकं सदा शस्तं पानाय जलदागमे"। इति नकुलवचनात्। एवञ्च कटुतैलाभ्यङ्गो निवातस्थानबन्धनं तथा एकदिनान्तरं लेहनार्थं पलद्वयपरिमितलवणदानञ्च कर्त्तव्यम्। इति नकुलोपदेशः। तदुक्तं,—"अभ्यङ्गः कटुतैलेन निवातस्थानबन्धनं। एकाद्यान्तरितं दद्याल्लवणञ्च विचक्षणः॥ पलद्वयप्रमाणेन सुखजापरिवृद्धये" इति॥

२५। अयं श्लोकः ख-पुस्तके नास्ति। समाह्वा गोजिह्वावृत्तः।

२६। शरदाद्याश्विने इति शरदआदिराश्विनो मासस्तस्मिन्। शरदादौ वाहननिषेधो नकुलेनापि कृतः,—"वाहनञ्च प्रयत्नेन सुस्वल्पमपि वर्जयेत्"—इति। अस्मिन् काले भोजनार्थं यवघासयोर्व्यवस्था। नकुलस्तु नीलमकुष्ठघासव्यवस्थां कृतवान् न यवस्य।

ताड़ागं शस्यते तोयं पाने चैवावगाहने।
सन्तप्तस्य तु कर्त्तव्यं क्षीरवस्तिक्रमो बुधैः॥ २७॥
निस्तुषा जलकुम्भस्था यवास्तस्मै हिताः स्मृताः।
औदकाश्च यवाः प्रोक्ता रक्तपित्तप्रशामकाः॥ २८॥
काश्मर्य्याश्च फलं मुस्तं वदरं कटुरोहिणी।
ऊशीरं शर्कराञ्चैव प्रियङ्गुमधुके तथा॥ २९॥
पटोलं त्रायमाणाञ्च एकादश भवेन्मधु।
एकादशाङ्गमित्युक्तं सीधुना संप्रदापयेत्॥ ३०॥
अत्यन्तश्वासतप्तानां प्रतिपानन्तु वाजिनाम्।
चन्दनोशीरकल्कैश्च सान्द्रं वा लेपनं हितम्॥ ३१॥
सुशीतञ्च प्रवातञ्च स्थानं तेषां प्रकीर्त्तितम्।
व्यजनैस्तालवृन्तैश्च विस्तीर्णेऽम्भसि मज्जनम्॥ ३२॥

---

तदुक्तं "यवसं सुमनोहरं,—नीलवर्णमकुष्ठस्य घृतं ग्रासेन संयुतम्"—इति। मकुष्ठो वनमुद्गः।

२७। जलपानव्यवस्था तुल्यैव। पानाय सारसं तोयमिति। अत्र क्षीरवस्तौ आढकमितं दुग्धं देयं परिभाषानियमात्।

२९। एतत्काश्मरीफलादिकं मध्वन्तमेकादशाङ्गं सीधुना संप्रदापयेत्। अस्य परिमाणं प्रत्येकं पलं सुरायास्च प्रस्थो ग्राह्यः॥

३१। चन्दनं रक्तचन्दनम्।

---

१। पलं। गः।

देयं शरदि चाश्वाय भोजनं क्षीरशालिभिः ।
मांसयूषैरनम्लैर्वा किञ्चित्-सैन्धवसंयुतैः ॥ ३३ ॥
शुक्लपक्षे द्वितीयायां शालां संवेश्य रक्षयेत् ।
आदित्यरश्मितो वाहान् कटैर्वस्त्रादिभिस्तथा ॥ ३४ ॥
अस्तं गते दिनकरे कटादीन्यपकर्षयेत् ।
प्रवातार्थं पुनर्दद्यात् यावत् सन्ध्या न जायते ॥ ३५ ॥
धूपो[1] निम्बदलैः कार्य्यो घृतगुग्गुलुसंयुतैः ।
शालाप्रवेशविहितान् रक्षकांश्चैव दापयेत्[2] ॥ ३६ ॥

---

३३ । अत्र क्षीरशालिपरिमाणं प्रत्येकं सप्त अष्टौ वा पलानि देयानि । "ततः शरदमासाद्य बहुखण्डसमन्वितम् । शस्तं क्षीरोदनं सप्तपलाष्टपरिसंख्यया" । तथा स एव रात्रौ केवलं दुग्धं मधुरञ्च ददाति । "दुग्धं वा केवलं रात्रौ क्वथितं संप्रशस्यते । तथान्यदपि यत्किञ्चिन्मधुरं संप्रजायते" इति नः । मांसयूषस्य पलद्वयं ।

३४ । "आश्विने शुक्लपक्षे या तृतीया स्वातियोगिनी । ऐशान्याञ्च पुनश्चैव गृह्णीयात् स्थानमुत्तमम् । नीराजनं ततः कुर्य्यात सम्प्राप्ते दिवसेऽष्टमे । नीराजनस्य कालास्तु पूर्व्वमुक्ताश्च ते मया" ॥ इति नकुलः । कटैः तृणनड़ादिनिर्म्मितासनैः (चेटा मादुर दरमा) इति प्रसिद्धैः ।

३६ । निम्बदलघृतगुग्गुलूनां प्रत्येकं कर्षत्रयं ग्राह्यम् । परिभाषायां तावत् परिमाणस्य विधानात् ।

---

१ । धूमः । खः । २ । रक्षांश्चैव प्रदापयेत् । खः ।

घर्षणं भ्रामणञ्चैव तथाचैवापवर्त्तनम्[१]।
निशाशेषे प्रकर्त्तव्यं यावद्दूरे दिवाकरः[२] ॥ ३७ ॥
एवं प्रतिदिनं कुर्य्यात् सप्तरात्रमतन्द्रितः।
कारयेद्ब्राह्मणैश्चैव[३] शान्तिस्वस्त्ययनानि च ॥ ३८ ॥
सप्तरात्रे व्यतिक्रान्ते क्षौरितान्[४] स्नापयेत्तथा।
अर्च्चितान् कुसुमैर्गन्धै[५]स्ततो नीराजयेद्बुधः ॥ ३९ ॥
ततो वादित्रनिर्घोषैः कर्त्तव्या ग्रामतो वहिः।
दिशं पूर्व्वां तथोदीचीमश्वा विप्रैरधिष्ठिताः ॥ ४० ॥
अग्रे वदेद्द्विजो मन्त्रं वेदोद्दिष्टं यथाक्रमम्।
अर्घशान्तिं[६] तुरङ्गानां ततो हृष्टः प्रदापयेत् ॥ ४१ ॥
प्रदक्षिणं ततो वह्नेः[७] कारयित्वा द्विजोत्तमैः।
पुरमश्वाः[८] प्रवेश्यास्ते तोरणान्तरनिर्गताः ॥ ४२ ॥

---

३८। अश्वानामर्घशान्तौ कालमाह। "अश्वयुक्शुक्लपक्षस्य पञ्चदश्याञ्च शान्तिकं। ० ० ० तिलाक्षताज्यसिद्धार्थान् देवतानां शतं शतं। उपोषितेन कर्त्तव्यं कर्म्म चाश्वरुजापहम्" इति नः।

---

१। उदवर्त्तनम्। खः।
२। ऊदेत्। खः।
३। वैद्यः। खः।
४। चौरिस्नापितां तथा। खः।
५। आवर्त्तितान् कुसुमैर्गन्धैः। गः।
६। सर्व्वशान्तिं। गः।
७। वह्नौ। गः।
८। पुनरश्वाः। खः।

अग्रमाल्याग्रगन्धैश्च[1] भोजनाद्यै[2]स्तथैव च।
गृहागतेषु वाहेषु अर्घं दद्यान्नराधिपः॥ ४३॥
अर्चितेषु[3] ततो वैद्यः कर्णे जापमिदं जपेत्।
कीर्त्तितं मुनिभिः पूर्व्वं वाजिशास्त्रार्थवेदिभिः॥४४॥
पूर्व्वं देवमयो त्वं हि स्मर जातिं हयोत्तम।
सर्व्वे जना त्वया रक्ष्या रणे भर्त्तुश्च वाहक[4]॥ ४५॥
कर्णजापं भिषक्कृत्वा यथास्थानं ततो हयान्।
स्थापयेत् कृतमङ्गल्यान् हृष्टान् कल्मषवर्जितान्॥४६॥
नार्चये[5]ज्जलजैः पुष्पैर्वाहनार्घविधिं प्रति।
सौगन्धिकविशेषेण तेषां दद्याच्च[6] सर्व्वदा॥ ४७॥
दत्वा तिक्तं घृतं पूर्व्वं कार्त्तिके वेधयेच्छिराम्।
औरसीं पोचिकीं मन्यां कूर्चजां कोष्टजां ततः॥ ४८॥
आसां मध्ये यथायोगमेकां द्वे वापि वेधयेत्।
प्रतिपानं ततो दद्यादुत्तमं वक्ष्यमाणकम्॥ ४९॥
मञ्जिष्ठा मधुकं पुष्पं प्रियङ्गुस्त्रायमाणकम्।
एलाच पिप्पलीचैव तथा कटुकरोहिणी॥ ५०॥

---

४८। आश्विनोपचारमुक्त्वा कार्त्तिकोपचारमाह दत्वेति।

---

१। अग्रमाला।.खः। २। भोजनानि। खः।
३। अर्घितेषु। खः।
४। सर्व्वेभ्यस्तु त्वयारक्ष्यो रणे भर्त्तुः सखा भव। खः।
५। अर्चयेत्। ग०। ६। दद्यात्। खः।

तुल्यांशान् दापयेदेतान्[1] सीधुना मधुसंयुतान्।
कल्कं कृत्वा तुरङ्गाय स्नापिताय विचक्षणः॥ ५१॥
पञ्चतिक्तकषायेण[2] द्वितीयञ्च प्रदापयेत्।
पिप्पलीत्रायमाणाभ्यां प्रतिपानं सगोक्षुरम्॥ ५२॥

हेमन्ते अश्वपोषणविधानम्।

सुखेन[3] वस्तिना चैव स्नेहं दद्याद्धिमागमे।
विद्धा तालुशिरां प्राज्ञः प्रतिपानञ्च वाजिनाम्[4]॥ ५३॥
यथर्त्तुं प्रतिपानेन[5] ततो माषान् प्रदापयेत्।
पुष्पितान् रोगनिर्म्मुक्तान् कृमिभिश्चाप्यभक्षितान्॥ ५४
पुष्पिता रक्तजनना फलिता मांसवर्द्धनाः।
माषा भवन्ति दोषाय विना पुष्पैः फलैस्तथा॥ ५५॥

---

५०-५१। एषां द्रव्याणां प्रत्येकं पलिकान् भागान् गृहीत्वा कल्कीकृत्य च प्रस्थपरिमितसीधुना देयम्। त्रायमाणा (बलालता)।

५२। पञ्चतिक्तमिति वासापटोलभूनिम्बगुडूचीकण्टकारिकाः। त्रायमाणा बलालता।

५५। हिमागमे सपुष्पफलमाषयवसं पथ्य आहारः। नकुलेन आहारस्य एवमेव व्यवस्था कृता।

---

१। तुल्यांशं दापयेदेनां मांसानां। गः।
२। पञ्चतिक्तकषायायां। गः।
३। मुखेन। गः।　　४। वाजिनम्। खः।
५। यथार्थं प्रतिमानेन। खः।

दिनत्रयं न दातव्यं प्रारम्भे तूदकं[1] बुधैः ।
एकान्तरं ततो देयं यावत्पूर्णं दिनाष्टकम् ॥५६ ॥
ततः प्रतिदिनं देयमेकवारं यथेच्छया ।
सकले चैव हेमन्ते विधिरेष जलं प्रति ॥ ५७ ॥
पुष्पिते वारुणी शस्ता लवणेन समन्विता ।
सतैललवणा चापि फलिते संप्रकीर्त्तिता ॥ ५८ ॥
सुराया न प्रयोगस्तु सायाह्ने परिकीर्त्तितः ।
यामिनीप्रहरेऽतीते माषान् दद्यात् सकाञ्जिकान्[2]॥५९॥
तृतीये समकेऽतीते ततोऽश्वान् दापयेद्बुधः ।
एकान्तरं यथा तेषां श्रमः स्वेदश्च जायते ॥ ६० ॥
यावन्नो पाकमायाति तावन्माषा हिताः स्मृताः ।
कठिना नैव दातव्या सर्व्वदैव विजानता ॥ ६१ ॥

---

हिमागमे आदौ सुखवर्त्तिना स्नेहमवचारयेत् । ततस्तालुशिरावेधः । ततश्च धान्यकादिभिः प्रतिपानं दत्वा पुष्पितानि माषतृणानि आहारार्थं दद्यात् । जलदाने तु प्रथमं दिनत्रयं जलदानस्य एकान्ततो निषेधः । ततो दिनाष्टकं एकदिनानन्तरं दत्वा ततः प्रतिदिनमेकवारस्य विधिः ।

---

१ । आरम्भादुदकम् । खः ।
२ । माषं दद्यात् सकाञ्जिकम् । गः ।

माषभक्षस्य वाहस्य यदि स्यात् शूलसम्भवः।
शूलाध्यायोपदिष्टान्तु तदा कुर्य्याद्भिषक् क्रियाम्॥६२॥
अप्राप्तौ पर्णमाषाणां दद्यान्माषेण भोजनम्।
सतैललवणैर्माषैः शालिभिर्यवषष्टिकैः॥ ६३ ॥
धान्यकं चित्रकं व्योषं लोध्रं लवणमेव च।
एतानि सुरया सार्द्धं हेमन्ते प्रतिपाययेत्॥ ६४ ॥

शिशिरपोषणविधिः।

शिशिरप्रतिपानं तु त्र्यहं दद्याद्विचक्षणः।
ततश्चाग्निबलं दृष्ट्वा तुरङ्गं भोजयेद्बुधः॥ ६५ ॥
उत्स्विन्नैः फलमाषैस्तु युक्तैः काञ्जिकमात्रया।
तिलतैलसमेतैश्च तथा लवणसंयुतैः॥ ६६ ॥

---

६३। पर्णमाषाणामिति पत्रसहितमाषकलायानामित्यर्थः। माषेण सह सतैललवणैः शालिभिर्वा यवैः षष्टिकै र्वा भोजनं दद्यात्। अत्र माषेणेति प्रामादिकः पाठः। मांसेनेति युक्तं पाठं प्रतीमः। अत्र माषाणां ३ प्रस्थाः। तिलतैलं कुड़वत्रयं। लवणस्य च कुड़वः।

६४। अत्र प्रतिपानं सुराप्रस्थेन धान्यकादीनां मिलिला पादोनं पलं समालोड्य पाययेत्। प्रतिपाने तीक्ष्णद्रव्यपादहीनदानविधानात्॥ व्योषं शुण्ठी पिप्पली मरिचञ्च। उक्तञ्च,—"विड़ङ्गपिप्पली-धान्यशताह्वालोध्रसैन्धवैः। सचित्रकैस्तुरङ्गानां प्रतिपानं हिमागमे"॥

६६। उत्स्विन्नैर्भर्ज्जितैः। काञ्जिकमात्रया स्वल्पमात्रेण का-

शिशिरे तोयपानञ्च दद्यादेकं विचक्षणः ।
एवं श्लेष्मा तुरङ्गानां प्रकोपं नैव गच्छति ॥ ६७ ॥
भोजनं वाहनं चैव कुर्य्यादेकान्तरं भिषक्[१] ।
अनुपाने सुरा तेषां भोजितानां प्रकीर्त्तिता ॥ ६८ ॥
सव्योषेण विडङ्गेन हिङ्गुना वचया सह ।
यवानी[२]शतपुष्पाभ्यां पञ्चभिर्लवणैस्तथा ॥ ६९ ॥
वारुण्याः प्रतिपानन्तु शिशिरे संप्रदापयेत् ।
कायाग्निदीपनं तच्च श्लेष्मदोषनिवारणम् ॥ ७० ॥
शिशिरे गर्भिता देया यवाः स्वस्थाय वाजिने ।
सप्ताहं द्विगुणश्चैव वाहयेन्नैव बुद्धिमान् ॥ ७१ ॥

---

श्चिकेन । तिलतैलसमेतैरित्यत्र तिलतैलस्य कुड़वत्रयं । लवणसंयुक्तै-रिति लवणस्य कुड़वः । माषाणां प्रस्थत्रयं ॥

६७ । शिशिरे तोयपानमेकवारं दद्यात् । वारिदानस्य मात्रा तु चतुर्दश कुड़वाः । अनुपाने सुरायाः प्रस्थः ॥

६८—७० । प्रतिपानार्थं व्योषादीनां मिलिता चूर्णं पादोनं पलं सुराप्रस्थेन समालोड्य देयम् ॥ शतपुष्पा ( शुल्फा ) । "शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः" इत्यमरः । पञ्चलवणानीति सैन्धवसचलसामुद्रविट्सौवर्च्चलपुलाख्यानि ।

७१ । गर्भिताः ( भिजन ) ।

---

१ । वाहनैः कुर्य्यादेकान्तरे भिषग्वरः । खः ॥
२ । पर्वणी । गः

आरम्भात् पञ्चरात्रन्तु पयःपानं न दापयेत् ।
ततः सक्तु प्रदातव्यं यावद्वौ सप्तकौ गतौ ॥ ७२ ॥
तृतीये सप्तमे[1] चैव वाहयेच्च तुरङ्गमम् ।
चतुर्थे च यथाशक्यं[2] वाहयेच्च विचक्षणः ॥ ७३ ॥
पुष्पिताः फलिताश्चैव प्रशस्ताः सर्व्वदैव तु ।
ये च पुष्टिप्रदा[3] हृद्या बलारोग्यविवर्द्धनाः ॥ ७४ ॥

---

७४ । पुष्पिताः फलिताश्च माषा इत्यर्थः॥ शिशिरपोषणे नकुलः—"ततः शिशिरमासाद्य दद्यात्तैलं हि वाजिनां। पलान्यष्टौ प्रमाणेन भवेद् यावद्विसप्तकं॥ यवोत्थं यवसं पश्चात् दद्याद्विंश-त्यहानि च। यवाभावे च चणकान् दद्यादार्द्रान्वरान् सदा॥ तदभावे मसूरांश्च शुष्कार्द्रान् तैलसंयुतान्। यवसञ्चापि यत् प्रोक्तं शिशिरे तदहं वदा॥ औषधानान्तु सर्वेषां काथ्यतां तस्य कर्म्मणां ॥ तैलानाञ्च घृतानाञ्च यवसं यवसं परम् ॥ पर्व्वतानां यथामेरुरायुधानाञ्च वज्रकम् । तथा सर्व्वोपचाराणां सप्तेः श्रेष्ठतमा यवाः। यथोदितः सहस्रांशुर्निःशेषं तिमिरं हरेत्। तथा शरीरजान् दोषान् यवाः सर्व्वान् हरन्ति च॥ उपचारक्रियाः सर्व्वाः पञ्चर्त्तुजनिता हये। कृताः सर्व्वेण भोज्येन सप्तेस्तु सुकृताय वै। यद्यश्वाय यवा दत्ताः शिशिरे समुपस्थिते। क्रिया अपि कृताः सर्व्वाः पञ्चर्त्तुजनिता हये॥ पञ्चर्त्तुजनिताश्वाय क्रिया व्यर्थास्तुरङ्गमे॥ एवं ज्ञात्वा विदग्धेन यवा

---

१। सप्तके। गः॥　　　३। येवा पुष्टिप्रसूद्याश्च। गः॥
२। यथाशक्त्या। खः॥

वसन्तपोषणविधिः।

वसन्ते वाहयेदश्वान् भोजनं नैव दापयेत्।
खादने भक्षितास्तेषां संस्कृताः केवला यवाः॥ ७५॥
त्र्यहाद् द्व्यहाच्च दातव्यं लवणञ्च सुमात्रया[१]।
घासः शुष्को जलं वारमेकं द्वौ वा हितं स्मृतम्॥ ७६॥
व्योषलोध्रविडङ्गैश्च सक्षौद्रैः सैन्धवान्वितैः।
प्रतिपानं हितं दृष्टं वसन्ते मदिरायुतम्॥ ७७॥
हेमन्ते शिशिरे विद्वान् वसन्ते च तुरङ्गमान्।
आतपे दिवसं सर्व्वं स्थापयेद्वाजिशास्त्रवित्॥ ७८॥

देयाः प्रयत्नतः॥ प्राप्तचीरा विशेषेण शिशिरे समुपस्थिते। शुष्का अपि यवा देयाः सर्व्वकालञ्च वाजिनाम्॥ प्राणदास्ते यतो ज्ञेयाः सर्व्व-व्याधिविनाशनाः। योऽन्योऽशनार्थं वाहानां प्रधानो यव दृश्यते॥ तदभावे यवान् दद्यान्मकुष्ठान् तैलसंयुतान्। भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सता॥ मकुष्टभोजनाद्वाजी पुष्टिं गच्छति लौकिकीं॥ अप्राप्तौ तु मुकुष्ठानां मुद्गा देया विवेकिभिः। सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्वविवर्द्धिनीम्॥ अन्नाभावे प्रदातव्यं घृतं वा यदि पयः पथ्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा॥ ग्रासाभावे तु शुष्कं वा यवसं यस्य वाजिनः" इत्यादि। "भक्षिताः" स्थाने भर्जिता इति युक्तम्॥

[१] वसुमात्रया। ख॥

स्थानं छायान्वितं शस्तं ग्रीष्मे व्यायामवर्जिते[1]
निःस्नानपानं घासश्च सान्द्रो यश्चापि वारिजः ॥ ७९ ॥
अतीव घर्म्मतप्तानां शारदं कारयेद्विधिम्।
क्षीरयुक्तं शतावर्य्या मूलं पाने च शस्यते ॥ ८० ॥
दुर्व्वलानां प्रदातव्यं सार्द्धं माषरसेन तु[2] ।
यवभक्तं युतं दध्ना वाहानां स्वल्पसैन्धवम् ॥ ८१ ॥
कुक्कुटीमूलकल्कश्च क्षीरेणालोड़ितस्तथा।
ग्रीष्मकाले हितो दृष्टो वाजिनां हितकांक्षिभिः ॥ ८२ ॥

---

७९। नकुलोऽत्र दूर्व्वां ददाति। "ग्रीष्मकाले तु संप्राप्ते दूर्व्वा-भोज्यं प्रशस्यते। वाजिनामिह सर्व्वेषां घर्म्मतापोपशान्तये" इति ॥ ग्रीष्मे निःस्नानपानं स्याच्चिरं तस्यावगाहनम्"। इत्यग्निपुराणम् ॥ घासस्य दश तुलेति अहोरात्रेण यवसस्य तुलादशेति ज्ञेयम्।

८०। शतावर्य्या मूलकल्कपलं। चीरस्य प्रस्थः ॥

८१। अत्र चतुराढ़कमितस्य यवस्य भक्तं देयम्। "निस्तुषाणां प्रदातव्या यवानां चतुराढ़की" इत्यग्निपुराणम् ॥ अत्र स्नानं सर्पिः-प्रभृति। माषरसेनेत्यत्र मांसरसेनेति साधुः ॥

८२। कुक्कुटीमूलकल्कः शाल्मलीमूलकल्कः ॥

---

१। व्यायामवर्जितं। गः॥   २। सार्द्धं मांसरसेन तु।

प्रियङ्गुपिप्पलीलोध्रमधुकं विश्वभेषजम् ।
निदाघे प्रतिपानं स्यात् सीधुना मधुना युतम् ॥ ८३ ॥

सर्व्वर्त्तुपोषणविधिः

देशे देशे च घासानां नामान्यत्वं प्रजायते ।
तेन घासा मया नैव नामभिः परिकीर्त्तिताः ॥ ८४ ॥
औदकं दापयेद्घासं ग्रीष्मे शरदि वाजिनाम् ।
कालेऽन्यस्मिन् हितो दृष्टः शुष्को रोगविवर्जितः ॥ ८५ ॥
सर्व्वेषु चैव रोगेषु तथा कालेषु षट्स्वपि ।
दूर्व्वा नित्यं हिता दृष्टा वाजिपुष्टिविवर्द्धिनी[1] ॥ ८६ ॥
मात्रावत्संप्रयुञ्जीत स्वस्थानां सर्व्वकालिकम्[2] ।
तैलं कालानुरूपोक्तं[3] पञ्चषड्दिवसान्तरे ॥ ८७ ॥

८३ । प्रियङ्ग्वादीनां चूर्णं मिलित्वा पलं । सीधुनः प्रस्थः । मधुनश्च कुड़वः । उक्तञ्चाग्नेये,—"प्रियङ्गुपिप्पलीलोध्रयष्ट्याह्वैः समहौषधैः । निदाघे सगुड़ा देया मदिरा प्रतिपानके"—इति । अत्र नकुलः,—"घृतपानं विशेषेण सुच्छायासु निबन्धनम् । रक्तस्रावश्च गात्रेषु ग्रासं वा घृतसंयुतम् ॥ घृतं काशस्य मध्यं सर्व्वदोषप्रशान्तये"—इति ॥

८७ । तैलमिति तैलस्य प्रस्थार्द्धं पञ्चषड्दिवसानन्तरं देयम् । परन्तु स्नेहपीतस्य "गुर्व्वभिष्यन्दिभक्तानि व्यायामं स्नानमातपम् ।

---

१ । वाजिनां पुष्टिवर्द्धिनी । गः ॥
२ । स्वस्थाने सर्व्वकालिकान् । गः ॥
३ । तिलैः कालानुरूपोक्तैः । गः ॥

व्योषजीरकसिन्धूत्थविड़सौवर्च्चलानलैः।
हरिद्राद्वयपूतीकवीज[1]शिग्रुकुठेरकैः॥ ८८॥
गोमूत्रपिष्टैः पिण्डन्तु[2] प्रातर्वाजिषु दापयेत्।
मन्दाग्निदीपनं श्रेष्ठं वलतेजोविवर्द्धनम्॥ ८९॥
अथवा सुरया सार्द्ध प्रतिपानेषु[3] योजितः।
कायाग्निदीपनश्चाशु[4] पिण्डोऽयं मुनिभाषितः॥ ९०॥
सर्व्वदैव तुरङ्गाणां हितमेतत् प्रकीर्त्तितम्।
कण्डूयनं सुखं चाग्र्यं[5] तेषां प्रोक्तं मनीषिभिः॥ ९१॥
संग्रामादिषु कालेषु तं स्मरन्ति हयोत्तमाः[6]।
तस्मात् कार्य्यं[7] प्रयत्नेन तेषां कण्डूयनं[8] बुधैः॥ ९२॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे सर्व्वर्त्तूपचारे त्रयोदशोऽध्यायः॥ १३॥

---

वायुत्रजंश्च वाहस्य स्नेहपीतस्य वर्जितम्" इति वचनाद् एतत् सर्वं निषिद्धम्॥

८८—८९। व्योषादीनां मिलित्वा पादहीनं पलं ग्राह्यं। सिन्धूत्थं सैन्धवं। विडं कृष्णलवणं। अनलश्चित्रकमूलं। हरिद्राद्वयं हरिद्रा दारुहरिद्रा च। पूतीकः (नाटाकरञ्ज)। शिग्रुः शोभाञ्जनत्वक्। कुठेरकः श्वेततुलसी (वावुइतुलसी)।

---

१। भार्ङ्गी। खः॥
२। पिण्डीन्तु। खः॥
३। प्रतिपानेन। गः॥
४। कायाग्निदीपनोयश्च। गः॥
५। चाङ्गे। कः॥
६। हया यतः। खः॥
७। कार्ये। गः॥
८। कण्डूयते। गः॥

# अथ चतुर्द्दशोऽध्यायः।

क्षारदाहविधानम्।

एकस्य वा द्वयोर्वापि समस्तानामथापि वा।
रम्भापामार्गभानूनां स्नुहीलाङ्गलिपुष्करान्॥ १ ॥
दग्ध्वा भस्म समादाय गोमूत्रेण तु गालयेत्[१]।
गालितानन्तरं तच्च ताम्रपात्रे निधापयेत्॥ २॥

२। क्षणनात् क्षरणाद्वा क्षारः। स च शस्त्रादिभ्यः प्रधानतमः त्रिदोषनाशित्वात्। स च गुणत उष्णस्तीक्ष्णः शोधनः पाचनः विलयनः रोपणः शोषणो लेखनश्च भवति। स च प्रतिसारणीयत्वात् पानीयत्वाच्च द्विविधः। तयोः प्रतिसारणीय एवास्मिन् ग्रन्थे विनियोज्य इति बोध्यं शोफार्व्वुदादिदाहार्थम्। भानुः रक्तार्कः। लाङ्गली (ईषलाङ्गली)। पुष्करः कुष्ठं (कुड़)। एतेषां भस्मानि द्रोणपरिमितानि षड्भिर्गोमूत्रद्रोणैर्गालयित्वा दोलायन्त्रेण एकविंशतिवारं परिस्रावयेत्। ततो गालितं क्षारजलं मृदग्निना पाचयित्वा यदा दर्व्वीलेपत्वं गमिष्यति तदा हिङ्ग्वादीनां चूर्णं मिलित्वाष्टपलं प्रक्षिप्य चूर्णतामागतं सिद्धं भवति॥

१। गोमूत्रेणानुगालयेत्। गः॥

मृदग्निना पचेन्मूत्रं ततो दर्व्वीविघट्टितम्।
भेषजानि क्षिपेत्तस्मिन् दर्व्वीलेपत्वमागते॥ ३॥
हिङ्गु टङ्कं यवक्षारं पञ्चैव लवणानि च।
क्षिप्त्वैतानि पचेत्तावद् यावत्तच्चूर्णतां[1] गतम्॥ ४॥
तच्चूर्णन्तु भवेत् सिद्धं[2] स्थापयेत् शीतलं कृतम्।
वातजे[3] कफजे कुष्ठे चार्बुदे मांसकीलके॥ ५॥
लोमान्युत्पाद्य दातव्यः क्षार एष[4] शलाकया। ६।

लौहदाहविधानम्।

वायौ प्रकुपिते[5]ऽत्यर्थमग्निं दद्याद्विचक्षणः।
यथाशास्त्रं भिषक् प्राज्ञो लौहकैर्मेदसापि वा॥ ७॥
शलाकाभिश्च फालैश्च तप्तैर्लौहेन कीर्त्तितः।
वर्त्तिभिर्बिन्दुदाहेन[6] मेदसा समुदाहृतः॥ ८॥
अग्रकायं[7] दहेल्लौहैः पश्चात्-कायन्तु[8] मेदसा।
एवं यः कुरुते सम्यक् तस्य सिद्धिर्न दूरतः॥ ९॥

---

८। शलाकया वा फालेन वाग्नितप्तेन दाहो लौहदाहः कीर्त्तितः। तथा वर्त्तिभिर्दाहेन मेदसा दाहः समुदाहृतः॥

---

१। यावत्तु। गः।
२। तिक्ततुल्यन्तु। खः।
३। वाते कफे च कुष्ठे च। गः।
४। एवं। खः।
५। बहुप्रकुपितः। खः।
६। वर्त्तिभिश्चैव दाहेन। खः।
७। अग्रकाये। गः।
८। पश्चात्काये। गः।

दहेत् प्रथमया लोम[१] चर्म्म चैव द्वितीयया ।
मांसं तृतीयया सम्यग् दहेद्विद्वा शलाकया ॥ १० ॥
समांसलेषु देशेषु काले[२] वह्निं प्रदापयेत् ।
रेखाभिर्विन्दुभिश्चैव तथा काकपदादिभिः ॥ ११ ॥
दहेद्देशं सम्यगेवं वाजिनोऽङ्गं शलाकया ।
दग्ध्वा मधुककल्केन घृतमिश्रेण लेपयेत् ॥ १२ ॥

मेदोदाहविधानम् ।

पुरलाक्षामधूच्छिष्टसर्जश्रीवेष्टकैः समैः ।
मनःशिलागुड़ोपेतैर्वर्त्तिमष्टाङ्गुलायताम् ॥ १३ ॥
कृत्वाष्टाङ्गुलविस्तारां[३] शूकरादिवसान्विताम् ।
घृतप्लुतेन संवेष्ट्य कर्पटेन विनिःक्षिपेत् ॥ १४ ॥
अधोभागे दृढं विद्धा[४] सुषिरे वेणुदण्डकैः ।
प्रक्षिप्य छिद्रं कुर्व्वीत अधोभागे विचक्षणः[५] ॥ १५ ॥
कोलास्थिमात्रदण्डस्य द्विहस्तस्य विचक्षणः ।
यस्मिन् स्थाने स्थिता वर्त्तिस्तत्र दण्डं प्रवर्त्तयेत् ॥ १६ ॥
अधोभागे घृताक्तेनालक्तकेनाङ्गुलाष्टकम् ।
यस्मिन् कृत्वा ततो वह्निं भृशं प्रज्वालयेद्बुधः ॥ १७ ॥

---

१० । पुस्तकान्तरे लोमस्थाने लोहमिति पठ्यते ॥

---

१ । लोहं । गः ।
२ । काले । गः ।
३ । ह्यङ्गुलविस्तारम् । खः ।
४ । अधोभागं दृढं वद्धं । गः ।
५ । विचेष्टयेत् । खः ।

तुरङ्गाङ्गे ततो दण्डं विद्वानुपरि धारयेत् ।
द्रुताया वह्नितापेन वर्त्त्याश्छिद्रान्तरे गतैः ॥ १८ ॥
विन्दुभिर्दाहयेदश्वं सुवद्धं पातितं क्षितौ ।
पश्चात्-कायसमुत्थेन वायुनैवं विमुच्यते ॥ १९ ॥

दाहलक्षणम् ।

विल्व[1]मध्यसवर्णान्तु पक्वतालनिभं तथा ।
सम्यग्दग्धं विजानीयाद् विपरीतं विवर्जयेत् ॥ २० ॥

शस्त्रविधानम् ।

अर्द्धाङ्गुलन्तु विस्तीर्णं कुर्य्याच्छस्त्रं षडङ्गुलम्[2] ।
नाम्ना व्रीहिमुखं सम्यक् तथा चोत्पलपत्रकम् ॥ २१ ॥
त्र्यङ्गुलं वृद्धिपत्रञ्च क्षुराकारं प्रकीर्त्तितम् ।
पक्वशोथादिषु प्राज्ञः पाटनं तेन कारयेत् ॥ २२ ॥
शस्त्रेणोत्पलपत्रेण व्रीहिपत्रेण वा भिषक् ।
शिरावेधविधिं सम्यग् दृष्टकर्म्मा प्रयोजयेत् ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे क्षाराग्नि-शस्त्रविधाने चतुर्दशोऽध्यायः ।

---

२१ । व्रीहिमुखं व्रीहिमुखसदृशत्वात् । उत्पलपत्रमपि उत्पल-दलाकारत्वात् । तथा वृद्धिपत्रं नाम क्षुरसदृशं । एतानि सुश्रुतोक्त-विंशतिविधशस्त्राणामन्यतमानि । तेषु केन किं साधनीयमित्याह । व्रीहिमुखं व्यधने वृद्धिपत्रमुत्पलपत्रञ्च छेदने भेदने च व्यवह्रियते ॥

---

१ । चित्त । खः ।　　२ । षडायतम् । खः ।

## अथ पञ्चदशोऽध्यायः ।

शिरावेध-कालनिरूपणम् ।

अतःपरं प्रवक्ष्यामि शिरावेधविनिश्चयम् ।
प्रधानं वाजिनामेतद्भेषजं गदितं[1] बुधैः ॥ १ ॥
औषधैर्नैव[2] सिध्यन्ति रोगा रक्तसमुद्भवाः ।
यतो वेधेन सिध्यन्ति स्निग्धस्विन्नस्य वाजिनः ॥ २ ॥
देहस्य रुधिरं मूलं तदालम्बं हि जीवितम्[3] ।
तस्मान्नवाहयेच्छुद्धं दुष्टञ्चैव न धारयेत् ॥ ३ ॥
शरत्काले निदाघे च विकाले[4] वेधयेच्छिराम् ।
अदुर्दिने च वर्षासु शीते मध्यन्दिने तथा ॥ ४ ॥

२। स्निग्धस्विन्नस्येति पूर्वदिने पायितघृतस्य, स्विन्नस्य दत्त-धूपस्येत्यर्थः ॥

३। देहस्य रुधिरमूलत्वाज्ज्वरदादिषु च पित्तादिप्रकोपेण रुधिरदोषजननाद्दुष्टादुष्टरक्तज्ञानपुरःसरं शिरावेधविधानमाह। अत्र नकुलः,—"रक्तदोषात्तदा वाजी प्राप्नोत्येव महामयान्। तस्मात् सर्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः"—इति ॥

१। तूदितं। गः।
२। औषधैश्च। गः।
३। जीविनाम्। गः।
४। विकापे।

शिशिरे च वसन्ते च स्वेदं कृत्वा विचक्षणः।
शीतकाले[1] च मध्याह्ने शिरावेधं प्रयोजयेत्॥ ५॥

शोणितविवरणम्।

शब्दवत्फेनिलं यच्च तद्रक्तं वातजं[2] स्मृतम्।
श्यावञ्च नीलकं वापि ज्ञेयं पित्तेन दूषितम्॥ ६॥
सान्द्रञ्च पिच्छिलं पाण्डु श्लैष्मिकं परिकीर्त्तितम्।
द्विरूपं द्वन्द्वसम्भूतं सङ्कीर्णं सन्निपातजम्॥ ७॥
शशशोणितसङ्काशं यच्च सिन्दूरसन्निभम्।
तद्विशुद्धं भवेद्रक्तं शिरावेधविनिर्गतम्॥ ८॥

---

४—५। शिरावेधकालमाह शरदित्यादि। शरद्ग्रीष्मयोः विकाले, वर्षासु अमेघाच्छन्नदिनेषु शीतादौ च मध्याह्ने शिरावेधः कार्य्यः। उक्तञ्च नकुलेन,—"आषाढ़समये प्राप्ते शिरामोक्षञ्च कारयेत्। तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम्" इत्यादि॥

६—८। पित्तादिदूषितरक्तानां लक्षणमाह शब्दवदित्यादि। एतदप्रतीकारे दोषं रोगसम्भवञ्चाह नकुलः,—"यदि रक्ताधिको वाजी शस्यं नाश्नाति कर्हिचित्। रक्तात्संजायते पित्तं ततो नाशमवाप्नुयात्॥ रक्ताधिकस्यासपुटः सेहाद्यैः शस्यमत्ति चेत्। संप्राप्य श्लेष्ममचिराद्धयो नाशमवाप्नुयात्॥ तत्रेदं लक्षणं प्रोक्तं रक्तकोपसमुद्भवं। धातूनामपि सर्व्वेषां ज्ञेयं चिह्नं विचक्षणैः॥ पित्तरक्तप्रकोपेण यदा

---

१। यामे काले। खः। २। वातिकं। खः।

शरावशकलं दत्वा शस्त्रवेधमुखे बुधः[1] ।
कर्पटेन दृढं बद्धा रुधिरं संनिवारयेत् ॥ ९ ॥
अतिवेगात्[2] प्रवृत्तन्तु यद्येवं नैव तिष्ठति ।
शिरावेधं तदा प्राज्ञो माषकल्केन लेपयेत् ॥ १० ॥
महावेगं यदारक्तमनेनापि न तिष्ठति ।
ततः शस्त्रमुखं प्राज्ञो दहेल्लोहशलाकया ॥ ११ ॥

वेधस्थानकथनम् ।

वामे वा दक्षिणे वापि देशे चैवाङ्गुलान्तरे ।
अग्रे वलिचयं त्यक्त्वा वेधव्या तालुकी शिरा ॥ १२ ॥

---

संपीड्यते हयः। तदा कण्डूतिमासाद्य कर्षते सततं पुनः। छायां वाञ्छति यत्नेन विशेषेण जलाश्रयाम्"—इत्यादि। "पित्तासृग्दूषितो वाजी यदि चाश्रूणि मुञ्चति। नेत्रान्ते पाण्डुरत्वञ्च सद्यो मृत्युमवाप्नुयात्। श्लेष्मरक्तप्रकोपेण यथा संपीड्यते हयः। अधोवक्त्रो भवेन्नित्यं काशते च मुहुर्मुहुः"—इत्यादि ।

९—११ । अतिस्रावनिवारणोपायमाह । शरावशकलमिति ॥ शरावशकलं शरावखण्डं (खोलाकुचि) ।

१२ । अथ शिरावेधनस्थानानि निर्दिशन् शिरावेधमुपदिशति । वामे वेति ॥ वलित्रयं तालुस्थमित्यर्थः। एतत्तालुशिरावेध उपकुशादिमुखरोगशान्तये ज्ञेयः ।

---

१ । मुखे ननु । खः । २ । अचिरेण । गः ।

शंखजा चैव विस्राव्या अपाङ्गाद्व्यङ्गुलान्तरे[१]।
अश्रुपातगता चैव व्यङ्गुले चक्षुषोरधः ॥ १३ ॥
कण्ठे बद्धा दृढं प्राज्ञः शिरां विस्रावयेत्ततः।
नासिकाया अधस्ताच्च द्व्यङ्गुले प्रोथजां शिराम्॥ १४ ॥
ऊर्द्धन्तु द्व्यङ्गुले चापि बाहुसन्धेर्विचक्षणः।
उरसश्चाधरे[२] भागे तथा वै चतुरङ्गुले ॥ १५ ॥
ग्रीवामुत्क्षिप्य दूरन्तु उरो निःसार्य्य वाजिनः।
औरसीं वेधयेद्वैद्यः शिरां संलक्ष्य तत्त्वतः॥ १६ ॥
किणजाभ्यन्तरे विद्वान् पारकीमुपलक्षयेत्।
किणाधो द्व्यङ्गुले तान्तु व्यङ्गुले चापि वेधयेत्॥ १७॥
ऊर्द्ध्वञ्चैवाक्षिकूटात्तु लालाटीं वेधयेन् शिराम्।
स्रुवजा चैव वेध्या स्याद्व्यङ्गुले स्रुवसन्धितः॥ १८॥
द्व्यङ्गुले कर्णमूलात्तु[३] कर्णजान्ताडयेद्भिषक्।

---

१३। एतत्तु नेत्रशिरावेधनं सर्वविधपटलपुञ्जकादिनेत्ररोगशान्त्यर्थम् ॥

१६। उरोगतरक्तदोषशान्त्यर्थं औरसीशिरावेधनम्। एवं स्रुवमन्येषिकाकूर्चतलकचकोष्ठपृष्ठापाण्डखुरपुच्छादिशोणितजनितपीड़ाशान्त्यर्थं तत्तत्स्थानीयशिरावेधः क्रमेणोक्तः ॥

१७। पारकीमिति पाठो न सङ्गच्छते।

---

१। वंशादेर्द्व्यङ्गुलान्तरे। खः॥　　३। कर्णमूलन्तु। गः।
२। आवर्त्तादधरे भागे ॥ खः।

वेधव्या चैव मन्या तु ग्रीवामध्यगता शिरा ॥ १९ ॥
ऊर्द्ध्वं कूर्चात्तु वेधव्या ईषिका चतुरङ्गुले ।
अङ्गुलैः षट्प्रमाणैस्तु[1] अधस्ताच्चैव जानुनः ॥ २० ॥
षड़ङ्गुलं खुरादूर्द्ध्वं कूर्चजां वेधयेच्छिराम् ।
रोमान्त्या[2] चैव वेधव्या द्व्यङ्गुले खुरसन्धितः ॥ २१ ॥
मण्डूकाग्रञ्च संशोध्य तलजां वेधयेद्बुधः ।
कक्षजा चैव वेधव्या कक्षातश्चतुरङ्गुले ॥ २२ ॥
वामदक्षिणभागेतु नाभिजा[3]ष्टाङ्गुलान्तरे ।
कोष्ठजां ताड़येद्वैद्यः शिरां शस्त्रेण बुद्धिमान् ॥ २३ ॥
पृष्ठजामासनाभ्यासे द्व्यङ्गुलेनैव पार्श्वयोः ।
बद्धा कर्पटकं यत्र[4] शिरां विस्रावयेद्बुधः ॥ २४ ॥
ऊरुसन्धेरधस्तात्तु विसृज्य चतुरङ्गुले ।
ऊरुकाभ्यन्तरे चैव अपाण्डीं वेधयेच्छिराम् ॥ २५ ॥
ऊर्द्ध्वसन्धेरधश्चैव स्थौरिकीं चतुरङ्गुले ।
द्व्यङ्गुले पुच्छमूलाच्च पुच्छजां ताड़येच्छिराम् ॥ २६ ॥
पश्चात्कायसमुत्थानां शिराणां जानुनोरधः ।
तलजानाञ्च कर्त्तव्यं प्राक् प्रयुक्तञ्च वेधयेत् ॥ २७ ॥
सर्व्वेषां शोणितप्रस्थं गालयेच्छास्त्रकोविदः ।

---

१ । अङ्गुलैकप्रमाणैः । ख ।
२ । रोमान्त्यश्चैव वेध्यः स्यात् । खः ।
३ । नाभितः । खः ।
४ । यन्त्रं । गः ।

गुरुलाघवदोषेण बहु चैवाल्पमेव च ॥ २८ ॥
वामाङ्गुष्ठेन संपीड्य सिरां शस्त्रेण ताड़येत्।
श्रान्तं भीतं कृशं वृद्धं वालञ्चैव न वेधयेत् ॥ २९ ॥
प्रदेशे लोमशे नित्यं लोमान्युत्पाट्य[1] वेधयेत्।
प्रमाणार्थञ्च पात्रेण रक्तं गृह्णाति बुद्धिमान् ॥ ३० ॥
तालुशंखहनुप्रोथललाटस्तनकर्णजाः[2]।
कृत्वा यवसमं शस्त्रं शिरा विस्रावयेद्बुधः ॥ ३१ ॥
उरोजां पोचिकाञ्चैव कूर्चजां कोष्ठजां तथा।
अर्द्धाङ्गुलेन शस्त्रेण तलजाञ्चैव ताड़येत् ॥ ३२ ॥
औपाण्डीं[3] स्थौरिकीं वापि कक्षकोष्ठभवां तथा।
पूर्व्वोक्तेनैव शस्त्रेण पुच्छजामपि ताड़येत् ॥ ३३ ॥
अङ्गुलं प्रक्षिपेच्छस्त्रं पृष्ठजायां तथैव च।
बाहुजायाञ्च मन्यायां वेधकाले विचक्षणः ॥ ३४ ॥
सूचकेण[4] च संवेश्य मुखं शस्त्रस्य बुद्धिमान्।
यथाप्रमाणं संस्थाप्य ततो विस्रावयेत् शिराम् ॥ ३५ ॥
असम्यक् ताड़िते भीते वाहे वा विषमस्थिते।
क्षीणास्रक्-शिशिरे तोयादुत्थिते[5] च विशेषतः ॥ ३६ ॥
न वहन्ति सिरा ह्येवं तस्मात् कार्य्या[6] प्रतिक्रिया।

---

१। उत्कृत्य। खः।
२। स्रुवकर्णजाः। खः।
३। अपाण्डीं। खः।
४। मामकेण च। गः।
५। तोये दुःस्थिते। गः।
६। कर्म्मण्या। खः।

हयस्य वमनं नास्ति तथा चैव विरेचनम् ।
वमनं रेचनं नास्ति रक्तस्रावणमुत्तमम् ॥ ३७ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शिरावेधे पञ्चदशोऽध्यायः ।

---

## अथ षोडशोऽध्यायः ।

नेत्रनिर्म्माणविवरणम् ।

अथानुवासनविधिस्तथैवास्थापनस्य च ।
प्रवक्ष्यामि यथायोगं शास्त्रदृष्टेन वर्त्मना ॥ १ ॥
काष्ठैर्दण्डैरयोभिश्च शृङ्गवंशनलादिभिः ।
द्वादशाङ्गुलदीर्घन्तु परिणाहे षडङ्गुलम् ॥ २ ॥
कोलास्थिमात्रच्छिद्रन्तु कुर्य्यान्नेत्रं विचक्षणः ।
मूलादनुक्रमं[1] श्लक्ष्णमस्तृणन्तु विशेषतः ॥ ३ ॥
त्यक्ताङ्गुलानि चत्वारि कर्णिकान्तस्य[2] कारयेत् ।
पुटकस्य प्रबन्धाय मूले द्वे चापि कर्णिके ॥ ४ ॥

---

४ । कर्णिकान्तस्य नेत्रपुष्करप्रान्तस्य मूले चत्वारि अङ्गुलानि त्यक्त्वा पुटकस्याच्छादनस्य प्रबन्धाय बन्धनाय द्वे कर्णिके च कारयेत् ॥

---

१ । अनुक्रमे दद्यो मलक्षन्तु । म्रः ।  २ । ग्रन्थिकान्तस्य । म्रः ।

अनेनास्थापनं कुर्य्यादनुवासनमेव च ।
यथायोग्यं[1] भिषक् प्राज्ञः सर्व्वरोगोपशान्तये ॥ ५ ॥

अनुवासनविवरणम् ।

त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
भोजयित्वा हयं प्राज्ञो रसकस्नेहभोजनैः ॥ ६ ॥
भोजितं भोजनोक्तेन दिनान्ते चानुवासयेत् ।
निरूहयेदनाहारमपराह्णे विचक्षणः ॥ ७ ॥
त्रिभिर्वारैः प्रदातव्यो निरूहः शास्त्रकोविदैः ।
ईषत्तीक्ष्णः प्रयोक्तव्यः[2] प्रथमं पुटकोविदैः[3] ॥ ८ ॥
द्वितीयश्च तृतीयश्च तीक्ष्णौ चैव प्रकीर्त्तितौ ।
एवमास्थापिते वाहे निवृत्ते च निरूहणे ॥ ९ ॥
क्षीरस्य पुटकं पश्चादेकं दद्याद्विचक्षणः ।
ततो विस्रावयेद्वैद्यस्त्वेकवारं तुरङ्गमम् ॥ १० ॥
विस्रावितं स्नापयित्वा पायसैर्भोजयेत्ततः[4] ।
स्नेहानुवासनं तस्य त्रिकाले[5] च प्रदापयेत् ॥ ११ ॥

---

५ । आस्थापनम् आस्थापनवस्तिम् ।
७ भोजनोक्तेन द्रव्येणेति शेषः ।
८ । पुटकः । ( पिच्‌किरि ) ।

---

१ । यथायोगं । खः ।
२ । प्रदातव्यः । खः ।
३ । पुटको बुधैः । गः ।
४ । भोजयेत्पायसैस्ततः । गः ।
५ । द्विकाले । गः ।

स्तोका दूर्व्वा क्षुधार्त्ताय तस्यां रात्रौ हिता स्मृता ।
त्र्यहं वापि हितं दृष्टं भोजनं सानुवासनम् ॥ १२ ॥
यथाकालं यथाव्याधि भोजनं संप्रदापयेत् ।
एवं रोगाः प्रशाम्यन्ति वाजिनां देहसम्भवाः ॥ १३ ॥

निरूहविवरणम् ।

पञ्चमूलद्वयं दन्ती कुष्ठञ्चैव शतावरी[1] ।
अनन्ता त्रिवृता श्यामा वल्ले द्वे च पुनर्णवा ॥ १४ ॥
गुडूची गोक्षुरं विम्बी कुक्कुटैरण्डवासकाः ।
यवाः कुलत्था वदरं तथारग्वधशिग्रुकम् ॥ १५ ॥
एतान्यादाय सर्व्वाणि यथालब्धानि वा पुनः ।
मूलानि सलिले क्षिप्त्वा क्वाथयित्वा विचक्षणः ॥ १६ ॥
पादशेषं कषायेण निरूहं संप्रदापयेत् ।
द्विपञ्चमूलीनिःक्वाथः सः प्रधानो निरूहणे ॥ १७ ॥

---

१४-१७। पञ्चमूलद्वयं विल्वादिदशमूलं। अनन्ता (अनन्तमूल) श्यामा (श्यामालता) त्रिवृत् (तेउड़ी) वल्ले द्वे इति श्वेता पीता च (वेलेड़ा)। विम्बी (तेलाकुचा)। कुक्कुटा (छिपकली)। एषां पञ्चमूलद्वयादिशिग्रून्तानां समस्तानां यथालब्धानां वा द्रव्याणां मूलानि मिलित्वा दशपलानि चतुराढ़कमिते जले पक्त्वा पादशेषः क्वाथः कर्त्तव्यः। एतस्याढ़केन कषायेण निरूहयेत् ।

---

[1] । पाठा दन्ती चैव शतावरी । खः ।
[2] । द्विपञ्चमूली निःक्वाथ्य सप्रधाना । खः ।

कषायं रसकञ्चैव गोमूत्रं काञ्जिकन्तथा।
कल्कञ्चैव प्रदातव्यं भेषजैर्वक्ष्यमाणकैः॥ १८॥
त्रिफला मधुकं रास्ना मदनं गौरसर्षपाः।
एला त्रिकटुकं कुष्ठं शतपुष्पा हरेणुकम्॥ १९॥
हरिद्रे द्वे समञ्जिष्ठे[1] तथा लवणपञ्चकम्।
यथाप्राप्तं समस्तं वा वर्गमेतं प्रदापयेत्॥ २०॥
कफोल्वणेषु रोगेषु तथा वातोल्वणेषु च।
निरूहः संप्रदातव्यस्तुरङ्गस्य विपश्चिता॥ २१॥
कषाये कल्कमालोड्य निरूहं संप्रदापयेत्।
नैवात्यन्ततनुं[2] धीमान् नैवात्यन्तघनं तथा॥ २२॥
पित्ते निरूहः कर्त्तव्यः क्षीरेणेक्षुरसेन वा।
सिन्धुसर्पिःसमायुक्तः शर्करामधुसंयुतः॥ २३॥

१८। तुरङ्गानां कफोल्वणेषु वातोल्वणेषु वा रोगेषु एष निरूहो देयः। त्रिफलादीनां समस्तानां यथालब्धानां वा कषायार्थं दशपलानि कल्कार्थञ्च पलं यथासंख्यं ग्राह्यम्। अथ चतुराढ़के जले पक्का पादावशिष्टे कषाये उक्तं कल्कं मिश्रयित्वा निरूहो देयः। एवञ्च स्वरसगोमूत्रकाञ्जिकानां प्रत्येकमाढ़के प्रत्येकं त्रिफलादि कल्कपलं मिश्रयित्वा निरूहो देयः। एष चतुर्विधो निरूहः॥

२३। पित्ते निरूहमाह पित्त इत्यादि। इक्षुरसस्य क्षीरस्य वाढ़कं सैन्धवस्य पलं घृतस्य च प्रस्थः। मधुनः शर्करायाश्च पलं पलम्॥

१। द्वे च मञ्जिष्ठा। गः। २। नैवात्यन्तं ततो। गः।

चतुर्वर्षस्य वाहस्य गुदे नेत्रं प्रवेशयेत् ।
चतुरङ्गुलं भिषक् प्राज्ञो वाजिशास्त्रविशारदः ॥ २४ ॥
द्वे च[1] द्विवर्षजातस्य त्रिवर्षे चाङ्गुलत्रयम् ।
षाण्मासिके[2] वर्षजाते एकमेवाङ्गुलं भवेत् ॥ २५ ॥
उदङ्मुखं प्राङ्मुखं वा कृत्वा वाहं सुयन्त्रितम् ।
घृताभ्यक्तेन हस्तेन पुरीषमपकर्षयेत् ॥ २६ ॥
स्वयं[3] कृत्वा पुरीषे वा दद्याच्चैवानुवासनम् ।
निरूहश्च प्रदातव्यः पुच्छं नीत्वा प्रदक्षिणम् ॥ २७ ॥
दद्रुशोफकफश्वासग्रहणीकुष्ठरोगिणाम् ।
तृषार्त्तस्य[4] च गर्भिण्याः कृशरूक्षस्य वाजिनः ॥ २८ ॥
क्षुत्तृष्णाश्रमयुक्तानां मद्यं पीतवतामपि ।
वर्जितो वाजिनां वस्तिस्तथाश्वे व्याधिपीड़िते ॥ २९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे निरूहानुवासने षोड़शोऽध्यायः ।

---

२४–२५। अश्वानां वयोविशेषेण नेत्रप्रवेशननियममाह चतुर्वर्षस्येत्यादि ।

२६—२७। कथं निरूहयेत्तदाह उदङ्मुखमित्यादि ।

२८–२९ । येषां निरूहनिषेधस्तदाह दद्रित्यादि ।

---

१ । हये । गः ।

२। षण्मासे वर्षाजाते च । खः । ३। स्वायं। खः ।

४ । विषार्त्तरक्तगर्भिण्याः कृशरूक्षप्रवाजिनाम् । खः ।

## अथ सप्तदशोऽध्यायः ।

### नस्यविधिः ।

ऊर्द्ध्वं[1] वक्त्रस्य दोषोऽस्ति[1] तथाचाधोमुखस्य च ।
तस्मान्नस्यं तुरङ्गस्य ईषदुन्नाम्य दापयेत् ॥ १ ॥
वामाङ्गुष्ठेन संपीड्य एकं नासापुटं बुधः ।
दद्यान्नस्यं तुरङ्गस्य लघुहस्तः सुमात्रया ॥ २ ॥
नाद्यातिस्नक्ष्णया[2] वैद्यो यथा नोद्विजते हयः ।
अन्यथा जायते शीघ्रं नाड़ीव्यापत् सुदारुणा ॥ ३ ॥
तीक्ष्णैर्वा पूरयेन्नाद्या[3] देयं नस्यं विजानता ।
चन्दनोशीरयष्ट्याह्वक्षीरतोयैः सशर्करैः[4] ॥ ४ ॥
नस्यं दद्याद् भिषक् प्राज्ञो नाद्या दोषहिताय वै ।

---

१ । नासायाह्यं यदौषधं तन्नस्यं । तच्च द्विविधं रेचनं स्नेहनञ्च । तयोः रेचनं कफादीनां कर्षणम् । स्नेहनं वृंहणञ्चेति । तदुक्तं परिभाषायां "नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा । रेचनं कर्षणं प्रोक्तं स्नेहनं वृंहणं मतम् ॥ नस्यं तत्कथ्यते धीरैः नासायाह्यं यदौषधम् । नावनं नस्यकर्मेति तस्य नामद्वयं मतम्"—इति ॥

२ । अथ कथं नस्यं प्रयोज्यं तदाह । वामाङ्गुष्ठेनेति । सुमात्रया कर्षमितेनेत्यर्थः ।

---

१ । ऊर्द्ध्वं वक्त्रे च दोषः स्यात् । खः ।
२ । दद्यात् स्नक्ष्णतया वैद्यः । गः ।
३ । पट्या । खः ।
४ । क्षीरतोयैस्तु दापयेत् । गः ।

शरत्कालोचिताः कार्य्याः स्नानपानादिपूर्व्विकाः ॥५॥
क्रियाः सर्व्वाः समासेन वाजिनां हितमिच्छता ।
वाते स्निग्धं कफे चोष्णं पित्ते वै स्वादुशीतलम् ॥ ६ ॥
कफे रूक्षञ्च तीक्ष्णञ्च नस्यं प्रोक्तं तपोधनैः ।
चिवृच्चूर्णं तथा तैलसर्पिषा वसया तथा ॥ ७ ॥
स्निग्धमेतत् स्मृतं नस्यं वाते वापि प्रशस्यते ।
जीवनीयौ समधुकौ शर्कराक्षीरवारिणा ॥ ८ ॥

---

५। शरत्कालिकं नस्यमाह नकुलः,—"शिलाचन्दनतोयादि-शिक्काचाणि? वाजिनां। शर्करामाक्षिकं सैरं पटोलं पलसम्मितम् ॥ नस्यं शरदि सप्तीनां जायते रोगशान्तये"—इति ।

६। नकुलोऽपि वाताद्यधिके स्निग्धादिनस्यमाह,—"देयं वाताधिके स्निग्धं रौक्षं तिक्तं कफाधिके । पित्ताधिके तु मधुरं तुरङ्गे संप्रयोजितम्"॥ एषां द्विपञ्चाशत् श्रेष्ठं, अष्टोत्तरविंशति मध्यमं, षड्विंशत्यधमं नस्यं नकुलेन प्रयोजितम् ॥

७। वाते स्निग्धं नस्यमाह चिवृदिति। चिवृच्चूर्णस्य कर्षः तैल-घृतवसानां कुड़वार्द्धं संमिश्य देयम्। वातेऽपि नस्यमाह नकुलः,—"शुण्ठी घृतञ्च दुग्धञ्च रजःसारं तथैव च। वातदोषविनाशाय नस्यमेतत् प्रयोजयेत्"—इत्यादि ॥

८। पित्ते नस्यमाह जीवनीयाविति। जीवकर्षभकौ मेदमहामेदे च। मधुकं (यष्टिमधु)। अत्रापि नकुलः,—"माक्षिकं शर्करामिश्रं चन्दनं केसराणि च। नस्योऽयं वारिणा सद्यः पित्तनाशकरः सदा"॥

स्वादुशीतं भवेन्नस्यं पित्तरोगविनाशनम् ।
वार्त्ताकव्योषकल्केन निर्गुण्डीस्वरसेन वा ॥ ९ ॥
रूक्षं तीक्ष्णं सगोमूत्रं नस्यं प्रोक्तं कफापहम् ।
सन्निपाते प्रयोक्तव्यं स्निग्धशीतलतीक्ष्णकैः ॥ १० ॥
द्वन्द्वरूपे द्विविधं कार्य्यं नस्यं मतिमतांवरैः ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे नस्य-विधाने सप्तदशोऽध्यायः ॥

---

९। निर्गुण्डी (निशिन्दा)।

१०। कफनस्ये नकुलः,—"धातकी गण्डकी चैव गोमूत्रं लवणं तथा। नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा"—इति ॥ सन्निपातेऽपि नस्यमाह स एव,—"गुडूची शुण्ठी मुस्ता च तगरं सितसर्षपम् । सन्निपाते तु नस्योऽयं वारिणा क्षमकारकः ॥ कुंकुमं सघृतं चैव माक्षिकं सितसर्षपाः । सन्निपाते सपित्तेऽयं नस्यः स्याज्जीवरक्षकः ॥ अभया पुत्रिणी एला एला लाक्षा शतावरी । सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥ मरिचं पिप्पलीमूलं वचासारङ्गिकाभ्रकः। सन्निपाते कफाधिक्ये नस्यं सप्तेः सुखप्रदम्"—इति ॥

## अथाष्टादशोऽध्यायः ।



स्वेदविधानः ।

यत्र क्वाथेन यः स्वेदो गुरुः स्वेदः स उच्यते ।
वालुकापुटकैः स्वेदः पुटस्वेद उदाहृतः ॥ १ ॥
शकृता महिषाश्वानां गोमयेन तथैव च ।
अग्नितप्तेन यः स्वेदः शङ्करस्वेद उच्यते ॥ २ ॥
अतसीभिः शणैर्माषैर्वीजैः काश्मर्य्यसम्भवैः ।
गोधूमैस्तिलयवैश्चैव कुलत्थैर्धान्यसम्भवैः ॥ ३ ॥
वर्षाभूगोक्षुरैरण्डैर्धान्याम्लक्वथितैः समैः ।
सर्व्ववातहरः स्वेदः पुटाख्यो गात्रसम्भवः ॥ ४ ॥
सुतप्तकाञ्जिकैः स्विन्नं वुषं बद्ध्वा पुटं भिषक् ।
तुषस्वेदं तुरङ्गस्य धान्यैर्वापि प्रदापयेत् ॥ ५ ॥
कफे रूक्षं प्रशंसन्ति स्वेदं शास्त्रविदो जनाः ।
आभाज्य वाते तैलेन सर्पिषा वा प्रदापयेत् ॥ ६ ॥

---

३ । अतसी (मसिना) । काश्मर्य्यसम्भवैः गाम्भारीजातैः वीजैरिति शेषः । (गामार्‌वीज) । वर्षाभूः पुनर्नवा (श्वेतपुन्या) । धान्याम्लक्वथितैः काञ्जिकपाचितैः । अतस्यादीनां समो भागो ग्राह्यः ॥

वातश्लेष्मणि वाते वा कफे वा स्वेद उच्यते ॥ ७ ॥
पित्तरोगातुरः श्रान्तः क्षुधार्त्तश्च पिपासितः।
अस्वेद्यः कीर्त्तितो वाजी वड़वा चैव गर्भिणी ॥ ८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे स्वेदविधानेऽष्टादशोऽध्यायः ॥

---

## अथैकोनविंशोऽध्याय।



स्नेहप्रयोगः।

स्नेहप्रयोगो द्विविधः पिण्डः पेयश्च[1] वाजिनाम्।
पिण्डो भोजनसंयुक्तः पाने पेयः स उच्यते ॥ १ ॥
शरत्काले प्रधानस्तु प्रयोगः सर्पिषो मतः।
हेमन्ते शिशिरे चैव तैलस्य समुदाहृतः ॥ २ ॥
पलपञ्चकमारभ्य चीणि चीणि विवर्द्धयेत्।
पूर्णः प्रस्थो भवेद्यावदश्वपाने[2] त्वयं विधिः ॥ ३ ॥

---

३। प्रथमदिने पलपञ्चकमारभ्य प्रतिदिनं यावत्-प्रस्थपूरणं पलचयमाचं वर्द्धयेत्। अश्वपान इति वाजिघृतपानविषये ॥

---

१। पानच।खः।　　　२। अच्छपाने।गः॥

अश्वपानाच्च[1] दातव्यमर्द्धं स्नेहस्य पण्डितैः।
प्रभाते वा विकाले वा पिण्डं दद्याद्भिषक् तथा॥ ४॥
एकेनाह्ना न दातव्यं प्रस्थादूर्द्धं घृतं बुधैः।
आढ़कादपरो नैव प्रयोगस्तस्य शस्यते॥ ५॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा।
दशाहं द्वादशाहं वा दद्यात् स्नेहं निरन्तरम्॥ ६॥
क्षुधिते यवसं दूर्व्वां तस्मै दद्याद्विचक्षणः।
सुखोष्णं सलिलञ्चैव प्रशस्तं परिकीर्त्तितम्॥ ७॥
स्निग्धता सर्व्वगात्राणां वर्चः स्निग्धमसंहतम्।
सम्यक्स्निग्धस्य वाहस्य उत्साहश्चैव जायते॥ ८॥
अरुचिर्दीनता चैव पादानां श्वयथुस्तथा।
अतिभिन्नपुरीषञ्च अतिस्निग्धस्य लक्षणम्॥ ९॥
अस्निग्धस्य[2] भवेद्वर्चो रूक्षवर्त्तितमेव[3] च।
तस्मै वातो भिषक् प्राज्ञः पुनः स्नेहं प्रदापयेत्॥ १०॥
सम्यक्स्निग्धं प्रशंसन्ति मुनयः शास्त्रकोविदाः।
अतिस्निग्धश्च रूक्षश्च द्वावेतौ निन्दितौ स्मृतौ॥ ११॥

४। अश्वपानाच्चेत्यत्र अश्वपानायेति पाठः साधीयान्।

५। यस्मिन्दिने घृतप्रस्थो दीयते तस्मिन्दिने द्रव्यान्तराणामाढ़कादूर्द्धं न देयमित्यर्थः॥

१। अश्वमानाच्च। गः।
२। अतिस्निग्धं। खः॥
३। वच्चपवर्त्तितम्। गः॥

अतिस्निग्धस्य वाहस्य कुर्य्याच्चैव विचक्षणः।
भोजनैः प्रतिपानैश्च वक्ष्यमाणैरनन्तरम्॥ १२॥
सुरालवणसंयुक्तं प्रातर्दद्याद्विचक्षणः।
यवागूभोजनञ्चैव विकाले तक्रसंयुतम्[१]॥ १३॥
मुद्गाश्च भोजने देयास्तक्रेणाम्लेन मर्द्दिताः।
एतत्त्र्यहं प्रकर्त्तव्यं पञ्चाहं वा भिषग्वरैः॥ १४॥
एवं विरूक्षितानान्तु शुष्कघासैकवर्त्तिनाम्।
कायाग्नेर्जायते वृद्धिः स्वल्पाम्भसश्चापि वाजिनाम्॥ १५॥
तैलं क्षारेण संयुक्तं प्रावृट्काले प्रदापयेत्।
क्षीरयुक्तं शरत्काले हेमन्ते सुरया युतम्॥ १६॥
शिशिरे लवणैर्युक्तं वसन्ते त्रिफलान्वितम्।
वारिणा द्विगुणेनैव ग्रीष्मकाले[२] प्रशस्यते॥ १७॥
अपक्कं नैव दातव्यं पाने स्वस्थेषु वाजिषु।
समीक्ष्य दोषं पक्कञ्च तैलं दद्याद्विचक्षणः॥ १८॥
आमं दत्तं गुदे तैलमभिष्यन्दाय जायते।
तस्माद्दद्याद्विशेषेण स्नेहं[३] वस्तौ विपाचितम्॥ १९॥

---

१६　तैलं पलाष्टकम्। क्षारस्य च षट्तोलकं मात्रा॥
१७। लवणस्य पलं। त्रिफलायाश्च मिलितं पलम्॥

---

१। तक्रसंस्कृताम्। खः॥　　३। स्नेहवस्तिविपाचितः। गः॥
२। ग्रीष्मेचापि। गः॥

मन्दकोष्ठानले वाहे स्थूले चातिकृशे तथा ।
स्नेहपानं न दातव्यं व्यायामेन च योजिते ॥ २० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे स्नेहप्रयोगे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ।

### तैलविधानः ।

#### मधुकादितैलम् ।

मधुकोशीरयष्ट्याह्वरक्तचन्दनपद्मकैः ।
श्रीपुष्पधातकीलोध्रमञ्जिष्ठाचन्दनैः समैः ॥ १ ॥
कल्कीकृतं पचेत्तैलं गोक्षीरेण समन्वितम् ।
पित्तदोषविनाशाय मधुकाद्यभिधानकम् ॥ २ ॥

#### त्रिवृत्सर्पिः ।

सर्पिस्तैलं वसां चैव एकीकृत्य विचक्षणः ।

---

१। मधुकं (मौल) । उशीरं (गन्धवेणा) । यष्ट्याह्वं (यष्टिमधु)। पद्मकं (पद्मकाष्ठ)। श्रीपुष्पं (लवङ्ग)। धातकी (धाइफुल)। अत्र चन्दनं श्वेतचन्दनं। तैलस्य प्रस्थः। मधुकादीनां मिलित्वा कुडवः। दुग्धं च तैलसमं देयम् ॥

३—४। सर्पिस्तैलवसानां मिलित्वा प्रस्थः। दशमूलस्य कल्कः

दशमूलकषायेण तत्कल्कैः पाचयेद्भिषक् ॥ ३ ॥
मृदग्निना तदृताख्यं नस्यपानादिकामिकम् ।
वातव्याधिविनाशाय कीर्त्तितं यत्तपोधनैः ॥ ४ ॥

प्रसारणीतैलम् ।

शतं शतं पलानान्तु प्रसारण्यश्वगन्धयोः ।
दशमूलशतञ्चैव क्वाथयित्वा विचक्षणः ॥ ५ ॥
माषपर्ण्याः पलं वापि मुद्गपर्ण्याः पलं तथा ।
सैन्धवस्य पले दत्तु[1] चित्रकस्य तथैव च ॥ ६ ॥
पिप्पलीनां तथामूलं प्रसारण्याश्च बुद्धिमान् ।
यवक्षारञ्च गृह्णीयाद् बुधो द्विपलिकं तथा ॥ ७ ॥
पलैकं[2] चाष्टवर्गन्तु कल्कार्थे संप्रयोजयेत् ।
पूर्व्वोक्तेन कषायेण दधिक्षीरतुषोदकैः ॥ ८ ॥

---

कुड़वमितः । दशमूलस्य क्वाथ्यस्य मिलितं शरावद्वयं । क्वाथार्थं वारि (३२ शराव) पदावशिष्टं कर्त्तव्यम् । अथ कल्केन सहैकत्र पाचयित्वा स्नेहपाकविधानेन साध्यम् ॥

५—८ । तिलतैलं शरावचतुष्टयं (४ से) । क्वाथ्यद्रव्यं—प्रसारणादीनां त्रयाणां प्रत्येकं पलशतं । अथ क्वाथार्थं वारि प्रत्येकं ४०० पलं । पादावशिष्टं कृत्वा तेन क्वाथेन पृथक् पृथक् पाच्यं । तथा दध्ना दधिमस्तुना, क्षीरेण, तुषोदकेन च प्रत्येकं तैलसमानेन माषपर्ण्यादीनां

---

१ । दलदत्तु । खः ॥  २ । पलिकं । खः ॥

पचेत् प्रसारणीतैलं भिषग्विद्वान् समाहितः ।
वातरोगेषु[1] सर्व्वेषु हितं भेषजमुत्तमम् ॥ ९ ॥
दशमूलस्य कल्केन तत्कषायाम्लकाञ्जिकैः ।
लवणैः संयुतं तैलं पचेद्वातविनाशनम् ॥ १० ॥
तुल्याभ्यां घृततैलाभ्यां चिह्नतोक्तैश्च भेषजैः ।
मिश्रकं साधयेत्तैलं वसातैलेषु[2] मध्यमम् ॥ ११ ॥
अपक्वं यमकं[3] प्रोक्तं घृतं तैलसमीकृतम् ।
पाने वस्तौ तथाभ्यङ्गे वातरोगेषु शस्यते ॥ १२ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे तैलविधाने विंशोऽध्यायः ॥ २० ॥

---

कुट्टितेन कल्केन च सह तैलं साधयेत् । पाकप्रणाली—आदौ तैलं मूर्च्छयित्वा प्रसारण्यादीनां प्रत्येकं क्वाथेन सह कल्कं भोजयेत् । ततः क्षीरादीनि भोजयित्वा पाकशेषं कुर्य्यात् । क्षीरे द्विरात्रं सरसे त्रिरात्रं तक्रारणालादिषु पञ्चरात्रमिति नियमात् क्षीरं भोजयित्वा द्विरात्रं दधिमस्त्वारणालञ्च भोजयित्वा पञ्च पञ्च वासरान् संस्थापयेत् । अष्टवर्ग इति जीवकर्षभककाकोलीक्षीरकाकोलीमेदमहामेदर्द्धिवृद्धिकानि अष्टौषधानि । तदुक्तं,—"जीवकर्षभकौ मेदे काकोल्यावृद्धिवृद्धिके । अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः"—इति परिभाषा ॥

---

१ । रोगेषु चैव सर्व्वेषु । गः ॥
२ । सिद्धं तैलेन मध्यमम् । गः ॥
३ । मध्यम् । गः ॥

## अथैकविंशोऽध्यायः।

घृतविधानः।

पञ्चतिक्तघृतम्।

वासानिम्बकरञ्जानां सप्तपर्णीपटोलयोः।
साधयेत् क्वाथकल्काभ्यां पञ्चतिक्तघृतं बुधः॥१॥

करञ्जाद्यं घृतम्।

करञ्जोशीरमधुकैः श्यामाचन्दनपद्मकैः।
त्रायमाणा शटी मूर्व्वा पटोलातिविषैः समैः॥२॥
एतैः सर्व्वैस्तथा सार्द्धं त्रिचतुःपञ्चसम्मितैः।
कल्कीकृतैः पचेत् सर्पिस्त्रिफलाया रसेन तु॥३॥
पित्तदोषापहं हृद्यं बलतेजोविवर्द्धनम्।
करञ्जाद्यभिधानन्तु जीवनं बृंहणं भिषक्[1]॥४॥

---

१। कल्कार्थं वासादीनां प्रत्येकं पलं, क्वाथार्थं च प्रत्येकमष्टपलम्। वारिः ३२ शरावाः। स्नेहस्य च प्रस्थः॥

२—४। घृतस्य प्रस्थः। क्वाथार्थं त्रिफलायाः शरावचतुष्टयं, वारि च (३२ श)। पादावशेषेण क्वाथेन सह करञ्जादीनां मिलित्वा पलचतुष्टयं कल्कीकृत्य घृतं पाच्यम्॥ त्रायमाणा बलालता। अतिविषं (आतइच्)। नकुलोऽप्यत्र सप्तविंशतिकं घृतमाह,—“शिलाजतुविंशाला

---

१। जीवयेत्तु हृयं भिषक्। गः॥

द्वितीयं पञ्चतिक्तं घृतम् ।

पटोलं वासकं निम्बं गुडूची कण्टकारिका ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ ५ ॥
त्रिफलायाः पलान्यष्ट तत्रैव[1] दापयेद्भिषक् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥ ६ ॥
घृतप्रस्थं प्रदातव्यं त्र्यूषणस्य पलद्वयम् ।
कासे श्वासे च हिक्कायां गलगण्डार्दितेषु च ॥ ७ ॥
ये चान्ये कफजाः केचित् रोगा वातप्रकोपजाः ।
पैत्तिका द्वन्द्वजाश्चापि तथा वै सन्निपातजाः ॥ ८ ॥
एतानपि निहन्त्याशु पञ्चतिक्तमिदं घृतम् ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे घृतविधाने एकविंशोऽध्यायः ॥

---

च पद्माख्यं नागकेशरम् । लाचाप शकमूलञ्च निम्बद्वयसमन्वितम् ।
घृतं समांशकं देयं सप्तविंशतिकं विदुः"—इति ॥

---

१ । मुखं तत्रैव दापयेत् ग: ॥

## अथ द्वाविंशोऽध्यायः।

श्रान्तोपचारः।

श्रमो भवति रोगाय वाहानामतिवाहनात्।
आसिनः स्लथदेहाश्च दीनास्तेन भवन्ति वै[१] ॥ १ ॥
श्रान्तस्य मदिरान्दत्वा[२] गड़युक्तां विजानता।
पश्चाद्वासः प्रदातव्यो जलपानं भवेत्ततः ॥ २ ॥
गोमयं लवणं मूत्रं क्वथितं मृत्समन्वितम्।
सर्व्वाङ्गलेपनं प्रोक्तं मुनिभिः श्रमशान्तये ॥ ३ ॥
मर्द्दयेत् सर्व्वगात्राणि गोमयेनाथवा पुनः।
क्षीरोदकेन वस्तिञ्च दद्यात् सेकञ्च मूर्द्धनि ॥ ४ ॥
सर्व्वकायिकमभ्यङ्गं सर्पिषा चैव कारयेत्।
श्वोभूतजलकुम्भस्थान् संस्कृतान् दापयेद् यवान् ॥ ५ ॥

---

३। मूत्रं गोमूत्रम्। श्रमशान्तये पिण्डमाह नकुलः, "मद्यं मरिचसंमिश्रं लशुनं नागकेशरम्। द्विगुणं मेषमांसञ्च पिण्डो दत्तो श्रमेऽक्षमम्"–इति ॥

५। श्वोभूतजलकुम्भस्थानिति पूर्व्वदिने वारिपर्य्युषितानित्यर्थः ॥

---

१। स्लथदेहाश्च दीना श्रश्वा भवन्ति ते। खः ॥
२। मदिरा देया गुड़युक्ता। गः ॥

एता एव क्रिया वैद्यः पञ्चरात्रं प्रयोजयेत्।
मांसानां रसकैर्युक्तं यवान्नं भोजयेद्भिषक्[१] ॥ ६ ॥
प्रथमे दिवसे दद्यात् कम्पनाय च वाजिने।
मांसानां रसकं पाने मारुतोद्भवशान्तये ॥ ७ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे श्रान्तोपचारे द्वाविंशोऽध्यायः।

---

## अथ त्रयोविंशोऽध्यायः।

---

स्वस्थारिष्टः।

अथातः संप्रवक्ष्यामि स्वस्थारिष्टस्य लक्षणम्।
शालिहोत्रादिभिः पूर्व्वमृषिभिः कीर्त्तितं यथा ॥ १ ॥
दुर्म्मना हीनवर्णश्च दत्तं नैव[१] च खादति।
विना रोगमकस्माद्यो गतायुः स प्रकीर्त्तितः ॥ २ ॥

---

६। मांसानामित्यादि मांसरसयुक्तं यवान्नं यथोक्तपरिमाणं दापयेदित्यर्थः ॥

१। स्वस्थारिष्टमिति। स्वस्थस्य सुस्थदेहस्य अरिष्टं मृत्युलक्षणम्।

२। एवं नकुल आह,—"यस्याविकारिणोऽश्वस्य शरीरं परिक्षीयते। विमना ध्यानशीलस्तु अचिरात् स विनश्यति" ॥ इति।

---

१। ततः। ख॰। २। दत्तं चैव न खादति। ख॰।

पराङ्मुखी भवेद्यस्य छाया चैव न दृश्यते।
द्विगुणा वा सच्छिद्रा वा गतायुः सोऽपि कथ्यते[१] ॥३॥
ललाटे पुच्छमूले वा श्वयथुर्यस्य जायते।
यस्य रोमाणि[२] स्निग्धानि तैलाक्ता इव केशराः ॥४॥
असाध्य[३] इति जानीयात् सप्ताहं तस्य जीवितम्।
मेढ्रं निष्क्राम्य यो वाजी शार्दूलवन्निषीदति ॥५॥
विवर्णा दशना यस्य सहसा वा पतन्ति च[४]।
श्यावौष्ठतालुजिह्वाश्च तेऽपि यातायुषो मताः ॥६॥
स्नातस्य यस्य वाहस्य[५] पूर्व्वं क्रोड़ं[६] विशुष्यति।
मासेन मरणं तस्य निर्दिष्टं शास्त्रकोविदैः ॥७॥

---

३। अत्र नकुलः,—"छाया यस्य तिरस्कार्य्या तिमिरे यदि दृश्यते। अतिदीर्घातिह्रस्वा वा अचिरेण विनश्यति॥ यस्य प्रमाणतोऽश्वस्य भवेच्छाया पराङ्मुखी। द्विगुणा वापि यस्यैव सोऽपि वाजी परासुगः॥ वराहस्य तथोष्ट्रस्य सहसा सदृशी तु वा। अन्यस्वरूपविकृता छाया यस्य प्रदृश्यते॥ दीर्घकाले तथा ह्रस्वः सोऽपि शीघ्रं विनश्यति। आशु यस्य प्रसन्नाप्सु छायाश्वस्य न दृश्यते। सेव्यते मक्षिकाभिस्तु अभीक्ष्णं घोरवेदनः॥ एवंविधस्ततो वाजी सोऽपि शीघ्रं विनश्यति"—इति॥

७। "स्नातस्य सहसा पूर्व्वं क्रोड़ोऽपि च विशुष्यति"—इति नकुलः।

---

१। कीर्त्तितः। गः॥
२। शीर्य्यन्ते यस्य रोमाणि। खः॥
३। अध्माति च। खः॥
४। ये। गः॥
५। विवर्णं दशनं यस्य सहसा। खः॥
६। विमुच्यते। खः॥

नासामेढ्राक्षिपायुभ्योऽकस्माद् यस्य च शोणितम् ।
सपित्तं जायते यस्य श्वासार्त्तोऽप्यतिमूत्रवान् ॥ ८ ॥
शूनोदरगुदमेढ्रो यश्चैते विगतायुषः ।
पूतिगन्धं भवेद्यस्य दुर्गन्धं मूत्रविट् तथा ॥ ९ ॥
दृष्ट आकम्पते[1] यस्य ग्रासमुद्गिरते यदि ।
मक्षिके[2] भं क्षितः पश्चात् निमिषे यस्य लोचने ॥ १० ॥
न शृणोति च कर्णाभ्यां स्पष्टं दृष्टं न बुध्यते ।
न चालयति लाङ्गूलं स्तब्धकर्णश्च जायते ॥ ११ ॥
श्रवणे पाण्डुरा रक्ता शिरा यस्य च वेधिता ।
मस्तके तालुके कण्ठे हृदि मुष्के च जायते ॥ १२ ॥
श्वयथुः कठिनोऽत्यर्थं रक्तहीनाश्च वाजिनः ।

---

९। दर्शनेन्द्रियारिष्टमाह नकुलः,—"दृश्यते चाक्षिणी यस्य पटलाभे इवाश्रिते। विमुक्तबन्धने चैव विच्छिन्ने च समन्ततः॥ अप्रसन्ने च विहृते सोऽपि शीघ्रं विनश्यति। कुञ्चितं यस्य दृष्टं तु प्रस्तब्ध इव लक्ष्यते॥ पुण्डरीकप्रख्ये वापि विवृत्ते यस्य लोचने। तिमिरे तु प्रदृश्येते सोऽपि शीघ्रं विनश्यति" इति ॥

११। श्रवणेन्द्रियारिष्टे नकुलः,—"कर्णौ यस्य प्रदृश्येते स्तब्धाविव समुच्छ्रितौ। श्रवणे पाण्डुरा रक्ता शिरा यस्य स वेधिता ॥ विनश्यति हयः क्षिप्रमेतैर्लिङ्गैर्न संशयः" इति ।

---

१। दृष्टोवा कम्पते। गः।

२। माक्षिके वेष्टिते यश्चानिमेषस्य लोचने। खः।

मुखेन स्रवते लाला प्रस्वेदो यस्य लेपवत् ॥ १३ ॥
तालुकं स्फोटकाकीर्णं नेत्रे कान्तिविवर्जिते ।
स्नाने पाने विरक्तश्च निद्राहीनोऽवघूर्णते[1] ॥ १४ ॥
यस्यैकैकं भवेच्चिह्नं मासान्तं तस्य जीवितम् ।
रोगीभूतस्य वाहस्य क्रियया वर्जितस्य च ॥ १५ ॥
यस्यैकैकं भवेच्चिह्नं पञ्चाहाभ्यन्तरे मृतिः[2] ।
जिह्वाग्रे[3] पिड़का यस्य दृश्यते[4] च तथाधरे ॥ १६ ॥
मूत्रं करोति रक्ताभं सप्तमासान् स जीवति ।
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ॥ १७ ॥
जिह्वा हिमसमाकारा स्वल्पायुः[5] परिकीर्त्तितः ।
रक्तमश्रु च नेत्रान्ते पाण्डुरे च गतायुषः ॥ १८ ॥
स्विन्ने मांसान्विते नेत्रे रक्ताभे रक्तवाजिनः[6] ।
कृष्णपीतविचित्रैश्च सप्तमे स्वल्पजीविनः ॥ १९ ॥

---

१६ । रसनेन्द्रियारिष्टमाह नकुलः,—"जिह्वा च कठिना स्तब्धा सोऽपि शीघ्रं विनश्यति" ।

१९—२१ । वेधशमनपिण्डमाह, शिंशपेत्यादि ॥ शिंशपा (शिशु) । सारनिर्यासः शालनिर्यासः (धुना) । अष्टवर्गमिति । का-

---

१ । विना निद्रां च घूर्णति । खः ।
२ । म्रियेत् । गः ।
३ । ग्रीवाग्रे । खः ।
४ । श्वेते चैव । खः ।
५ । मतायुः सम्प्रकीर्त्तितः । गः ।
६ । स्विन्नमांसनिभे नेत्रे रक्तपीते च वाजिनः । खः । बिन्दुभिः कृष्णपीतैश्च व्याप्ते वा स्वल्पजीविनः ॥

नेत्रैश्चैव विवर्णैश्च[1] सप्तरात्रन्तु जीवति।
रक्तवर्णं भवेदेकं द्वितीयं नीलवर्णकम् ॥ २० ॥
पुटान्ते लोचने[2] यस्य मासायुः स प्रकीर्त्तितः।
स्यातां नीले हि नेत्रान्ते लेखे द्विमासजीविनः ॥ २१ ॥
नीलपीते च नेत्रान्ते स्यातां त्रिमासजीविनः।
चतुर्मासायुषो लेखा[3] नेत्रान्ते बहुवर्णकाः ॥ २२ ॥
षण्मासजीविनोऽश्वस्य नेत्रान्ते बहुविन्दवः।
सप्तमासायुषो नीले नेत्रे स्यातां हि वाजिनः ॥ २३ ॥
दशमासायुषोऽश्वस्य नेत्रयोर्वर्णव्यत्ययः[4]।
नासानिकटनेत्रान्ते प्रसार्य्याश्वस्य लक्षयेत्[5] ॥ २४ ॥
दृष्टी रूक्षा सिता वातात् पित्तात् पीतारुणप्रभा।
कफात् श्वेता जलार्द्रा च पीताभा च[6] ज्वरागमे ॥२५॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे स्वस्थारिष्टे त्रयोविंशोऽध्यायः।

---

काकोली क्षीरकाकोली जीवकर्षभकौ मेदमहामेदौ ऋद्धिर्वृद्धिश्च। द्वौ क्षारौ सर्जिक्षारयवक्षारौ। कटुका (कट्की)। उग्रा वचा, लवणं सैन्धवं। गजपिप्पली प्रसिद्धा। त्रिकटु शुण्ठीपिप्पलीमरिचानि। त्रिजातं मुस्तचित्रकविड़ङ्गानि। एतेषां चूर्णानि समभागानि पल-मितानि पिण्डार्थं ग्राह्याणि।

---

१। नेत्रै विविधवर्णैश्च। गः।
२। लोचनं। खः।
३। चतुर्मासायुषोऽश्वस्य। गः।
४। यस्य नेत्रान्ते व्यक्तवर्णकः। गः।
५। लक्ष्यते। खः।
६। पीताच्चालं ज्वरागमे। गः।

# अथ चतुर्विंशोऽध्यायः ।

वेधारिष्टः ।

अकस्माद् यदि वाहानामेकरूपा भवेद्रुजा ।
म्रियते च यदा क्षिप्रमुपसर्गं तदादिशेत् ॥ १ ॥
निदानञ्चैव चिह्नञ्च वक्ष्ये तस्य यथाक्रमम् ।
शरत्काले शुचौ वापि ऋतुसन्धौ च[१] जायते ॥ २ ॥
कदाचित् कस्मिन्देशे सविषो वहति मारुतः ।
तस्मादपि च वाहानामङ्गेभ्यस्तु[२] प्रजायते ॥ ३ ॥

निदानलक्षणम् ।

निदानेभ्यः समासेन वक्ष्यामस्तानि सांप्रतम् ।
शरत्काले तथा ग्रीष्मे वाहानां रवितापतः[३] ॥ ४ ॥
उपसर्गश्च वेधाख्यो जायते नात्र संशयः ।
शालाभावे च वाहानां प्रावृषि जायते मलात् ॥ ५ ॥
मशदंशकदोषाच्च चिन्तादेरुपयोगतः ।
उपसर्गस्तु वेधाख्यो जायतेऽश्वस्य दारुणः ॥ ६ ॥
उपसर्गे समुत्पन्ने एतद्भवति लक्षणम् ।
अधोमुखाश्च दीनाश्च सज्वराः श्वासकासिनः ॥ ७ ॥

---

१ । ऋतुसन्ध्यावसानके । गः ।    २ । मनोभ्यस्तु ।
३ । प्रतिभानतः । गः ।

स्तब्धाङ्गा विकृताः क्षामाः पीड़ार्त्ताश्वासमूर्च्छिणः ।
आमावृतपुरीषाश्च[1] तथा शुष्कपुरीषिणः ॥ ८ ॥
अतिसारं सरक्तञ्च कदाचित् कुरुते[2] हयः ।
शूनाः पश्चिमपादाश्च शूनाश्च वृषणोदराः ॥ ९ ॥
सतिग्ममनसो जातु दुर्मनांसो भवन्ति च ।
धृतिं नैवाधिगच्छन्ति स्थाने वा शयनेऽपि वा ॥१०॥
भोजनं यवसं तोयं नैवाश्नन्ति च खादनम् ।
कीर्य्यन्ते[3] मक्षिकाभिश्च साश्रुनेत्रा भवन्ति च ॥११॥
मन्दाग्नयश्च जायन्ते वलतेजोविवर्जिताः ।
न सहन्त्यातपं सौरं हयाश्छायानिषेविणः ॥१२॥
चन्द्रे प्रकाशमाने तु हयान् मुक्तातु[4] रक्षयेत् ।
आतपाशङ्कया छायां सवेधो याति निश्चयम् ॥१३॥

वेधारिष्टचिकित्सा ।

एतानि लक्षणान्येव सवेधानां भवन्ति वै ।
उपसर्गे तु सञ्जाते शान्तिकर्म्मणि कारयेत् ॥१४॥
नीराजनविधानन्तु कर्त्तव्यं पूर्व्वनोदितम् ।
अश्वरक्षाविधानाय[5] ऋचा साम्ना च पाठकः ॥१५॥
जुहुयाज्ज्वलनं विप्रस्तुरङ्गानां हितेच्छया ।

---

१ । अपावृत्तपुरीषाः । गः ॥ ३ । प्रेषते । खः ॥
२ । कुर्व्वते हयाः । खः ॥ ४ । युक्ता निरीक्षयेत् । गः ॥
५ । अश्वरक्षाविधानन्तु नीराजाभावपाठकः । गः ॥

अथर्व्वविहितां शान्तिं गान्धर्व्वीं[1] वा प्रयोजयेत्।
नदीपारञ्च नीत्वाश्वान् स्थापयेच्च पृथक् पृथक्।
कदाचिद् दैवयोगेन शान्तिकर्म्म-फलेन वा ॥१७॥
प्रशमं यान्ति वाहानां उपसर्गाः सुदारुणाः।
तैलपानं तथाभ्यङ्गं घृतपानं तथैव च ॥१८॥
सप्ताहञ्चाहरेद्यस्तु स जीवेन्नात्र संशयः।
शिंशपासारनिर्य्यासमष्टवर्गास्तथैव च ॥ १९ ॥
द्वौ क्षारौ कटुका चोग्रा लवणं गजपिप्पली।
त्रिकटु त्रिफला चैव त्रिजातं हिङ्गुरेव च ॥ २० ॥
एतानि समभागानि पिष्ट्वा पिण्डं प्रदापयेत्।
दीप्यते तस्य कायाग्निर्वैधश्चैवोपशाम्यति ॥ २१ ॥
उत्क्षिप्तवंक्षणः स्तब्धश्वासमन्दाग्निरश्रुवान्।
दुर्गन्धो मक्षिकाक्रान्तो ध्यायी चाश्वो[1] न जीवति॥२२॥
जीवेत् पक्षन्तु तुरगो वली मासञ्च जीवति।
जीवेत् संवत्सरं वापि न तु रोगात् प्रमुच्यते ॥ २३ ॥
प्रावृषः पूर्व्वकाले तु सद्यो दद्याद्विचक्षणः।
नोचेज्ज्वरातुरोह्यश्वः कार्त्तिके मासि जायते ॥ २४ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे वैद्यारिष्टे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

१। घार्य्यावासः। खः॥

## अथ पञ्चविंशोऽध्यायः।

---

कीटारिष्टः

कीटनिदानलक्षणे।

कीटवेधं प्रवक्ष्यामि यथाशास्त्रं समासतः।
शरन्निदाघयोश्चैव वाहानां घर्म्मसेवनात्॥ १॥
वाजिनां कीटवेधस्तु[1] भवेन्निरुपचारतः।
घनकाले च तोयानां सेवनाच्छालया विना॥ २॥
कीटकाण्डास्तदाश्वानां भवन्ति जठरे[2] स्थिराः।
ज्यैष्ठशुक्लद्वितीयायां तेभ्यः कीटा भवन्ति च॥ ३॥

चिकित्सा।

तेषाञ्च प्रतिघाताय कुर्य्याद्विद्वान् प्रतिक्रियाम्।
महानिम्बपलाशानां वीजैः सक्रमिशत्रुभिः॥ ४॥

---

२। निरुपचारत उपचाराभावात्।

३। कीटकाण्डाः कीटगुच्छाः तद्राशय इत्यर्थः।

४। महानिम्बादीनां चूर्णं मिलितं पलपरिमितं घृतेन पिण्डं दद्यात्॥

---

१। वेधकीटः। खः॥ २। पिठरे। गः॥

तस्मिन्नेव दिने पिण्डं दद्याद्बुद्धिमतां वरः।
अनुपानं तदा दद्याद् द्रवं रोहिणिकोद्भवम्॥ ५॥
एवं कीटा न जायन्ते हयानामुदरे ध्रुवम्॥ ६ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे कीटारिष्टे पञ्चविंशोऽध्यायः॥ २५॥

---

## अथ षड्विंशोऽध्यायः।

### मृगरोगः।

नासासन्धान[1]संयुक्ता जायन्ते भूर्य्युपद्रवाः।
नित्यं घासाभिलाषी च हीयते वलमांसयोः॥ १॥
मृगरोगः स विख्यातो व्याधिः कष्टचिकित्सितः।
षण्मासाभ्यन्तरे वाथ परलोकं[2] प्रयाति च॥ २॥

---

५। रोहिणिकोद्भवमिति कटुरोहिणीसम्भूतम्। कटुकायाः पादोनं पलं जलाढ़के पक्का पादावशिष्टं देयम्॥

---

१। सिंघाणा। गः।
२। वत्सराभ्यन्तरेऽपि वा। गः।

बहुदुःखो[1] भवेदश्वो मृगरोगप्रपीड़ितः।
यावदुच्छ्वसते जन्तुस्तावत् कुर्य्यात् प्रतिक्रियाम् ॥ ३ ॥

चिकित्सा।

कदाचिद्दैवयोगेन विनष्टश्चापि जीवति।
पञ्चमूलस्य निःक्वाथे[2] जाङ्गलैः साधितो रसः ॥ ४ ॥
रसः पाने प्रदातव्यः शालिभक्तञ्च भोजनम्।
कदाचिद्दैवयोगेन भर्त्तुः पुण्यफलेन वा ॥
प्रशमं याति वाहानां मृगरोगः सुदारुणः ॥ ५ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे मृगरोगे षड्विंशोऽध्यायः ॥ २६ ॥

---

४। पञ्चमूलस्य पलं। जलस्याढ़कः पादावशिष्टः। शालिभक्तञ्च यथोक्तमात्रं देयम् ॥

---

१। परलोकं प्रयात्यश्वः। गः।
२। पञ्चमूलस्य निःक्वाथ्य। गः।

## अथ सप्तविंशोऽध्यायः ।

वातादि[illegible] ।

प्रकोपनिदानलक्षणे ।

तिक्तरूक्षकषायाणां द्रव्याणामुपयोगतः ।
निराहाराच्[1] श्रमाद्भा[illegible]त् प्रकोपो मातरिश्वनः ॥ १ ॥
सन्तापाच्च श्रमाच्चापि कट्वम्ललवणाशनात् ।
प्रकोपं यान्ति पित्ताख्यो दोषो देहव्यवस्थितः ॥ २ ॥
गुर्वाभमधुरैः स्निग्धैरभिष्यन्दकरै रसैः ।
सेवितैः श्लेष्मणां वृद्धिर्भवेच्चापि श्रमं विना ॥ ३ ॥
प्रावृट्काले विकाले च हेमन्ते च विशेषतः ।
वायोर्वृद्धिः समुद्दिष्टा जीर्णे चैवाशने तथा ॥ ४ ॥
शरत्काले निदाघे च जीर्य्यमाणे च भक्षिते[2] ।
मध्याह्ने चार्द्धरात्रे च पित्तोद्रेकं समादिशेत् ॥ ५ ॥

---

१ । वातप्रकोपशमनयोगमाह नकुलः,—"तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् । पयसा पिण्डमेतद्धि वातकोपः प्रशाम्यति"—इति ।

३ । अभिष्यन्दकरैरिति स्रावजनकैः श्लेष्मवर्द्धकैरित्यर्थः ।

५ । भक्षिते भुक्तद्रव्ये ।

---

१ । निरन्तरग्रासात् । गः । २ । भक्षते पक्तिमेव च । गः ।

शिशिरे च वसन्ते च भुक्तवत्सु च तत्क्षणात्।
वाजिनः श्लेष्मणः कोपः प्रभाते च प्रकीर्त्तितः॥ ६॥
विपर्य्ययं निदाघस्य वातादीनां विचक्षणैः।
ज्ञानिर्वाच्या सदा वैद्यैः शास्त्रमार्गानुसारिभिः॥ ७॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे वातादिप्रकोपे सप्तविंशोऽध्यायः॥ २७॥

## अथाष्टाविंशोऽध्यायः।

---

व्याधिनिर्द्देशः।

मुखरोगोऽक्षिरोगश्च शिरोरोगश्च[1] लिङ्गितः।
कर्णरोगश्च कासश्च श्वासो हिक्का व्रणस्तथा॥ १॥
सिंघाणः कोष्ठरोगश्च पद्रोगो ज्वरस्तथा।
अजीर्णश्चातिसारश्च शूलोदावर्त्त एव च॥ २॥
प्रस्कन्नः कृमिकोष्ठश्च मूत्ररुङ्मलरुक् तथा।
कुष्ठरोगश्च शोथश्च अण्डौनीतोदरार्शसः॥ ३॥

---

१। लिङ्गितो नामाश्वानां गतिवैकल्यजनको रोगविशेषः। लगड़ खञ्ज। (खोड़ान)।

२। सिंघानं (सिकनि)। तत्स्रावकनामा रोगविशेषः।

३। प्रस्कन्नोऽपि कुब्जताजनकरोगविशेषः। अस्य लक्षणादि प्रस्कन्नचिकित्सिते द्रष्टव्यम्।

---

१। शिरोजश्चायमङ्गिनः। खः।

उत्कर्णकोऽर्द्दितश्चैव मन्यास्तम्भो हनुग्रहः।
आक्षेपो मृगजृम्भश्च मन्याचालीमृगस्तथा॥४॥
कपोतको निषादश्च तथाचैकाङ्गसंज्ञकः।
रोगः पृष्ठग्रहो नाम भ्रामिताक्षस्तथैव च॥५॥
उन्मादो ग्रहदोषश्च शोषो वातवलासकः।
व्यापदो लवणैर्धान्यैः सुरया पयसा तथा॥६॥
विषापस्मारदोषौ च षट्पादी लक्षणस्तथा।
इत्ययं व्याधिनिर्द्देशः कृतः शास्त्रार्थतत्त्वतः॥७॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे व्याधि-निर्द्देशोऽष्टाविंशोऽध्यायः॥२८॥

---

## अथैकोनत्रिंशोऽध्यायः।

मुखरोगः।

उपकुशस्तथा लेशो जिह्वास्तम्भस्तथैव च।
अलावूकः प्रस्तनश्च दन्तरोगो गलग्रहः॥१॥

---

४-५। अर्द्दितादिभ्रामिताक्षान्ता वातव्याधिरोगविशेषाः। एषां लक्षणादिकं वातव्याध्यधिकारे द्रष्टव्यम्।

मुखपाकोऽधिदन्तश्च रोहिणी चोपजिह्विका ।
गण्डरोगौष्ठरोगौ च गलशालूक एव च ॥ २ ॥
इत्येते वाजिनां रोगा मुखजाः परिकीर्त्तिताः ।
एषां निदानं वक्ष्यामि चिकित्साञ्च यथाक्रमम् ॥ ३ ॥

मुखरोगनिदानलक्षणे ।

समेभ्यो दन्तमांसेभ्यो यस्य निर्य्याति शोणितम् ।
चलदन्तस्य[1] वाहस्य विद्यादुपकुशं भिषक् ॥ ४ ।
हनुदेशे यदा दन्तो भवत्यभ्यन्तराश्रयः ।
आलेश[2] इति तं विद्यात् श्लेष्मरक्तसमुद्भवम् ॥ ५ ॥
तेनाश्वो दुर्म्मनात्यर्थं मन्दं पिवति खादति ।
जर्जरं कासते चैव वलाच्च परिहीयते ॥ ६ ॥
शूना[3] यस्य भवेज्जिह्वा वाजिनः स्फोटकैर्युता ।
प्रक्लिन्ना वापि यस्यैव जिह्वा स्तम्भीति तं विदुः ॥ ७ ॥
मुखं दुर्गन्धिकं चैव तालुकः शूनको भवेत् ।
ग्रासविद्वेषिणोऽश्वस्य रोगं विद्यादलावुकम्[4] ॥ ८ ॥

---

७। शूना स्फीता ।

---

१ । जातदन्तस्य । खः ।
२ । आलोराद्रवितं । गः
३ । श्वेताः । गः ।
४ । स्याद्दन्ततालुकम् ।

श्यावौष्ठतालुवक्त्रे[1] वा मन्दाहारे तथैव च।
संशीर्णे दन्तमांसे च प्रशूनं व्याधिमादिशेत्॥ ९॥
हन्वोश्चैव तथा गण्डे श्वयथुर्यस्य जायते।
जिह्वामूले गले चापि तस्य विन्द्याद्गलग्रहम्॥ १०॥
सृक्वौष्ठतालुदेशेषु व्रणं यस्योपजायते।
विदीर्णन्तु मुखं दुष्टं मुखपाकं तमादिशेत्॥ ११॥
दन्तानामुपरिष्टात्तु यदा दन्तस्य सम्भवः।
अधिदन्तः स विख्यातो मन्दाहारस्य वाजिनः॥ १२॥
यस्य शूनाक्षिकूटस्य गले शोथः प्रलम्बते।
यवसद्वेषिणोऽश्वस्य रोहिणीरोगमादिशेत्॥ १३॥
अधस्तादथ जिह्वायाः श्वयथुर्यस्य जायते।
तं विन्द्यादुपजिह्वाख्यं मुखरोगन्तु वाजिनाम्॥ १४॥
अधिजिह्वाभिधानन्तु उपरिष्टाद् विनिर्दिशेत्।
गण्डाभ्यन्तरगो[2] गण्डो गण्डरोग इति स्मृतः॥ १५॥
सव्रणः पिड़काकीर्ण ओष्ठ[3] उच्छून एव च।

---

९। श्यावौष्ठतालुवक्त्रमित्यत्र श्यावः कृष्णवर्णः।

१३। शूनाक्षिकूटस्य स्फीताक्षिकोटरस्य।

---

१। श्यावौष्ठतालुवक्त्रं वा मन्दाहारं तथैव च।

२। गण्डाभ्यन्तरयोः। गः।

३। ओष्ठयोः शूल एव च। गः।

स्फुटितः कठिनश्चैव ओष्ठरोगोऽभिधीयते ॥ १६ ॥
गलाभ्यन्तरशोथेन[1] ग्रासमुज्झिरते हयः ।
गलशालूकिनं विन्द्यात् काशार्त्तञ्च तुरङ्गमम् ॥१७॥
सर्व्वेषां मुखरोगानां सम्भवः श्लेष्मशोणितम्[2] ।
चिकित्सां तेषु वक्ष्यामि येन शाम्यन्ति वाजिनाम् ॥१८॥

मुखरोगचिकित्सा ।

विध्यात्तालुशिरां पूर्व्वं तुरङ्गस्य विचक्षणः ।
अधिमांसं ततो विध्याद्व्यात्तास्यस्य शस्त्रकैः ॥ १९ ॥
जिह्वास्तम्भे तु जिह्वायाः प्रक्षालं कारयेद्भिषक् ।
प्रतिसार्य्याश्वजिह्वान्तु लवणैः षट्कचूर्णकैः ॥ २० ॥
वेधकालात् समारभ्य रात्रिमेकां न दापयेत् ।
वासयन्तेन वाहस्य निवातस्थस्य बुद्धिमान् ॥ २१ ॥
प्रतिपानं प्रभाते तु पिप्पलीशृङ्गवेरकैः ।
पुनर्णवावचाशिग्रुकरञ्जान्निम्बपत्रकान् ॥ २२ ॥
चायमाणाविडङ्गैश्च किञ्चिल्लवणसंयुतैः ।

---

१९ । शस्त्रकैरिति उत्पलपत्रेण व्रीहिपत्रेण वा शस्त्रेणेत्यर्थः ।
२० । प्रक्षालमिति मार्जनम् । षड़ित्यत्र कट्विति पाठो युक्तः ।

---

१ । गलाभ्यन्तरतो यो वै । गः ।
२ । श्लेष्मशोणितात् । खः ।

सुरया दापयेत् सम्यग् घासं शुष्कं तथैव च ॥ २३ ॥
करञ्जनिम्बपत्राणां क्वथितञ्च सुसंस्कृतम् ।
भोजयेत्तिक्तमुद्गांश्च तैलत्रिकटुकान्वितान् ॥ २४ ॥
मृदुभिर्दन्तकाष्ठैश्च कटुचूर्णावचूर्णितैः ।
गवां मूत्रेण तेषान्तु मुखप्रक्षालनं हितम् ॥ २५ ॥
शृङ्गवेरेण पिप्पल्या वचया सर्षपार्द्रकैः ।
हितं प्रलेपं कुर्व्वीत शोथेषु च विचक्षणः ॥ २६ ॥
त्रिफलाक्काथयुक्तस्य हितं पानञ्च गुग्गुलोः ।
यवांश्च खादने दद्यान्माषादींश्च विवर्जयेत् ॥ २७ ॥
अधिदन्तन्तु सन्दंशैः कर्षयित्वा विचक्षणः ।
चिकित्सां पूर्व्वमुद्दिष्टां कुर्व्वीत तदनन्तरम् ॥ २८ ॥
कृमिभिर्भक्ष्यमाणानां दन्तानामुपकर्षणम् ।
अधिदन्तेच कुर्व्वीत आलेपञ्च विचक्षणः ॥ २९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे मुखरोगे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

२३। प्रतिपानं न दापयेदिति पूर्व्वेणान्वयः ।

## अथ त्रिंशोऽध्यायः ।

---

अक्षिरोगः ।

अथातः संप्रवक्ष्यामि नेत्ररोगविनिश्चयम् ।
पूर्व्वशास्त्रानुसारेण मुनिभिः कीर्त्तितं यथा ॥ १ ॥
तोयस्रावः प्रसन्नान्धो नक्तान्धस्तिमिरस्तथा ।
मुञ्जको मुञ्जजालश्च पटलं वुद्बुदस्तथा ॥ २ ॥
पूयस्रावश्च काचाक्षो रक्तस्रावस्तथैव च ।
चिपिटो वर्त्मरोगश्च अभिष्यन्दस्तथैव च ॥ ३ ॥
वातपित्तकफैर्दुष्टैर्नेत्ररोगा भवन्त्यमो ।
लिङ्गं चिकित्सितं तेषां प्रवक्ष्याम्यनुपूर्व्वशः ॥ ४ ॥

वातिकाक्षिरोगनिदानलक्षणानि ।

अजस्रं पश्यतां व्यस्रु स्वच्छं स्रवति चक्षुषः ।
तोयस्रावीति तं विन्द्याद्विकारं मारुतात्मकम् ॥ ५ ॥
शुद्धन्तु चक्षुषा रूपं नैव पश्यति यो ह्ययः ।
प्रसन्नान्धः स विज्ञेयो नतु शक्यश्चिकित्सितुम् ॥ ६ ॥
दिवा पश्यति यः स्वच्छं रात्रौ चैव न पश्यति ।
नक्तान्ध इति तं विद्याद्विकारं पवनोद्भवम् ॥ ७ ॥
कदाचिद्वीक्षते रूपं कदाचिन्न न वीक्षते ।
तिमिरं तं विजानीयाल्लिङ्गेनानेन बुद्धिमान् ॥ ८ ॥

तच्चिकित्सा।

घृतं पक्वं प्रदातव्यं देयञ्च त्रिफलान्वितम्।
सन्तर्पणञ्च कुर्वीत नेत्रयोस्तदनन्तरम्॥ ९॥
निपात्य भूमौ तुरगं दृढं बद्धा सुयन्त्रितम्।
माषचूर्णस्य कल्केन परिवार्य्याक्षि[1] सर्व्वतः॥ १०॥
घृतेन पयसा वापि पूरयेत्तं विचक्षणः।
विधिरेष समुद्दिष्टो नेत्रसन्तर्पणः सदा[2]॥ ११॥
अपरश्च सुखोपायो विधिः सन्तर्पणः[3] स्मृतः।
तूलं[4] स्नेहेन सम्भाव्य[5] नयनाभ्यन्तरे क्षिपेत्॥ १२॥
तस्योपरि श्लथं पट्टं बध्नीयाद्वा[6] दृशोपरि।
बद्धपट्टं पुनर्नेत्रं मुहुः स्नेहेन सेचयेत्॥ १३॥
उत्पलं चन्दनञ्चैव तथासौवीरकाञ्जनम्।
वर्त्तिं कृत्वा ततः प्राज्ञस्तिमिरं नित्यमञ्जयेत्॥ १४॥

९। नेत्रसन्तर्पणद्वयमाह। घृतमिति।

१२। द्वितीयं सन्तर्पणमाह। अपर इति।

१४। उत्पलं नीलोत्पलं। (नीलशुन्दि)। चन्दनं रक्तचन्दनम्। एषां समभागं पयसा पिष्ट्वा वर्त्तिः कार्य्या। सौवीरकाञ्जनं नीलवर्णाञ्जनविशेषः। तदुक्तं "सौवीरकं पार्व्वतेयं मेचकं नीलमञ्जनम्" इति मुक्तावली॥

१। परिवार्य्याक्षि। खः।
२। नेत्रसन्तर्पणो तदा। खः।
३। सन्तर्पणो। खः।
४। चूर्णं। गः।
५। संप्राप्य। गः।
६। बध्नीयाद्वाससो भिषक्। खः।

तोयस्रावस्य वाह्स्य प्रसन्नान्ध्यस्य वा पुनः।
एतदेवाञ्जनं श्रेष्ठं तिमिरे यत्प्रकीर्त्तितम्॥ १५॥
रसाञ्जनं गुडश्चैव मधुकं क्षौद्रमेव च।
रजन्या सहिता वर्त्तिर्नक्तान्ध्यस्याञ्जनं परम्॥ १६॥
सप्त कृत्वाष्ट कृत्वा वा शोषयित्वा पुनः पुनः।
भावयेत्कर्पटं क्षौमं[1] क्षीरेणाज्येन बुद्धिमान्॥ १७॥
सुरामण्डेन तद्भूयो भावयित्वा विचक्षणः।
वर्त्तिं कृत्वा घृताभ्यक्तां घृतदीपे प्रदापयेत्॥ १८॥
प्रच्छन्ने ताम्रपात्रेण तं दीपं छादयेन्मनाक्।
तस्मात्कज्जलमादाय ताम्रपात्राद्विचक्षणः॥ १९॥
तोयस्रावं प्रसन्नान्ध्यं नक्तान्ध्यं तिमिरन्तथा।
अञ्जयेन्मतिमान् वैद्यः शीषकस्य शलाकया॥ २०॥

---

१६। मधुकं (यष्टिमधु)। रजन्या हरिद्रया। रसाञ्जनादिकं समभागं ग्राह्यम्।

१७। कर्पटो लक्तकं (लाताकानी)। एतं कर्पटं दुग्धघृतेन सप्तवारमष्टवारं वा भावयित्वा शोषयेत्। अथ सुरामण्डेन धंमर्द्य वर्त्तिः कार्य्या।

१८। सुरामण्डः सुराभागः सुराग्रभागो वा। "सुरामण्डः प्रसन्नः स्यात्" इति परिभाषा।

---

१। क्षौद्रम्। गः।

पैत्तिकाक्षिरोगलक्षणानि ।

अधोमुखस्तु यो वाजी मिलिताक्षस्तथैव च ।
शूनाभ्याञ्चैव नेत्राभ्यामुष्णमश्रु विमुञ्चति ॥ २१ ॥
लोचनं काचसङ्काशं यस्याकस्मात् प्रजायते ।
काचं पित्तात्मकं रोगं तस्य विद्वान् समादिशेत् ॥ २२ ॥
लोहितं पित्तकञ्चैव हरितं नीलकन्तथा ।
पित्तनिष्यन्दिनोऽश्वस्य नेत्रमाशु प्रजायते ॥ २३ ॥

तच्चिकित्सितम् ।

प्रपौण्डरीकं मधुकं चन्दनं लोध्रमेव च ।
एकीकृत्य जले न्यस्तं नेत्रस्योत्तानमुत्तमम् ॥ २४ ॥
यष्टीमधुकयुक्तञ्च परिषेकाय गोपयः ।
चन्दनोशीरतोयैश्च पानं दद्यात् सयष्टिकैः ॥ २५ ॥
अश्रुपाते शिरावेधो हितश्चापि हि कीर्त्तितः ।
गैरिकं मधुकं शङ्खं लोध्रमुत्पलमेव च ॥ २६ ॥

---

२४ । प्रपौण्डरीकं (पुण्डरिया) । चन्दनं रक्तचन्दनं । एषां पलिको भागो जलस्य चाढ़को ग्राह्यः। उत्तानमिति उद्गतः तानो विस्तारो यस्मात् सः । नेत्रविस्तारकारीत्यर्थः। गोपयो गोमूत्रं ।

२५ । गोमूत्राढ़के यष्टिमधुकपलं दत्वा तेन वारिणा नेत्रसेकः कर्त्तव्य इत्यर्थः। परिषेकाय सेचनाय । चन्दनादीनां पलं । वारिण आढकः पादशेषः कार्य्यः ।

आमलक्या रसेनैतत् समभागं तथैव च।
शिलामालिप्य संशोष्य तत्कल्कं चूर्णयेद्बुधः ॥ २७॥
स्रोतोऽञ्जनं समं दद्यात्तत्पित्ताय न मारयेत्।
जम्बूककुभशाखानामामलक्या वटस्य च ॥ २८॥
पुष्पाण्युद्धृत्य सर्व्वेषां यथाप्राप्तानि वा पुनः।
फलानि वा समाहृत्य कल्कं कृत्वा विचक्षणः ॥ २९॥
भोजयेद्घृतमध्वाक्तं कटुकाम्लञ्च वर्ज्जयेत् ॥ ३०॥

प्रचारलक्षणचिकित्सितम्।

प्रच्छादयति यद्दृष्टिं मांसं पर्य्यन्तवर्द्धितम्[1]।
प्रचारकाख्यं तं विन्द्यान्नेत्ररोगं कफात्मकम् ॥ ३१॥
क्षितौ निपात्य तुरगं ततो नेत्रं प्रसारयेत्।
कृतकर्म्मा भिषग्विद्वान्[2] वडिशेनाक्षिवर्त्मनि ॥ ३२॥

---

२६—२८। गैरिकं (गिरिमाटि)। शङ्खं (शंखचूर्ण)। स्रोतोऽञ्जनं नदीजमञ्जनं। "स्रोतोऽञ्जनं नदीजञ्च वाह्लीकञ्च जयामलम्" ॥ इति परिभाषा ॥

२८—३०। जम्बादीनां पुष्पाणां फलानां वा चूर्णं मिलितं पलं। जम्बूः (जाम्)। ककुभोऽर्ज्जुनः।

---

१। पर्य्यानुवर्द्धितम्। खः।
२। विद्यात्परितेनाक्षिवर्त्मना। गः।

ततस्तीक्ष्णेन शस्त्रेण छिन्द्यात्प्रावरकं बुधः।
तारकस्य यथा पीड़ा जायेत न मनागपि॥ ३३॥
शुद्धं तत् पूरयेन्नेत्रं मधुना सैन्धवेन वा।
प्रक्षाल्य चोत्थाप्य ततः शंखजां वेधयेच्छिराम्॥ ३४॥
कुष्ठेन वचया चव्या तथा त्रिकटुकेन च।
प्रतिपानं प्रदातव्यं सुरया लवणैः सह॥ ३५॥
निर्व्वातं विहितं स्थानं ग्रासे दूर्व्वा च पूजिता।
गुरु भक्ष्यं न दातव्यं मधुरञ्च विशेषतः॥ ३६॥

काचलक्षणचिकित्सा।

श्लेष्माभिष्यन्दिनोऽश्वस्य शूनं सास्रु विलोचनम्।
काचः संजायतेऽश्वस्य पाण्डुता चापि चक्षुषः[1]॥ ३७॥
पिप्पलीञ्चैव लोध्रञ्च तथा कटुकरोहिणीम्।
त्रिफलां पिचुमर्दञ्च गवां मूत्रेण साधयेत्॥ ३८॥
तेन पादावशेषेण क्षौद्रयुक्तेन बुद्धिमान्।
गालितेन सुखोष्णेन सेचयेद्वाजिलोचनम्॥ ३९॥

---

३५। अत्र कुष्ठादीनां चूर्णं मिलितं पलं। सुरायाः प्रस्थः। सैन्धवस्य च पलम्। एकत्र प्रतिपानं देयम्॥

३६। गुरुभक्ष्यमिति गुरुपाकं भोज्यद्रव्यम्॥

३८—३९। पिप्पल्यादीनां पलं गोजलाढ़के पक्त्वा पादशेषः कार्य्यः। पिचुमर्द्दो निम्बः।

---

१। वातचक्षुषा। गः।

कटुतैलं कषायेण पाचितं चाम्बुनैव तु ।
विडङ्गकल्कसंयुक्तं नस्यार्थे च प्रकीर्त्तितम् ॥ ४० ॥
गैरिकं शृङ्गवेरञ्च अञ्जनं वृहतीफलम् ।
मरिचं पिप्पलीचैव विडङ्गं सैन्धवन्तथा ॥ ४१ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
संस्थाप्य भाजने ताम्रे गवां मूत्रेण भावयेत् ॥ ४२ ॥
बहुशो भावयित्वा तु पुनः श्लक्ष्णं प्रपेषयेत् ।
चूर्णाञ्जनमिदं श्रेष्ठं नेत्ररोगे कफात्मके ॥ ४३ ॥

रक्ताक्षिरोगलक्षणानि ।

रक्ताभिष्यन्दिनोऽश्वस्य नेत्रं भवति लोहितम् ।
सर्व्वं त्रिभागमर्द्धं वा श्रावरुग्दाहपीड़ितम् ॥ ४४ ॥
रक्तस्रावोऽथवा यस्य वाजिनो[१] लोचनाद्भवेत् ।
रक्तस्रावाभिधानन्तु नेत्ररोगं समादिशेत् ॥ ४५ ॥

---

४० । कषायेणेति पूर्व्वोक्तपिप्पल्यादिकषायेण । अत्र विड़ङ्ग-कल्कस्य लेपपादिको देयः ।

४१ । अञ्जनं सौवीराञ्जनं रसाञ्जनं वा ।

४४ । श्रवमुद्गाहपीड़ितमिति न साधुः ॥

---

१ । अथ वाहस्य वाजिनः । गः ।

अभिघातोद्भवोऽस्यस्य[1] नेत्ररोगः प्रकीर्त्तितः।
शिरःशस्त्राभिघातश्च[2] रक्तसन्धिश्च षण्डकः॥ ४६॥

तच्चिकित्सा।

चिकित्साञ्चैव वक्ष्यामि यथादृष्टां[3] समासतः।
येन शाम्यन्ति वाह्यानां रक्तजाश्चक्षुषो रुजः[4]॥ ४७॥
ऐन्द्रीं तालीशपत्रञ्च मञ्जिष्ठां मधुकं निशाम्।
कालानुसारिवां मूर्व्वां वारिणा सह साधयेत्॥ ४८॥
तेन शीतेन सिद्धेन[5] नेत्रमाश्च्योतयेद् भिषक्।
धर्त्यञ्जनमिदं कुर्य्याद् यथादृष्टमतन्द्रितः[6]॥ ४९॥
विभीतकफलं लोध्रं काश्मर्य्याश्च फलं तथा।
मधुकं शर्कराचैव गैरिकं[7] सरसाञ्जनम्॥ ५०॥

---

४८। ऐन्द्री (राखाल्शशामूल)। कालानुसारिवा (शिउलि-झोप) वा (तगरपादुका)।

४९। आश्च्योतयेत् आसेचयेत्।

५०। काश्मरी (गाम्भारी)।

---

१। अभिघातो भवेद् यस्य नेत्ररोगः प्रवर्त्तते। गः।
२। शिरोरोगाभिघातश्च रक्तं श्रवति चक्षुषः॥ खः।
३। यथोद्दिष्टं। खः।
४। गदाः। गः।
५। तेन घृतेन शुद्धेन। खः।
६। वर्त्यञ्जनं ततः कुर्य्यादयदुद्दिष्टमिदंबुधैः। खः।
७। तथाचैव रसाञ्जनम्। खः।

एतानि समभागानि क्षौद्रेण सह योजयेत् ।
हन्याद्दाहञ्च रक्तञ्च वर्त्तिरेषा जलान्विता ॥ ५१ ॥
मञ्जिष्ठां हरितालञ्च लोध्रं वालकमेव च ।
रेणुकञ्च तथा कुष्ठमूशीरञ्च मनःशिलाम् ॥ ५२ ॥
पेषयित्वोदकेनैव[1] छायायां परिशोषयेत् ।
जलघृष्टेयमश्वस्य वर्त्तिर्नेत्ररुजापहा ॥ ५३ ॥

पटललक्षणम् ।

अधस्तादुपरिष्टाद्वा पटलं यस्य जायते ।
रुणद्धि नयने सद्यः तथा नैव[2] क्रमेण च ॥ ५४ ॥
हरितं नीलकं पित्ताद् वाताद्वा[3] लोहितं भवेत् ।
ईषत्पीतं घनं शुक्लं[4] पटलं श्लेष्मसम्भवम् ॥ ५५ ॥
सङ्कीर्णवर्णं विज्ञेयं सन्निपातसमुद्भवम् ।
असाध्यं तं विजानीयात् कृच्छ्रसाध्यमथापि वा ॥ ५६ ॥

---

५४ । पटलं नेत्ररोगविशेषः । स च चतुर्विधो दृष्टेरावरकच्छदिरूपः । तेषु प्रथमं वाह्यं पटलं रसरक्ताश्रयं । द्वितीयं मांसाश्रयं । तृतीयं मेदःसंश्रितं चतुर्थञ्च कालकास्थिसंश्रितम् । तदुक्तं सुश्रुते । "तेजोजलाश्रितं वाह्यं तेष्वन्यत् पिशिताश्रितं । मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम्" इति ॥

५६ । सङ्कीर्णवर्णं हरितादिमिश्रवर्णमित्यर्थः ।

---

१ । पेषयेत्सूदके चैव । गः ।
२ । चैव । खः ।
३ । वाताल्लोहितकं भवेत् । गः ।
४ । शुभ्रं । खः ।

कृष्णाच्च रक्तजं विद्यात् पटलं शास्त्रकोविदः।
अत ऊर्द्धं प्रवक्ष्यामि यथायोगं चिकित्सितम्॥५७॥

तच्चिकित्सा।

पटलेषु च सर्व्वेषु शिरावेधः प्रशस्यते।
अश्रुपाते प्रपाणे च ललाटे चैव शंखयोः॥५८॥
श्लेष्मजस्य हितं दृष्टमञ्जनं मधुसैन्धवम्।
पटलस्य गवां मूत्रं क्षौद्रयुक्तञ्च सैन्धवम्॥५९॥
तुत्थकं[1] सैन्धवं चैव हरितालं मनःशिलाम्।
गवां मूत्रेण संपिष्य मरिचञ्च विचक्षणः॥६०॥
अञ्जयेत् कफजां प्राज्ञो मधुना पटलं भिषक्।
पटले मांसकीले च चूर्णमेतत् प्रदापयेत्॥६१॥
एष एव प्रदातव्यो वातिके घृतसंयुतः।
पैत्तिके रक्तजे चैव[2] अत ऊर्द्धं क्रियां शृणु॥६२॥
प्रपौण्डरीकं मधुकं शंखं मुक्ता प्रवालकम्।
एतानि समभागानि जले पिष्ट्वा विचक्षणः॥६३॥

६२। एष योगः इत्यर्थः।

६३। शंखादीनां भस्म ग्राह्यम्।

१। गोदन्तं। खः।
२। चक्षुषेचैव तदूर्द्धं। गः।

वर्त्तिं कृत्वा ततश्चैव शोधयेत्तां विनातपम्[1] ।
ततस्तां सलिलैः पिष्ट्वा अञ्जयेत् पटलं भिषक् ॥६४॥
त्रिफलां सघृताञ्चैव रक्तपित्तसमुद्भवे ।
पटले पाययेदश्वं[2] त्रिकाले चैव बुद्धिमान् ॥ ६५ ॥
वर्त्मजं मांसकीलञ्च पिडकञ्चैव शस्त्रकैः[3] ।
उत्कृत्य[4] लोध्रचूर्णेन अञ्जयेत् सैन्धवेन च ॥ ६६ ॥

मुञ्जजालचिकित्सा ।

एकेन मुञ्जमाख्यातं[5] बहुभिर्मुञ्जजालकम्[6] ।
कृमिभिः पटलान्तःस्थैर्विन्द्या[7]न्नेत्ररुजाद्वयम् ॥ ६७ ॥
प्रथमं तैलवर्णाभं द्वितीयं स्फटिकप्रभम् ।
रक्ताभञ्च तृतीयञ्च चतुर्थं तैलमुच्यते ॥ ६८ ॥
प्रथमं पटलं साध्यं द्वितीयञ्च तथा भवेत् ।
तृतीयं कृच्छ्रसाध्यं स्याच्चतुर्थं नैव सिध्यति ॥ ६९ ॥

---

६५। अत्र त्रिफलायाः पलं घृतस्य च तथा एकत्र पाययेदित्यर्थः ।

---

१। दिनात्यये। खः।
२। दापयेत्। ग०।
३। शास्त्रतः। खः।
४। प्रोच्छयेत्। खः।
५। मुञ्जिकाख्या तु। खः।
६। मुञ्जकाजकम्। खः।
७। विद्यात्। गः।

तच्चिकित्सा ।

पातयित्वा ह्ययं[1] भूमौ कृत्वा चैव सुयन्त्रितम् ।
वर्त्मनी वेधयेत् सूच्या सूत्रे नेत्रं प्रसारयेत् ॥ ७० ॥
कर्पटेनाश्रुवेगन्तु शुष्केनैवापकर्षयेत् ।
स्थापयेद्वाजिनं तन्तु प्रत्यादित्यं विचक्षणः ॥ ७१ ॥
शस्त्रं सूत्रेण संवेष्ठ्य तीक्ष्णमात्रन्तु[2] कारयेत् ।
कृष्णशुक्लाम्बर[3]धरो वेधयेद्वाजिलोचने ॥ ७२ ॥
अङ्गुष्ठेन ततो नेत्रं पीडयित्वा समाहितः ।
मुञ्जकं कर्षयित्वा तु जले क्षिप्रं प्रकाशयेत् ॥ ७३ ॥
मुञ्जमुद्धृत्य नेत्रन्तु गोमूत्रेणाऽवसेचयेत् ।
क्षौद्राज्यं पूरितं कृत्वा क्षयवस्त्रेण वेष्टयेत्[4] ॥ ७४ ॥
वहिःप्रलेपं कुर्व्वीत पञ्चवल्कलकेन तु ।
कल्केन घृतयुक्तेन त्र्यहात्पट्टं विमोक्षयेत्[5] ॥ ७५ ॥

---

७१ । कर्पटेन वस्त्रकेन। प्रत्यादित्यमादित्याभिमुखम् ।

७२ । शस्त्रं उत्पलपत्रं व्रीहिपत्रं वा सूत्रेण संवेष्ठ्य तीक्ष्णमात्रं धारामात्रावशिष्टं कारयेदित्यर्थः ॥

७३ । मुञ्जनिष्काशनानन्तरं औषधमाह चौद्रेत्यादि ।

---

१ । ततः । गः ।
२ । नित्यमात्रम् । गः ।
३ । कृष्णशुक्लान्तरे चैव । गः ।
४ । विशोधयेत् । खः ।
५ । त्र्यहादूर्द्धं प्रमोचयेत् । खः ।

मुञ्जकोक्तविधिः सर्व्वो मुञ्जजाले विशस्यते।
रूढ़व्रणे ततः कुर्य्यात्पूर्व्वोक्तां पटलक्रियाम् ॥ ७६ ॥
प्रपौण्डरीकं मधुकं तथा लोहितचन्दनम्।
एभिः कल्कीकृतैस्तैलं पाचितं त्रिफलाम्भसा ॥ ७७ ॥
नस्यं देयमशुद्धे तु तथा चैवोपतर्पणम्।
पिप्पली सैन्धवं शुण्ठी गैरिकं वरुणत्वचः ॥ ७८ ॥
गवोष्ट्रदशना श्चैव फेनश्चौदधिकस्तथा।
क्षौद्रपिष्टैः समैरेभिरञ्जनं मुञ्जनाशनम् ॥ ७९ ॥

वर्त्मकुन्दचिकित्सा।

विभीतकास्थि सारेण[१] मधुयुक्तेन चाञ्जनम्।
चक्षुषो यस्य वाहस्य पूयस्रावो विजायते[२] ॥ ८० ॥
वर्त्मकुन्देति[३] यस्य स्यात्तस्य कुर्य्यात् क्रियामिमाम्।

---

७७। तैलस्य प्रस्थः। प्रपौण्डरीकादीनां कल्कः पलचतुष्टयमितः त्रिफलाक्वाथेन पाच्यः॥ प्रपौण्डरीकं पुण्डरियेति लोके प्रसिद्धम्।

७८—७९। फेनेत्यादि। औदधिकः फेन इति उदधिसम्बन्धीयः फेनः (समुद्रफेना)।

८१। वर्त्मकुन्दे आदौ शंखादिशिरावेधः, ततो नेत्रधावनं। अथ प्रलेपस्य प्रयोज्यः।

---

१। विभीतकास्थिरेणाभ्यां। खः।
२। ततोभवेत्। गः।
३। वर्त्मकोऽपि। खः।

चैवाश्रुपाते च ललाटे वेधयेच्छिराम् ॥ ८१ ॥
लायाः कषायेण लोध्रयुक्तेन सेवितम् ।
येत् सततं वैद्यः प्रलेपञ्चैव कारयेत् ॥ ८२ ॥
वल्कलकल्केन क्षौद्रयुक्तेन बुद्धिमान् ॥ ८३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे नेत्ररोगे
शोऽध्यायः ।

---

## अथ एकत्रिंशोऽध्यायः ।

वातिकशिरोरोगचिकित्सा ।

वातात्पित्तात् कफाच्चैव सन्निपाताच्च लोहितात् ।
अभिघाताच्च निर्दिष्टः शिरोरोगस्य सम्भवः ॥ १ ॥
अधोमुखस्य दीनस्य[1] मन्दाहारस्य वाजिनः ।
सततं प्रोथमानस्य हृष्टरोमस्य[2] बुद्धिमान् ॥ २ ॥

---

८२ । त्रिफलायाः पलदशकं । वारि चतुराढ़कमितं पादशिष्टं कार्य्यम् । लोध्रचूर्णस्य पलम् ॥

१ । लोहितात् शोणितात् । वातादिषट्कारणसम्भवत्वात् षड्विधः शिरोरोगः । तल्लक्षणादिकं क्रमेणोच्यते ।

---

१ । वाहस्य । गः ।
२ । हृष्टस्नामस्यं । गः ।

स्यन्दमानेन शिरसा जानीयाद्वातसम्भवम् ।
स्यन्दमानं शिरस्तच्च हस्तस्पर्शेन[1] लक्षयेत् ॥ ३ ॥
शंखतालुकयोश्चैव शिरामन्यागतां तथा ।
वेधयित्वा ततः कुर्य्यात् पाचे तैलावसेचनम् ॥ ४ ॥
अतिविषया पिप्पल्या वचया लवणेन च ।
सुरसायाश्च[2] पत्त्रेण प्रतिपानं सुरान्वितम् ॥ ५ ॥
हितं तस्मै प्रदातव्यं भोजनञ्च रसोदकम् ।
तिलतैलेन संयुक्तं स्वल्पं त्रिकटुकान्वितम्[3] ॥ ६ ॥

पैत्तिकशिरोरोगचिकित्सा ।

श्वासस्तृष्णा तथा स्वेदः शूनभावोऽपि[4] वर्त्मनोः ।
अत्युष्णता गुरुत्वञ्च शिरसो यस्य जायते ॥ ७ ॥
अधोमुखस्य वाहस्य निद्रालस्यं तथा नृणाम् ।
पित्तोद्भवं शिरोरोगं जानीयान् मतिमान् भिषक् ॥ ८ ॥

४ । तैलावसेचनं वातरोगोक्ततैलसेकं कुर्य्यादित्यर्थः ॥

५ । सुरसा श्वेता त्रिवृत् । तस्याः पत्त्रेण । अतिविषादीनां चूर्णं पलमितम् ।

६ । तिलतैलस्य कुडवत्रयं । त्रिकटुकस्य च षट्तोलकं देयम् ।

७ । शूनभावः स्फीतिः ।

८ । अधोमुखत्वं पित्तजन्यस्य विशेषलक्षणं शिरोगुरुत्वात् ॥

१ । सम्यक् हस्तस्पर्शं न लक्षयेत् । खः ।
२ । सुरसस्य च । गः ।
३ । कटुकसंस्कृतम् । खः ।
४ । शूनताचापि । खः ।

दिकं शिरावेधं पूर्व्वोक्तञ्चैव कारयेत् ।
राऽभ्यङ्गो हितस्तस्मै[1] शतधौतेन सर्पिषा ॥ ९ ॥
ाण्डरीकं मधुकं चन्दनोशीरपद्मकैः ।
भिः कल्कीकृतैस्तस्य शस्तं मूर्ध्नि प्रलेपनम् ॥ १० ॥
ीरेण साधितं सर्पिर्मधुकोशीरपद्मकैः ।
भिः कल्कीकृतैर्देयं तस्य नासावसेचनम् ॥ ११ ॥
क्तमुद्गान् घृतान् भक्तान् भोजनं तस्य दापयेत् ।
ासे दूर्व्वार्ज्जुनो वापि तथा शालेश्च पल्लवान् ॥ १२ ॥

श्लैष्मिकशिरोरोगचिकित्सा ।

मुखेन नासयोर्वापि[2] यः श्लेष्माणं प्रमुञ्चति ।
दीनोऽतीव गुरुशिरा मेदसा शूनतालुकः ॥ १३ ॥

---

९ । शंखादिकमित्यत्र आदिपदेन तालुमन्यागते शिरे ज्ञेये । वेधश्चोत्पलपत्रव्रीहिमुखयोरन्यतरेण शस्त्रेण कार्य्यः । शतधौतं घृतं प्रसिद्धम् ।

१० । अत्र प्रपौण्डरीकादीनां समभागं पलं वारिणा पिष्ट्वा शिरसि लेपो देयः ।

११ । घृतस्य प्रस्थः । मधुकादीनां कल्कः कुडवमितः । क्षीरञ्च स्नेहाच्चतुर्गुणं ग्राह्यम् ।

---

१ । शिरोरोगे ततस्तस्मै । गः ।
२ । नासया चैव । गः ।

तस्य विद्यात् कफोत्थन्तु शिरोरोगं विचक्षणः।
तालुकं वेधयेत्तस्य शिरां शंखादिकान्तथा ॥ १४ ॥
विडङ्गं कटुचूर्णञ्च तिक्तवार्त्ताकुमेव च।
पिष्ट्वा[१] क्षीरेण छागेन नस्यं तेनैव दापयेत् ॥ १५ ॥
नागरं शतपुष्पञ्च तगरञ्च हरेणुकम्।
कल्कं कृत्वा गवां मूत्रे पचेत्तैलं विचक्षणः ॥ १६ ॥
तेन नस्यं प्रदातव्यं निम्बमुद्गस्य[२] भोजनम्।
सुखोष्णं तस्य कर्त्तव्यं क्षौद्रं त्रिकटुकान्वितम् ॥ १७ ॥

सान्निपातिकशिरोरोगचिकित्सा।

सङ्कीर्णलक्षणं विद्यात् सन्निपातसमुद्भवम्।
असाध्यं तं विजानीयात् कृच्छ्रसाध्यमथापि वा ॥ १८ ॥

---

१५। कटुचूर्णं त्रिकटुचूर्णं। एषां मिलितं कर्षद्वयं नस्यार्थे देयम्।

१६। नागरं शुण्ठी। शतपुष्पं (शुलुफा)। तगरं (तगर-पादुका)। हरेणुकं (रेणुक)। एषां कल्केन कुडवमितेन। गोमूत्रेण चतुर्गुणेन तैलप्रस्थं पाचयेत्। तस्य कुडवार्द्धं नस्यार्थे ग्राह्यम्।

१८—१९। सङ्कीर्णलक्षणं वातादिसाधारणलक्षणं। पूर्व्वोक्तं शिरावेधमिति तालुमन्यादिशिरावेधमित्यर्थः।

---

१। मथ्वा। गः। तस्य नेत्रं प्रदापयेत्। गः।
२। निम्बमुद्गैश्च। गः।

शिरावेधं प्रकुर्व्वीत पूर्व्वोक्तं तत्र पण्डितः।
प्रतिपानञ्च दातव्यं सुरया वक्ष्यमाणकम्॥ १९॥
सुरदारु हरिद्रे द्वे पिप्पली शृङ्गवेरकम्।
प्रपौण्डरीकं मधुकं पत्राणि सुरसस्य च॥ २०॥
श्रीवासकं सर्ज्जरसं त्वचं कुष्ठं हरेणुकम्।
घृतेन योजयित्वातु नासाधूमं प्रदापयेत्॥ २१॥
भोजनं[1] तिक्तमुद्गैश्च पूर्व्वोक्तैर्मधुसर्पिषा।
असाध्योऽयं[2] प्रवक्तव्यो विधिरश्वहितैषिणा॥ २२॥

रक्ताभिघातशिरोरोगचिकित्सा।

कटुकैर्लवणैरम्लैस्तैरत्यन्तसेवितैः।
रक्तं कुपितमश्वस्य शिरोरोगाय जायते॥ २३॥
आननासाक्षिकूटस्तु रक्तनेत्रः सुदुर्म्मनाः।
कदाचिद्दृश्यते तस्य रक्तं नेत्राद्विनिर्गतम्[3]॥ २४॥
रक्तजं तस्य जानीयात् शिरोरोगं विचक्षणः।
अभिघातसमुत्थस्य लक्षणं प्रवदाम्यहम्॥ २५॥
काष्ठलोष्टप्रहारैस्तु शिरो यस्याभिहन्यते।

---

२०। प्रतिपाने सुराप्रस्थः। सुरदार्व्वादिसुरसान्तानां मिलितं पलं कल्कीकृतं सुरायां देयम्॥

---

१। योजयेत्तिक्तमुद्गांश्च पूर्व्वोक्तान्। खः।
२। असाध्योऽपि प्रकर्त्तव्यो बुद्धिसन्देहबुद्धिमान्। गः।
३। विचर्च्चितः। गः।

स्तब्धकर्णो गुरुशिरा भवेद्वाजी सुदुर्मनाः ॥ २६ ॥
पित्तजे या क्रिया प्रोक्ता शिरावेधादिका मया ।
रक्तजे सा प्रयोक्तव्या तथा चैवाभिघातजे ॥ २७ ॥
प्रोथतेऽन्तःशिरो यस्य यस्य नासासमुद्भवाः ।
दृश्यन्ते क्रमयश्चापि कृमिजं तस्य निर्दिशेत् ॥ २८ ॥
त्रिकटुञ्च विडङ्गञ्च वार्त्ताकीनां फलानि च ।
सुरया मर्द्दयित्वा तु नस्यं तैलेन दापयेत् ॥ २९ ॥
फलानि वृहतीनाञ्च तिक्तवार्त्ताकुमेव च ।
पिष्ट्वा च छागक्षीरेण नस्यं तेनैव दापयेत् ॥ ३० ॥
नागरं शतपुष्पञ्च तगरञ्च हरेणुकम् ।
कल्कं कृत्वा गवां मूत्रे तैलं तेनैव पाचयेत् ॥ ३१ ॥

---

२८। कृमिजशिरोरोगमाह प्रोथत इति। यस्यान्तःशिरः प्रोथते कृमिपूर्णं भवतीत्यर्थः। प्रोथ षट ञ पर्य्यापणे। पर्य्यापणं परिपूर्णता।

२९। कृमिजशिरोरोगचिकित्सामाह षड्भिः श्लोकैः त्रिकट्वि-त्यादिभिः। त्रिकट्वादीनां मिलितः कर्षः सुरातैलयोश्च कुड़वार्द्धम्।

३०। वृहतीतिक्तवार्त्ताकुफलं कर्षमितं छागदुग्धेन पिष्ट्वा कुड़-वार्द्धेन छागदुग्धेन नस्यं देयम्।

३१। नागरादीनां कुड़वः। तैलस्य च प्रस्थः तैलचतुर्गुणे गोमूत्रे मृदुपाकेन साध्यः। नस्यपरिमाणं कुड़वार्द्धं ग्राह्यम्॥ भोज-नञ्च सुखोष्णविड़ङ्गघृतयुक्तं भाव्यम्॥

तेन नस्यं प्रदातव्यं तिक्तमुद्गैश्च भोजनम्।
सुखोष्णं तस्य कर्त्तव्यं विडङ्गं घृतयोजितम्॥ ३२॥
विडङ्गं लसुनं लोध्रं वृहतीनां फलानि च।
कल्कीकृत्य गवां मूत्रैस्तैलं तेनैव पाचयेत्[1]॥ ३३॥
नस्यं दद्यात् सुखोष्णेन तेन तैलेन[2] बुद्धिमान्।
भोजयेत्तिक्तमुद्गैश्च विडङ्गघृतयोजितैः॥ ३४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शिरोरोग एकत्रिंशोऽध्यायः।

---

## अथ द्वात्रिंशोऽध्यायः।

---

लङ्घितलक्षणम्।

लङ्घितं द्विविधं प्रोक्तं मुनिभिः शास्त्रशालिभिः।
एकं वातादिभिर्दोषैर्द्वितीयञ्चाभिघातजम्॥ १॥

---

३३। तैलस्य प्रस्थं विडङ्गादीनां कुडवमितकल्केन सह स्नेह-चतुर्गुणेन गोमूत्रेण पाचयेत्।

---

१। धीरो विपाचयेत्। ग।
२। तिलतैलेन। ख।

चिकित्साञ्चैव[1] वक्ष्यामि संक्षेपेण यथाक्रमम् ।
पारम्पर्य्येण शास्त्राणां यथा दृष्टं तपोधनैः ॥ २ ॥
उरसा वाहुना[2] चाश्वो जानुजंघात्रिकेण च ।
कूर्चेन च खुराग्रेण मण्डूक्या चापि लङ्गति[3] ॥ ३ ॥

चिकित्सा ॥

अभिघातं विना वाजी[4] यदा दोषेण लङ्गति[5] ।
उपवासैस्तु संशोध्य घृतं वै सुरयान्वितम् ॥ ४ ॥

---

१ । लङ्गितं लङ्गितनामकपादरोगः । (लेङ्ड़ा) इति प्रसिद्धः । पुस्तकद्वये लङ्गितं लिङ्गितमिति च यो दृश्यते पाठः स उभयविध एव साधुः । लगद् खञ्जे इति लगि-धातोः क्तप्रत्ययेन निष्पन्नं लङ्गितम् । लिङ्गितमिति च रिङ्गधातोः क्तप्रत्ययेन निष्पन्नम् ।

४ । दोषेण वातादिना । उपवासैः संशोध्य बलाद्यविरोधि-लङ्घनेन दोषसंशोधनं कृत्वेत्यर्थः । अतिलङ्घितस्य बहुदोषस्मरणात् । तदुक्तं चक्रदत्तेन । "प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत् । वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ॥ हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते । कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि" ॥ इत्यादि । शीतकाले सुरान्वितं घृतं संभोज्य सुराप्रक्षेन हरिद्रा-

---

१ । चापि । गः ।
२ । चाङ्गैरास्यः । खः ।
३ । खिङ्गति । खः ।
४ । वापि । खः ।
५ । खिङ्गिता । खः ।

शीतकाले प्रदातव्यं प्रतिपानं प्रदापयेत्[1] ।
हरिद्रातिविषालोध्रपिप्पल्या च महौषधैः ॥ ५ ॥
त्रायमाणावचाकुष्ठमुस्ताकट्फलसैन्धवैः ।
प्रतिपानं हितं[2] दृष्टं सुरया सीधुनापि च ॥ ६ ॥
तीक्ष्णशीतं समालोक्य कालं शास्त्रविशारदः ।
एवं प्रतिदिनं कुर्य्यात् त्र्यहं सप्ताहमेव[3] च ॥ ७ ॥
अनन्तां[4] वेधयेद्वैद्यः शिरां शस्त्रेण चौरसीम् ।
शिरास्रावे[5] क्षते चापि यदि नो जायते सुखम् ॥ ८ ॥
तदा वह्निः प्रदातव्यो यथाशास्त्रं विचक्षणैः ।
शिंशपापाठमूलैश्च वल्कलैः क्वथितैर्जलैः ॥ ९ ॥
सर्पिस्तैलसमायुक्तो गुग्गुलखञ्जिने हितः ।

---

दीनां पलेन प्रतिपानं दद्यादित्यर्थः । एतत्सर्व्वं चिकित्सितं दोषसम्भूत एव खञ्जिते ज्ञातव्यम् ।

६ । सुरया गौड्याद्यन्यतमया, सीधुना सुराभिन्नया मदिरया वा ।

९ । शिंशपा शाकतरुः, पाठा अविद्धकर्णा (आक्नादि) । एतयोर्मूलानि वल्कलानि च जलाढ़के पक्त्वा पादशिष्टः क्वाथो ग्राह्यः । गुग्गुलोश्च पलं ग्राह्यम् ।

---

१ । तदा तं प्रतिपाययेत् । खः । ४ । अविद्धो वेदयेद् । खः ।
२ । भिषक् दद्यात् । खः । ५ । शिरावेधे । गः ।
३ । पक्षाहम् । गः ।

अभिघातसमुद्भूते क्रियां वक्ष्यामि साम्प्रतम् ॥ १० ॥
लङ्घिते मुनिभिः प्रोक्तं वाजिनां हितकाम्यया।
उरसोऽभ्यञ्जनं कार्य्यं शतधौतेन सर्पिषा ॥ ११ ॥
पञ्चवल्कलकल्केन लेपं दद्यान्मुहुर्मुहुः।
एवं प्रतिदिनं कुर्य्यात् सप्ताहञ्चापि[१] सप्तकम् ॥ १२ ॥
निश्चलस्य तुरङ्गस्य पञ्चाहं वा चतुर्गुणम्।
भ्रामयित्वा समं वैद्यस्ततः[२] सम्यक् निरूपयेत् ॥ १३ ॥
तृतीये सप्तके पूर्णे तुरङ्गं शास्त्रकोविदः।
अशुद्धौ पूर्व्वमुद्दिष्टं शिरावेधादिकक्रमम् ॥ १४ ॥
कुर्य्याद्भूष्टतले वाहे वह्निदाहावसानिकम्[३]।
अभिघातलङ्घिते वै न हितं क्रमणं भवेत् ॥ १५ ॥

---

११। अभिघातोत्थचिकित्सितमाह। अभिघातेत्यादि।

१२। लेपं दद्यात् लङ्घितावयवे इति शेषः।

१३। चतुर्गुणं पञ्चाहं विंशतिदिनमित्यर्थः।

१४। शिरावेधादिकं क्रमं शिरावेधप्रभृति अनुष्ठानं तदध्या-योक्तमित्यर्थः।

१५। भूष्टतले वाहे सुयन्त्रिते अश्वे इत्यर्थः। वह्निदाहावसा-निकं अग्निदाहपर्य्यन्तम्।

---

१। सप्ताहञ्चापि सप्तकम्। गः।
२। ततस्तेषां। गः। ३। वह्निदाहावसानिकम्। खः।

कपिकच्छुवलावालपारिभद्रकसैन्धवैः ।
कपिकच्छुकवाथ्यालं पादशेषव्यवस्थितम् ॥ १६ ॥
...र्द्रसिन्धुहरिद्राणां चूर्णं दत्वा तु बुद्धिमान् ।
... तु व्योषचूर्णेन रसवर्जन्तु दापयेत् ॥ १७ ॥
तस्मिन् दिने भोज्यपानं दापयेन्नु मनागपि ।
पश्चात्काये[1] लिङ्गितेतु अनुवासस्तु केवलः ॥ १८ ॥
सर्व्वाः प्राक्कायिकाश्चापि[2] चिकित्साः परिकीर्त्तिताः ।
सर्व्वेषु चैव लङ्गेषु अनुवासस्तु केवलः ॥ १९ ॥
सर्व्वेषु चैव लङ्गेषु समीपे वेधयेत् शिराम् ।
उरोलङ्गो[3]चिताश्चैव क्रियाः सर्व्वाः प्रकीर्त्तिताः॥ २० ॥
चिकलिङ्गीति यः प्रोक्तो हरिर्वातकटिस्तु सः ।
आपाण्डी[4] वैधयित्वा तु शिरास्तस्य विचक्षणः ॥ २१ ॥
भोजनञ्च निरूहञ्च सम्यगेव प्रदापयेत् ।
तैलैर्वातहरैर्वैद्यस्तथा चाभ्यङ्गमेव च ॥ २२ ॥

। १६ । निरूहमाह कपिकच्छित्यादि ।

[1] पश्चात्कायेन सर्व्वेतु । खः ।
[2] अभिघातजङ्गे मस्यं हि हितं प्रोक्तायसम्भवम् । खः ।
[3] उरोलङ्गादिका चैव क्रियाः प्रोक्ताः । गः ।
[4] अपाण्डोः । खः ।
[5] लिङ्गैः । गः ।

चिपाद्य यः स्थितो भूमिं खुराग्रेण स्पृशेद्यदि ।
ध्यायते निश्चलो यश्च तं हयं शुङ्गमादिशेत् ॥ २३ ॥
अग्रकायेन यो याति स शुङ्गः परिकीर्त्तितः ।
पश्चात्कायोत्थितश्चाग्रे दृढः प्रोक्तो मनीषिभिः ॥ २४ ॥
निद्रायमाणो यो वाजी निम्नोरस्को भवेद् यदि ।
अङ्गुलं द्व्यगुलं वापि स तु ग्राह्यो विचक्षणैः ॥ २५ ॥
अत ऊर्द्ध्वं न गृह्णीयाद् वायोर्बलसमन्वितम् ।
अथवाप्यंसकूटेन द्वाभ्यामेकेन वा पुनः ॥ २६ ॥
वेगेन गतिभिश्चैव तुल्यो भवति यो हयः ।
स वै वातकटिर्ज्ञेयो न ग्राह्यो बलवानपि ॥ २७ ॥
पुलिनश्चैव यो वाजी गच्छन्नुद्वहते कटिम् ।
सोऽपि वाताभिभूतोऽश्वो न योज्यो वाजिकर्म्मणि ॥२८॥
उरो रक्षति वाहस्य वर्ज्यो दृष्टाभिकुञ्चनम् ।
कर्णयोर्व्यस्तसंन्यस्तो वाजी वातहतः स्मृतः ॥ २९ ॥

---

२३। लिङ्गिते शुङ्गलक्षणमाह ।

२७। वातकटिलक्षणमाह । न ग्राह्य इति न चालनीय इत्यर्थः ।

२९। वातहताश्वमाह । कर्णयोर्व्यस्तसंन्यस्त इति व्यस्तसंन्यस्तकर्ण इत्यर्थः ।

पश्चात्पादं खुराग्रेण भूमौ भ्रश्य तु गच्छति।
तदाकिञ्चन-वाहो वा न योज्यो वाजिकर्म्मणि॥ ३०॥
प्रध्यायमानो यः पश्चाद्रज्जुमाकृष्य सर्व्वदा।
वातभुग्नकटिर्वाजी स विज्ञेयो ह्यकिञ्चनः॥ ३१॥
उत्तिष्ठत्यग्रकायेन यो लुठित्वाग्रतो[1] हयः।
पश्चात् पश्चिमकायेन सोऽपि वातहतः स्मृतः॥ ३२॥
वाहितं सुदृढं वाहं स्नातं पीतोदकं तथा।
वारितञ्च सुखासीनं ध्यायन्तञ्च निरूहयेत्॥ ३३॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापिवा।
निरूहयेत्तुरङ्गन्तु त्रिकलिंगिकशङ्कया॥ ३४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे लक्षिते द्वात्रिंशोऽध्यायः।

---

३१। वातभुग्नकटिमाह।

---

१। लुठित्वात्वग्रतो हयः। गः।

पिष्ट्वा कुटजवीजन्तु यष्टीमधुसमन्वितम् ।
घृतेनालोड्य[1] मतिमान् कुर्य्यादस्त्रपरिस्रुतम् ॥ ५ ॥
पूरयेत्तेन कर्णन्तु सुखोष्णेनैव बुद्धिमान् ।
रसेन च कपित्थस्य युक्तेन मधुसर्पिषा ॥ ६ ॥
त्वक्पत्रे क्षीरवृक्षस्य सर्पनिर्मोकमेव च ।
गोलोम गुग्गुलुं कुष्ठं मेषोर्णां च मनःशिलाम् ॥ ७ ॥
घृतेन मर्द्दयित्वा तु धूपं कर्णे प्रदापयेत् ।
भोजयेत्[2] पिप्पलीयुक्तान् मुद्गांश्च क्षौद्रयोजितान् ॥ ८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे कर्णरोगे त्रयस्त्रिंशोऽध्यायः ।

---

## अथ चतुस्त्रिंशोऽध्यायः ।

कासरोगनिदानलक्षणानि ।

अथो वातादिभिर्दोषैः सन्निपातेन चापरः ।
क्षतक्षयसमुत्थौ द्वावेवं कासस्तु षड्विधः ॥ १ ॥

---

५-६ । कुटजवीजस्य इन्द्रयवस्य यष्टीमधुनश्च कर्षः घृतस्य च पलं एकत्र समालोड्य कवोष्णं कर्णे पूरयेत् ॥

---

१ । आलोड्यमानन्तु । गः ।

२ । भोजने पिप्पलीयुक्तमुद्गाः क्षौद्रेण योजिताः । खः ।

रूक्षो यस्य भवेत् कासः श्लेष्मस्राव[1]विवर्जितः ।
क्षीणस्य[2] वर्द्धते चापि वातिकं तस्य निर्द्दिशेत् ॥ २ ॥
दाहस्वेदयुतः कासो नीलपीतकफान्वितः ।
विच्छिन्नश्च[3] तुरङ्गानां विज्ञेयः पित्तसम्भवः ॥ ३ ॥
अधिकं कासते यस्तु हृष्टरोमाः सुदुर्म्मनाः ।
गुरुगात्रशिरा वाजी मन्दग्रासविचेष्टितः ॥ ४ ॥
दधिकुन्देन्दुसंकाशं[4] श्लेष्माणं यो विमुञ्चति ।
ग्रासाभावे सुखी यश्च[5] तस्य विद्यात् कफात्मकम् ॥ ५ ॥
सर्व्वेषां लक्षणैर्युक्तं जानीयात् सान्निपातिकम् ।
कषायेण च रक्तेन श्लेष्मा[6] क्षतजसम्भवः ॥ ६ ॥

---

२ । रूक्षः शुष्क इत्यर्थः ।

४ । गुरुगात्रशिरा इति गात्रस्य शिरसश्च गुरुत्ववान् । मन्दग्रासविचेष्टित इति ग्रासे शष्पादिभक्षणे विचेष्टिते शरीरचेष्टायां च मन्दता शैथिल्यं तद्वानित्यर्थः ।

५ । दधिकुन्देन्दुसंकाशं तद्वत् शुभ्रमित्यर्थः । ग्रासाभावे सुखीति ग्रासस्य कवलग्रहणस्य अभावे सुखी भोजनग्रहणे अनिच्छुरित्यर्थः ।

६ । कषायेण कषायवर्णेन रक्तेन च युक्त इति शेषः ।

---

१ । कास । गः ।
२ । क्षीरेश्च वर्द्धते वापि । गः ।
३ । पिच्छिलश्च । खः ।
४ । कुन्देन्दुदधिसङ्काशम् । खः ।
५ । सुखासीनः । गः ।
६ । श्लेष्मणा क्षतजो भवेत् । गः ।

प्रसारयति यो गात्रं[1] ग्रीवाञ्चापि विशेषतः ।
कासमानो ह्ययो दीर्घं[2] भिन्नरोमा[3]तिदुर्व्वलः ॥ ७ ॥
दुर्गन्धिपूयसङ्काशं यश्चैव कफमुद्गिरेत् ।
तस्य[4] विद्याद्बुधः कासं क्षयस्य क्षतसम्भवम् ॥ ८ ॥

वातकासचिकित्सा ।

वातकासाभिभूतस्य[5] पानं दद्याद्विचक्षणः ।
पञ्चमूलकषायेण कृत्वा मांसरसं बुधः ॥ ९ ॥
गोक्षीरं शर्करायुक्तं पिप्पलीनागरान्वितम्[6] ।
तिलतैलेन संयोज्य भोजयेल्लवणान्वितम् ॥ १० ॥
दुरालभां कण्टकारीं बृहतीं कटुरोहिणीम् ।
पिष्ट्वा वार्त्ताकुयूषेण तैलसिद्धेन पण्डितः ॥ ११ ॥

---

९ । पञ्चमूलस्य मिलितं पलं वारिण आढकः । पादावशिष्टः क्वाथो ग्राह्यः ।

१० । अत्र दुग्धस्य प्रस्थः, शर्करा कुड़वमिता, पिप्पलीशुण्ठ्यो-र्मिलितं पादोनं पलं, तैलस्य च प्रस्थार्द्धम् ।

११ । दुरालभादीनां पलं । वार्त्ताकूनां शुष्काणां पलं, पाकार्थं वारि आढ़कमितं अर्द्धावशिष्टं कार्य्यम् । सन्तलनार्थं तैलस्य च कुड़वचयम् ॥

---

१ । गात्राणि । गः ।
२ । दीनः । गः ।
३ । सीदद्रोमा । खः ।
४ । तन्तु विन्द्याद्बुधः कासं वाक्षस्य । गः ।
५ । वातकासाभियोज्यस्तु । गः ।
६ । पिप्पलीधूमजं ततः । गः ।

वंशरोचनया युक्तं चूर्णं गोधूमजं ततः ।
तेन कल्केन संनीय क्षीरेण विधिवत्पचेत् ॥ १२ ॥
ततो गुड़ेन संयोज्य भोजयेत् सर्पिषा सह ।
घृतेन मधुना युक्तं पायसञ्च प्रदापयेत् ॥ १३ ॥
वार्त्ताकानां फलैः क्वाथः[१] शुण्ठीमागधिकान्वितः ।
मूर्च्छितस्तिलतैलेन पाने दत्तः सुखावहः ॥ १४ ॥
मूलकस्य रसश्चैव[२] वार्त्ताकक्वाथवद्भिषक् ।
वातिके दापयेत्पानं कासे तैलेन मिश्रितम् ॥ १५ ॥
कुलत्थदर्भमूलन्तु घृतगोमेदसा युतम् ।
धूपोऽनेन[३] प्रदातव्यो नासिकाविवरेण तु ॥ १६ ॥

---

१२—१३ । तेन कल्केन दुरालभादिकल्केन पलमितेनेत्यर्थः । वंशलोचनागोधूमचूर्णं मिलितं पलं । चीरस्याढको गुड़स्य पलाष्टकं घृतस्य च पलचतुष्टयम् । एतानि एकत्र पक्वा भोजयेत् । घृतेन पलचतुष्टयेन मधुना कुड़वमितेनेत्यर्थः ।

१४ । अत्र क्वाथादिद्रव्यमानं पूर्ववत् ज्ञेयम् ।

१५ । मूलकरसस्य प्रस्थार्द्धं वार्त्ताकक्वाथस्य च प्रस्थद्वयं एकत्र तैलस्य प्रस्थार्द्धेन सह पाययेत् ।

१६ । कुलत्थदर्भचूर्णं मिलित्वा षट्तोलकं घृतगोमेदसोश्च कर्षौ धूपमात्रा ।

---

१ । क्वाथं समं मागधिकान्वितम् । गः । ३ । धूमस्तेन । गः ।
२ । रसे चैव वार्त्ताकं क्वाथयेद्भिषक् । गः ।

पित्तकासचिकित्सा ।

गृहीत्वा गोमयरसं पिप्पलीचूर्णसंयुतम् ।
मधुना सर्पिषा चैव लेह्यं[1] कासे सपैत्तिके ॥ १७ ॥
पायसं यवचूर्णेन छागक्षीरेण साधितम् ।
धात्रीमागधिकाचूर्णं भोजयेन्मधुसर्पिषा ॥ १८ ॥
पिप्पलीमधुकाभ्यान्तु वलारोचनया युतम्[2] ।
पिप्पलीचूर्णसंयुक्तं छागक्षीरं सशर्करम् ॥ १९ ॥
एतत्पानं प्रदातव्यं वातकासप्रशान्तये ।
पटोलपत्रनिःक्वाथे[3] सुस्विन्नान्[4] भोजयेत्ततः ॥ २० ॥
मुद्गान् मागधिकायुक्तान् मधुयुक्तेन सर्पिषा ।
चूर्णमामलकानान्तु वंशरोचनया युतम् ॥ २१ ॥

---

२१ । चित्रकादीनां चूर्णं समभागं पादोनपलमितं मधुना कुड़व-मितेन मिश्रयित्वा लेहयेत् ।

---

१ । लेहनीयस्तु पैत्तिके । गः ।

२ । पिप्पलीमधुकाभ्यान्तु क्षीरं छागं सशर्करम् । क्षौद्रं पाने प्रदातव्यं वातकासप्रशान्तये । खः ।

३ । पञ्चतिक्तकनिःक्वाथे । खः ।

४ । स्विन्नान्नम् । खः ।

पिप्पलीचूर्णसंयुक्तं सर्पिषा सह साधयेत् ।
तं[1] स्नेहं दापयेद्वाहे पिण्डं वा भोजयेत्ततः[2] ॥ २२ ॥
फलचूर्णञ्च[3] काश्मर्य्या एवं दद्याद्विचक्षणः ।
लोध्रचन्दनयष्ट्याह्वपद्मकैर्घृतयोजितैः ।
धूपो नासाग्रतः[4] कार्य्यः शास्त्रदृष्टेन कर्म्मणा ॥ २३ ॥

श्लेष्मकासचिकित्सा ।

चित्रकं त्रिफलाचूर्णं मुस्तकं कटुकत्रयम् ।
मधुना दापयेल्लेहं श्लेष्मकासार्द्दिते हये ॥ २४ ॥
पञ्चतिक्तसुसंसिद्धं तिक्तमुद्गञ्च भोजयेत् ।
मधुना तिलतैलेन युक्तांस्त्रिकटुकेन च ॥ २५ ॥
गवां मूत्रेण सुस्विन्नास्तिलतैलेन मर्द्दिताः ।
व्योषचूर्णसमायुक्ताः कुलत्था भोजने हिताः[5] ॥ २६ ॥

२२ । निम्बामृतवृषपटोलनिदिग्धिकानां पलं तिक्तमुद्गस्य च प्रस्थत्रयं ४ जलाढके पक्का मधुकुड़वेन तैलकुड़वत्रयेण त्रिकटुकचूर्ण-पलेन च एकत्र भोजयेत् । एषा मात्रा उत्तमे ज्ञेया ।

२३ । एवं कुलत्थभोजनेऽपि मात्रां जानीयात् । अत्र ग-पुस्तके द्वितीयान्तः पाठो दृश्यते ।

२४ । दन्तीमूलादीनां कर्षत्रयं घृतस्य च कर्षो धूपे ग्राह्यः ।

१ । तल्लेहं । खः ।
२ । भिषक् । खः ।
३ । फलस्य चूर्णं काश्मर्य्याः । गः ।
४ । नासाग्रतः । गः ।
५ । कुर्य्याद्वै भोजयेद्धिताम् । गः ।

दन्तीमूलं हरिद्रा च हिङ्गु च[1] वृहतीफलम्।
एतैस्तु धूपयेत्कासे नासिकायां कफात्मके॥ २७॥
क्षतजे क्षयकासे च पित्तकासोदितां[2] क्रियाम्।
कुर्य्यान्मतिमतां श्रेष्ठो वाजिनां हितकाम्यया॥ २८॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे कासरोगचिकित्सिते चतुस्त्रिंशोऽध्यायः।

---

## अथ पञ्चत्रिंशोऽध्यायः।

हिक्काश्वासनिदानलक्षणम्।

मुखेन नासया चैव यः श्लेष्माणं विमुञ्चति।
वातिकं शिशिरे काले तस्य श्वासं विनिर्द्दिशेत्॥ १॥
शरन्निदाघयोश्चैव श्वासः पित्तेन जायते।
तृष्णादाहपरीतस्य स्विन्नगात्रस्य वाजिनः॥ २॥
मुखेन नासया चैव कफो यस्य प्रवर्त्तते।
प्रावृट्काले वसन्ते वा[3] श्वासस्तस्य कफात्मकः॥ ३॥
दृष्ट्वा लक्षणसांकर्य्यमादिशेत् सन्निपातजम्[4]।
द्वन्द्वजञ्च[5] तथा द्वाभ्यां दोषाभ्यां जनितं[6] बुधः[7]॥ ४॥

---

१। हिङ्गुञ्च। खः।
२। क्षत्वा चैवोदितां क्रियाम्। गः।
३। वापि। खः।
४। सान्निपातिकम्। खः।
५। द्वन्द्वजञ्च। गः।
६। जनितो बुधैः। गः।
७। बुधः। खः।

श्वासचिकित्सा ।

पञ्चमूलकषायेण कृत्वा मांसरसं भिषक् ।
वातश्वासे प्रदातव्यं शाल्यन्नेन च भोजनम् ॥ ५ ॥
निस्तुषा जलकुम्भस्थाः खादने विहिता यवाः ।
पित्तश्वासार्दिते वाहे[1] पानलेपौ च शीतलौ ॥ ६ ॥
दर्भाः शरस्य[2] काशस्य नलवेतसयोस्तथा ।
मूलक्काथः प्रदातव्यः पाने क्षौद्रसितान्वितः[3] ॥ ७ ॥
वस्तिश्चैव[4] जलक्षीरैः पित्तश्वासे प्रकीर्त्तितः ।
मुहुर्मुहुश्च पङ्केन[5] प्रलेपश्च हितस्तथा ॥ ८ ॥
रास्ना[6]गोक्षीरपानञ्च शर्करामधुमूर्च्छितम् ।
पञ्चतिक्तेन[7] सिद्धस्य अक्षपानञ्च सर्पिषा ॥ ९ ॥

---

५ । वातकासे पञ्चमूलकषायसाधितं मांसरसं शाल्यन्नेन सह भोजनं देयम् । पञ्चमूलस्य पलं मांसस्य च प्रस्थः १८० पलमिते वारिणि पाच्यः । तण्डुलस्यार्द्धाढकः ।

६ । अत्र यवस्य प्रस्थत्रयं वारिपर्य्युषितं देयम् ।

८ । अत्र क्षीरजलयोः आढको ग्राह्यः ।

९ । रास्नायाः पलं । गोक्षीरस्य प्रस्थः । शर्करामधुनोः प्रत्येकं कुडवः । अक्षपानं कर्षपरिमितपानम् ।

---

१ । देयौ च । गः ।
२ । दृष्णाकुलस्य । खः ।
३ । क्षौद्रसमन्वितः । गः ।
४ । वस्तितुल्यमथाक्षीरं । गः ।
५ । कर्दमेन । गः ।
६ । शस्तम् । खः ।
७ । पञ्चतिक्तकसुद्धस्य । गः ।

उशीरं पद्मकं मूर्व्वां काश्मर्य्याश्च फलं सितम्।
शीतेन वारिणा दद्यात् पानं क्षौद्रेण योजितम्॥१०॥
पद्मनाड़ीं मयूरस्य जंघां वा चर्म्म वा भिषक्।
दग्ध्वा लेहं प्रकुर्व्वीत घृतेन मधुना सह॥११॥
मयूरनाड़ीकल्केन शलाकां शल्लकस्य च।
दद्यादस्थीनि वा प्राज्ञः पित्तश्वासोपशान्तये॥१२॥
वार्त्ताकयूषः पानाय तिलतैलेन योजितः।
श्वासे कफात्मके देयस्तिक्तमुद्गांश्च[१] भोजयेत्॥१३॥
द्वन्द्वजे द्विविधो देयः सङ्कीर्णः सान्निपातिके।
श्वासोक्ता याः क्रियाः सर्व्वा स्नेहपानादिपूर्व्विकाः।
प्रयोक्तव्यास्तु हिक्कायां वाजिनां हितमिच्छता॥१४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे हिक्काश्वासे पञ्चविंशोऽध्यायः।

---

१०। सितं रक्तचन्दनम्।

११। पद्मादीनामन्यतमं भस्मीकृत्य घृतमधुभ्यां लेहयेत्।

१२। शल्लकस्य शलाका (शजारु कांटा)॥

१३। वार्त्ताकस्य पलं। जलस्याढ़कः। तैलस्य प्रस्थार्द्धम्। द्वन्द्वज इत्यादिपाठो ग-पुस्तके नास्ति।

---

१। तिक्तमुद्गैश्च भोजनम्। खः।

## अथ षट्त्रिंशोऽध्यायः ।

अथ निदानलक्षणानि ।

आगन्तुकं दोषजञ्च व्रणं विविधमुच्यते ।
लक्षणञ्च चिकित्साञ्च तस्य वक्ष्यामि शास्त्रतः ॥ १ ॥
दोषजं शोथपाकोत्थं व्रणं विद्याद्विचक्षणः[१] ।
शस्त्रघातादिजञ्चैव[२] ज्ञेयमागन्तुकं तथा ॥ २ ॥
चिरपाकं[३] चिरस्पर्शं ज्ञेयं वातात्मकं बुधैः ।
पित्तजं शीघ्रपाकञ्च कण्डूदाहसमन्वितम्[४] ॥ ३ ॥
घनञ्चोत्सेधसंयुक्तं[५] श्लैष्मिकं मन्दवेदनम् ।
व्रणं चिरविपाकञ्च श्वेतवर्णं समादिशेत् ॥ ४ ॥
सर्व्वरूपैस्तु संयुक्तं विज्ञेयं सन्निपातजम् ।
द्विरूपं द्वन्द्वजञ्चापि कीर्त्तितं मुनिसत्तमैः ॥ ५ ॥

---

३ । यस्य शीघ्रं पाकं यातीत्यर्थः । अतएव चिरस्पर्शसहिष्णुमित्यर्थः ।

४ । अयं श्लोको ग-पुस्तके नास्ति ।

---

१ । विद्वान् । गः ।
२ । सवक् चैव । खः ।
३ । क्षिप्रपाकम् । गः ।
४ । दाहपाकसमन्वितम् । गः ।
५ । चेद् शोफसंयुक्तम् । खः ।

दुष्टं संशोधयेत्पूर्व्वं शुद्धञ्चापि प्ररोहयेत् ।
आनुपूर्व्या यथायोगं व्रणं शास्त्रविशारदः ॥ ६ ॥
उत्सन्नञ्चैव दुर्गन्धि स्फुटितं पिड़कान्वितम् ।
अशुद्धं निर्द्दिशेद्वैद्यो व्रणं शुद्धं विपर्य्यये[1] ॥ ७ ॥

अथ चिकित्सा ।

दन्तीमूलं हरिद्रे द्वे चित्रकं विश्वभेषजम् ।
रसोनं सैन्धवञ्चापि तक्रकाञ्जिकयोजितम्[2] ॥ ८ ॥
दुष्टव्रणानां[3] सर्व्वेषां शोधनाय प्रकीर्त्तितम् ।
तिलशक्तुकपिण्डञ्च[4] दधियुक्तञ्च सैन्धवम् ॥ ९ ॥
निम्बपत्रयुतं पिण्डं तिलकल्कस्य बुद्धिमान् ।
मधुसैन्धवसंयुक्तं दद्याद्व्रणविशुद्धये ॥ १० ॥
मधुसैन्धवहीनोऽयं पिण्डो निम्बतिलोद्भवः ।
प्रवरो रोपणीयानां व्रणे शुद्धिसमन्विते ॥ ११ ॥

---

६ । प्ररोहयेत् रोपयेत् ।

७ । उत्सन्नमुत्सेधयुक्तं ।

९ । तिलशक्तुकपिण्डं पलमितम् ।

---

१ । अशुद्धञ्चैव निर्द्दिष्टं व्रणं शुद्धं विवर्जयेत् । गः ।

२ । पेषितम् । खः ।

३ । मृदुव्रणानाम् । खः ।

४ । तिलशक्तुकपिण्डौ वा । खः ।

दाडिमामलकागस्तिकपित्थानां विचक्षणः।
त्वक्चूर्णं दापयेत् शुद्धे व्रणे चोत्तानके भिषक् ॥ १२ ॥
व्रणे रूढे प्रदातव्यं रोमसंजननं परम्।
चूर्णं मुनिमुखोद्गीर्णं वक्ष्यमाणमिदं ततः ॥ १३ ॥
खुरचर्म्मास्थिबालञ्च दन्तशृङ्गनखं तथा।
गवादीनां यथालाभं कटाहं कच्छपस्य च ॥ १४ ॥
गृहीत्वा कारयेद्भस्म अन्तर्दग्धं विचक्षणः।
तद्दद्याद्घृततैलाभ्यां रोम्णां संजननं परम्[1] ॥ १५ ॥
अश्वमारकदल्यर्कस्नुहीहाटकचित्रकैः।
पचेत्तैलं सभल्लातं नाडीव्रणहरं परम् ॥ १६ ॥
आगारधूमं संपिष्य गोमूत्रेण विचक्षणः।
नाडीं प्रपूरयेद्युक्त्या तदुपद्रवशान्तये ॥ १७ ॥

---

१२। अगस्तिर्वकवृक्षः। उत्तानके अगभीरे।

१४—१५। गवादीनां पशूनां खुरचर्म्मादिकं यथालाभं अन्तर्धूमे भस्मीकृत्य घृततैलाभ्यां मर्द्दयित्वा प्रयोज्यम्। अस्य श्लोकस्य तृतीय-चतुर्थपादौ ग-पुस्तके न स्तः।

१६। नाडीव्रणचिकित्सामाह। अश्वेति। अश्वमारः करवीरः। हाटकं धुस्तूरः।

१७। आगारधूमं (झुल)। तदुपद्रवशान्तये नाडीव्रणशान्तये।

नाड़ीव्रणो यदा शुद्धिं भेषजेन[1] न गच्छति ।
तदा वह्निः प्रदातव्यस्तथाच पित्तजे व्रणे ॥ १८ ॥
सरक्ते[2] तत्क्षणोद्भूते व्रणे आगन्तुके भिषक् ।
मूलकादिभिरम्लस्थैः कुर्य्यात् स्वेदं विचक्षणः ॥ १९ ॥
ततो मधुककल्कान्तु दद्यात्[3] क्षौद्रघृतान्वितम् ।
बध्नीयाद्वस्त्रपट्टेन मुहुः सिञ्चेच्च सर्पिषा ॥ २० ॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपयेत् ।
शुष्कग्रासं[4] भिषग्दत्वा पाने[5] स्तोकं जलं तथा ॥ २१ ॥
पूयभावे[6] गते तस्मिन् पूर्व्वोक्ताः शोधनादिकाः[7] ।
दोषजोक्ताः क्रियाः सर्व्वाः[8] कर्त्तव्याः सावसानिकाः
॥ २२ ॥

---

१९ । मूलकादिभिरम्लस्थैरिति अम्लसंयुक्तैरित्यर्थः ।

२२ । अस्य उत्तरार्द्धं गपुस्तके नास्ति ।

---

१ । भेषजेनैव गच्छति । गः ।

२ । सरक्तात्तत्क्षणोद्भूते । खः ।

३ । दत्वा । खः ।

४ । शुष्कघासं । गः ।

५ । स्तोकं पानेन बुद्धिमान् । गः ।

६ । पयाभावे । गः ।

७ । शोधनक्रियाः । गः ।

८ । सर्व्वाश्चैव प्रवर्त्तव्या वैद्येनच वणादिकाः । गः ।

अवगाढं चिरोद्भूतं मांसमज्जास्थिसंस्थिरम्[1] ।
कृच्छ्रसाध्यमसाध्यं वा व्रणं विद्यात् समाहितः[2] ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे व्रणरोगे षट्त्रिंशोऽध्यायः ।

---

## अथ सप्तत्रिंशोऽध्यायः ।



वातादिसिंघानलक्षणानि ।

वातिके पैत्तिके चैव श्लैष्मिके सान्निपातिके ।
सिंघानके प्रवक्ष्यामि लक्षणं भेषजं तथा ॥ १ ॥
तनुस्रावं सफेनञ्च वातिकं तत् प्रकीर्त्तितम् ।
रक्तपीतासितैः[1] स्रावैर्विन्द्यात् पित्तसमुद्भवम् ॥ २ ॥
घनेन दधिवर्णेन कफजञ्चैव निर्द्दिशेत् ।
नानावर्णेन जानीयादसाध्यं सान्निपातिकम् ॥ ३ ॥

तच्चिकित्सा ।

शिरसः स्वेदनं कुर्य्याद् वातिके श्लैष्मिके तथा ।
प्रियङ्गुचन्दनोशीरैः शिरोलेपस्तु पित्तजे ॥ ४ ॥

---

२३ । अवगाढं न सम्यगुत्थितं । चिरोद्भूतं चिरजातम् ।

---

१ । समवायुं स्थिरलक्षम् । ग: ।   २ । रक्तपिताासितैः । ग: ।
२ । विद्वान् समादिशेत् । ग: ।

सिंघानकेषु सर्व्वेषु शङ्ख्योस्तालुके तथा ।
शिरावेधं प्रशंसन्ति मुनयः शास्त्रकोविदाः ॥ ५ ॥
गोमूत्रेण च संपिष्य श्वेतोगौरसर्षपान् ।
तिक्तवार्त्ताकवीजानि[1] तैलेनाक्तोथ दापयेत् ॥ ६ ॥
नस्यं सिंघानके प्राज्ञो वातिके श्लैष्मिके तथा ।
नासार्थं[2] विहिता दूर्व्वा पाने चाल्पजलं तथा ॥ ७ ॥
नाड़िकाग्रे व्योषचूर्णं दद्यात्[3] नासापुटान्तरे ।
पश्चिमे नाड़िकाच्छिद्रे मुखवातं प्रपूरयेत्[4] ॥ ८ ॥
एष प्रधमनो नाम विधिः श्लेष्मापकर्षणः ।
सिंघानके प्रयोक्तव्यं[5] शिरसश्च विरेचनम् ॥ ९ ॥
व्योषचूर्णं[6] विधानेन अन्यैर्वा कटुचूर्णकैः ।
दापयेत् श्लेष्मशमनं[7] नस्यं तैलञ्च साधितम् ॥ १० ॥

---

८ । नाड़िकाग्रैः नेत्राग्रभागैः ।

---

१ । तिक्तवार्त्ताकवीजञ्च । खः ।
२ । घासेतु विहिता दूर्व्वा । खः ।
३ । दत्वा । खः ।
४ । प्रदापयेत् । खः ।
५ । प्रकर्त्तव्यं शिरसाम् । गः ।
६ । विषचूर्णं विधानेन अन्यान् कटुकचूर्णकान् । गः ।
७ । श्लेष्मनाशाय । खः ।

पुनर्नवा विडङ्गञ्च सरलं देवदारु च।
रजनी चैव वाराही बलामूलं तथैव च॥ ११॥
एतानि समभागानि कल्कं कृत्वा विचक्षणः।
पञ्चमूलकषायेण पाचयेत्तैलमुत्तमम्॥ १२॥
तेन नस्यं प्रदातव्यं वातश्लेष्मसमुद्भवम्[1]।
सिंघानके तुरङ्गानां कटुचूर्णावचूर्णितम्॥ १३॥

पैत्तिकद्वन्द्वजसिङ्घानकचिकित्साः।

मञ्जिष्ठा मधुकं लोध्रं पिप्पली रजनीद्वयम्।
नस्यं क्षीरेण दातव्यं पित्तसिंघानकापहम्॥ १४॥
लोध्रं[2] प्रपौण्डरीकञ्च मधुकञ्चोत्पलन्तथा।
कल्कं कृत्वा पचेत्तैलं पयसा वारिणा सह॥ १५॥
पित्तसिङ्घानकार्त्तस्य तैलेनानेन बुद्धिमान्।
नस्यं दद्याद् यथायोगं तेन सम्पद्यते सुखम्॥ १६॥
दत्तनस्यं ततो वाहं बद्ध्वा जङ्घाद्वयेऽग्रिमे।
पृष्ठे च[3] ताडयित्वा तु भ्रामयेत् प्रेरयेत्ततः[4]॥ १७॥

---

११। वाराही वाराहीकन्दः।

१५। अत्र वारिपयसी स्नेहचतुर्गुणे देये।

---

१। विंशमुद्रैश्च भोजनम्। गः। ३। पृष्ठतः। खः।

२। लोध्रकं पौण्डरीकञ्च। गः। ४। भ्रामयेत्तं विचक्षणः। खः।

एवं श्लेष्मा विनिर्याति तस्य नासान्तरोद्भवः ।
प्रतिप्रभातं[1] कुर्वीत क्रियामेतां समाहितः ॥ १८ ॥
तारयेद्वा जलं निम्बं[2] प्रोथयेद्वा विचक्षणः[3] ।
नासाछिद्रे विनिःक्षिप्य सूक्ष्मैलां[4] चूर्णितां मनाक् ॥ १९ ॥
गुडूच्यास्त्रिफलायाश्च निम्बवासकयोस्तथा ।
क्वाथे मुद्गान् समुत्स्विद्य सुखोष्णान् स्थापयेत्ततः ॥ २० ॥
पञ्चमूलकषायेण रसैर्मांसस्य साधितैः ।
मर्द्दयित्वा ततस्तैलं दत्वा मधु च भोजयेत् ॥ २१ ॥
श्लेष्मजे वातजे चैव कटुचूर्णं प्रदापयेत् ।
तिक्तमुद्गा घृताभ्यक्ताः पित्तसिङ्घानके हिताः ॥ २२ ॥
न दद्यात् पित्तजे तैलं केवलं विहितं घृतम् ।
द्वन्द्वजे च त्रिधा विद्वान् कुर्य्यात्साधारणीं क्रियाम्[5] ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे सिंघानचिकित्सिते सप्तविंशोऽध्यायः ।

---

१ । प्रभातं प्रति । गः ।
२ । पिचं । गः ।
३ । तु ततः परम् । गः ।
४ । सूक्ष्मां चूर्णिकां मनाक् । खः ।
५ । द्वन्द्वजे द्विविधां कुर्य्यात् त्रिविधां सान्निपातिके । खः ।

# अथाष्टविंशोऽध्यायः।

घ्रणिरोगचिकित्सा।

नासिकाभ्यन्तरे यस्य पिड़कानां समुद्भवः।
व्रणं वा यदि वा शोथः तस्य विद्याद् घ्रणीरुजम्॥ १॥
शोथजां वेधयेत्तस्य शिरां शोथे विचक्षणः।
अथवा शोणितं दुष्टं कर्षयेच्च जलौकसा॥ २॥
धरण्यां पातयित्वा तु दृढं बद्धा तुरङ्गमम्।
नासापुटं ततः शस्त्रैः पाटयित्वा विचक्षणः॥ ३॥
उत्कृत्य पिड़काग्रन्थिं दहेल्लोहशलाकया।
उत्थिते तु[1] ततो वाहे घृताभ्यङ्गः प्रशस्यते॥ ४॥
शीतेनाश्च्योतयेद्वैद्यः पञ्चवल्कलवारिणा।
मुहुर्मुहुर्व्रणं प्राज्ञो घृतयुक्तेन वाजिनः॥ ५॥

---

१। घृणिर्नाम नासिकाभ्यन्तरस्थरोगविशेषः।

२। जलौका। (जोँक्)। अथ वेत्यादि मार्द्धश्लोको ग-पुस्तके नास्ति।

४। घृताभ्यङ्गो घृतमर्द्दनम्।

५। आश्च्योतयेत् आसेचयेत्।

---

१। उद्धृते च। खः।

गुग्गुलुं पाययेत्तञ्च त्रिफलाक्वाथयोजितम्।
दूर्व्वाञ्च यवसं दद्यात्तत्शीतं जलं तथा॥ ६॥
निम्बपत्रं जलोत्क्विन्नं भोजयेन्[1] मधुसर्पिषा।
अन्यैर्वा तिक्तकैः सिद्धान्[2] मुद्गान् हरितपीतकान्॥७॥
लोहितं चन्दनं लोध्रं मधुकं हरितालकम्।
कालेयं लवणं[3] लाक्षामजाक्षीरेण साधयेत्॥ ८॥
कल्केनानेन सिद्धञ्च तिलतैलेन मिश्रितम्[4]।
नस्यार्थञ्च कृतं तैलं घ्राणरोगेषु चोत्तमम्॥ ९॥
नावनं[5] कृतमश्वानां नासाव्रणविशोधनम्॥ १०॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे घ्राणरोगचिकित्सिते अष्टत्रिंशोऽध्यायः।

---

६। त्रिफलाक्वाथस्य प्रस्थः गुग्गुलोश्च कर्षद्वयम्। शीतलवारिणः षष्टिपलानि।

७। निम्बपत्राणां पलं जलाढ़के पक्का पादशेषं कृत्वा देयम्।

८। कालेयं कृष्णागुरु।

१०। नावनं नस्यम्।

---

१। भोजनं। गः।

२। सार्द्धं मुद्गात् साधिकान्वितान्। खः।

३। सारिवा। खः।

४। तिलतैलैर्जलेनतु। खः।

५। नावनीकृतम्। खः।

## अथैकोनचत्वारिंशोऽध्यायः ।

पादरोगसंख्या ।

अत ऊर्द्ध्वं प्रवक्ष्यामि पादरोगविनिश्चयम् ।
लक्षणञ्च चिकित्साञ्च यथाशास्त्रानुसारतः ॥ १ ॥
मण्डूकतापः[1] पांशुखुरस्तथा चैव पुनःखुरः ।
आस्रावी चूर्णिकोऽध्यस्थि ऊर्म्मिकश्चक्रवालिकः[2] ॥ २ ॥
उलूक[3]पादसंस्थानं तदा पादविरालिका[4] ।
आमण्डकोपजंघौ[5] च दर्भकश्च[6] प्रप्रोटकः ॥ ३ ॥
कदम्बको घृष्टतलस्तथा भिन्नखुरोऽपरः ।
मृदुमांसखुरौ द्वौ तु पिच्छपादसकेशिनौ[7] ॥ ४ ॥
एते पादगता रोगास्तुरङ्गानां प्रकीर्त्तिताः ।
एषां चिकित्सां वक्ष्यामि शालिहोत्रादिसम्मताम् ॥ ५ ॥

१—५ । मण्डूकतापादिकदम्बकपदान्ता त्रिंशतिविधाः पादरोगाः । एषां लक्षणचिकित्सितानि क्रमेणोच्यन्ते । अध्यस्थीति अस्थ्यधिकत्येत्यर्थः । उलूकपादसंस्थानं तदेत्यत्र उलूकपादः सस्थाणुस्तथेति पाठो भवितुं युक्तः । आमण्डकोपजंघावित्यत्र आमण्डक उपजंघाविति एवं पाठो भवितुं युक्तः ।

१ । मण्डूकता पांशुखुरः । खः । ४ । पदाविराड़िका । गः ।
२ । चक्रवाकिकः । खः । ५ । आमर्दकोपजंघा च । खः ।
३ । उदकः पाकसंस्थानम् । खः । ६ । गर्दभस्त्र । गः ।
७ । पिच्छपादस्तथैव च । खः ।

एषां लक्षणानि ।

मण्डकतापो मण्डूक्यां व्रणेनाश्वस्य जायते ।
अभिघातसमुत्थेन दुष्टकर्द्दमकेन च ॥ ६ ॥
पांशुभिः शर्कराभिश्च पूर्य्यते यस्य कोटरम् ।
तच्चे तस्य विजानीयाद्रोगं पांशुखुरं भिषक् ॥ ७ ॥
घृष्टं भूमौ तलं यस्य ताम्रीभवति वाजिनः ।
तस्य घृष्टतलो नाम पादरोगः प्रकीर्त्तितः ॥ ८ ॥
आस्राविणं विजानीयात् क्लेदस्रवतलं हयम् ।
सूक्ष्मचूर्णतलश्चैव चूर्णकीलः प्रकीर्त्तितः ॥ ९ ॥
केशाकाराणि मांसानि यस्य स्युस्तलजानि च ।
मांसकेशीति तं विद्यात्तलं वाहस्य बुद्धिमान् ॥ १० ॥
मण्डूक्या निवरं यस्य दर्भमुञ्जकरं[1] भवेत् ।
तस्य दर्भक इत्युक्तो व्याधिः कष्टचिकित्सितः ॥ ११ ॥

६ । मण्डूके वाजिखुरतलस्यप्रदेशे अभिघातजो दुष्टकर्द्दमजो वा यो व्रणस्तेन यस्तपो ज्वाला स मण्डूकतापः ।

७ । यस्याश्वस्य तले कोटरं पादतलस्थकोटरमित्यर्थः । शर्कराभि र्वालुकाभिः । पांशुखुरादिर्मांसकेश्यन्ताः पादतलस्था रोगा ज्ञेयाः ।

८ । क्लेदस्रवतलं पूयादिस्राविपादतलमित्यर्थः । अयमपि पादतलस्थो रोगः ।

११ । दर्भमुञ्जनिभमिति मुञ्जसदृशं दर्भसदृशञ्च ।

१ । मुञ्जदर्भनिभं । खः ।

पार्ष्णिजाः[1] पिण्डिका यस्य दृश्यन्ते तीव्रवेदनाः ।
तस्य विन्द्याद्भिषग्व्याधिं घोरं पादविरालिकम् ॥१२॥
प्रसरन्ति[2] खुरा यस्य अथवा पादुकोपमाः[3] ।
पुनःखुरीति तं विद्यादश्वं विह्वलगामिनम्[4] ॥१३॥
ऊर्म्मिकश्चोर्म्मिसंस्थानैर्वलिभिः खुरसम्भवैः ।
विन्द्या[5]च्छिन्नखुरं चैव यस्यान्यो जायते खुरः ॥ १४ ॥
बहुमांसखुरश्चैव ज्ञेयो मांसखुरो हयः ।
मृदुखुरश्च विख्यातो मृदुर्यस्य खुरो भवेत् ॥ १५ ॥
क्लिद्यन्ते[6] वलयो यस्य खुरसन्धिसमुद्भवाः ।
अक्लिन्ना वाथ सरुजस्तं विन्द्याच्चक्रवालिकम् ॥ १६ ॥
कूर्च्चमावृत्य[7] यः शोथो जङ्घायामुपजायते ।
उलूकपादो विज्ञेयो[8] न च शक्यश्चिकित्सितुम् ॥ १७ ॥

---

१२ । पार्ष्णिजा इत्यत्र पार्ष्णिः (गोगरि) ।

१३ । एते पुनः-खुरादिचक्रवालिकान्ता रोगाः खुरसम्भवा ज्ञेयाः ।

१४ । ऊर्म्मिसंस्थानैर्वलिभिस्तरङ्गसदृशैर्भङ्गिभिरित्यर्थः ।

१७ । कूर्च्चं किणानन्तरवर्त्तिप्रदेशम् ।

---

१ । पार्ष्णिका । गः ।
२ । प्रस्रवन्ति । गः ।
३ । अत्यर्थं पाण्डुकोपमाः । गः ।
४ । विकलगामिनम् । गः ।
५ । विद्यात् । गः ।
६ । क्लिद्यन्ति । खः ।
७ । आश्रित्य । खः ।
८ । विख्यातः । खः ।

रोमान्तः श्रूयते यस्य समन्तान्नैव पच्यते।
क्लेदश्च पिच्छिलो यस्य[1] पिच्छपादीति तं विदुः॥१८॥
प्रावृट्काले व्रणं यस्य जङ्घायामुपजायते।
स्थाणुरोगः स विज्ञेयो[2] दुष्टशोणितसम्भवः॥१९॥
ऊर्द्धभागे च कूर्चस्य मृद्वी या[3] गुटिका भवेत्।
आमण्डकाभिधो नाम्ना[4] जङ्घापार्श्वसमुद्भवः॥२०॥
प्रपोटकं विजानीयाद् ग्रन्थिभिः कूर्चसम्भवैः।
आमलक्यस्थिसङ्काशैः ग्रन्थिभिश्चातिकण्टकैः॥२१॥
कदम्बफलमात्रस्तु मण्डूकीमध्यसंस्थितः।
मांसाङ्कुरः कदम्बाख्यः श्लेष्मशोणितसम्भवः॥२२॥

अथ चिकित्सा।

सर्व्वेषां पादरोगाणां शिरावेधः प्रशस्यते।
तलजायाश्च रोमान्त्याः कूर्चजायास्तथैव च॥२३॥

१८। श्रूयते स्फीतो भवति।

२०। गुटिका ग्रन्थिः। (गुटलि)। आमण्डक आमर्द्दकश्च इत्यु-भय एव पाठस्तुल्यः।

२३। पादरोगेषु तलजादिशिरावेधः कर्त्तव्य इत्यर्थः।

---

१। योऽस्ति। गः।
२। विख्यातः। खः।
३। मृद्वीका। गः।
४। आमर्द्दकाभिधानः सः। खः।

अभिघातात् खुरतले व्रणं यस्योपजायते ।
दुष्टकर्द्दमसङ्गाद्वा तस्य कुर्य्यात् प्रतिक्रियाम् ॥ २४ ॥
छच्छादनकपात्रेण[1] मण्डूक्यां[2] तस्य शोधयेत् ।
अतितीक्ष्णेन शस्त्रेण छिन्नमांसञ्च कर्त्तयेत्[3] ॥ २५ ॥
तलजाञ्च[4] शिरां विद्धा रोमान्ताञ्च विचक्षणः ।
मोचयेच्छोणितं दुष्टं कषायैश्चोपनाहयेत् ॥ २६ ॥
गुग्गुलुं पाययेदश्वं त्रिफलाक्वाथयोजितम्[5] ।
एवं यदि न सिध्येत तदा वह्निं प्रदापयेत् ॥ २७ ॥
दग्ध्वा तमेव पानाय गुग्गुलूं पाययेद्भिषक् ।
सप्ताहं षोड़शाहं वा द्वादशाहमथापिवा ॥ २८ ॥
खादनं नैव[6] दातव्यं दूर्व्वा च यवसे हिता ।
शृतशीतञ्च पानाय उदकं तस्य कीर्त्तितम् ॥ २९ ॥

२४ । मण्डूकतापादिचिकित्सामाह अभिघातेत्यादिभिः ।

२५ । छच्छादनकपात्रेणेति पाठः पुस्तकद्वये साधुर्न लभ्यते। परन्तु छच्छादुत्पलपत्रेणेति पाठोऽत्रानुमीयते ।

२६ । अत्र केचिदङ्गवचनं पठन्ति ।

२७ । अयं श्लोकः ग-पुस्तके नास्ति ।

१ । कृत्वांदनकवकत्रेण । खः ।     २ । मण्डूकां । खः ।
३ । सङ्कीर्णान्तु दृढं बुधः । गः ।
४ । तलजं शोणितं दुष्टं कषायैस्तापि वाहयेत् । गः ।
५ । गुग्गुलुं पाययेद्वैद्यः शास्त्रोक्त्या ज्ञाननिश्चयात् । गः ।
६ । चैव । गः ।

तत्र रोगेषु सर्व्वेषु अयमेव क्रियाक्रमः।
कर्त्तव्यः सर्व्वदा वैद्यैः शास्त्रमार्गानुसारिभिः॥ ३०॥
छिन्द्याद्व्रणं ग्रन्थिपुरं रोमान्तादिव्यवस्थितम्।
प्रयच्छेद्विशुद्धन्तु औषधैर्व्वा विदारयेत्॥ ३१॥
स्नुह्यर्ककरवीराणां चित्रकस्य तथैव च।
मूलान्युद्धृत्य सर्व्वेषां गवां मूत्रेण पेषयेत्॥ ३२॥
एतेन लेपयेद्दुष्टं व्रणं वाहस्य बुद्धिमान्।
परिशुद्धन्तु विज्ञाय रोपणीयैरुपक्रमेत्॥ ३३॥
दन्तीचित्रकमूलन्तु स्नुह्यर्कपयसा सह।
भल्लातकास्थिकाशीषं लेपश्छिद्येोच्छलिलामपि॥ ३४॥
एवं यदि सुखी न स्यादग्निकर्म्म ततःपरम्।
दग्ध्वा तं पूर्व्ववद्दाहं गुग्गुलं पाययेद्भिषक्॥ ३५॥
त्रिफलाक्काथयुक्तस्तु सर्व्वेषां पादरोगिणाम्।

३०। तत्रेति खुरतले।

३३। रोपणीयैः रोपणाय हितैरौषधैरिति शेषः।

३४। रोपणौषधान्याह। दन्तीत्यादि। अर्कः (आकन्द)। भल्लातकास्थि (भेलारसुटि)। स्नुही (सिजु)। काशीषं (हिराकस)। अयं पाठो ग-पुस्तके नास्ति। अस्य चतुर्थपादो न लगति।

३५। अग्निकर्म्म चतुर्दशाध्यायोक्तमित्यर्थः।

प्रधानो गुग्गुलुर्द्दष्टस्तथा दाहस्य वाजिनाम् ॥ ३६ ॥
आमर्द्दकं पाटयित्वा दग्ध्वा तत्क्षणमेव च।
गुग्गुलुं पाययेत्तावद् यावद्दृढं व्रणं भवेत् ॥ ३७ ॥
माषपर्णीर्यवांश्चैव न दद्यात्तस्य वत्सरम्।
खादनाय समुद्दिष्टा यवा दूर्व्वा मनीषिभिः ॥ ३८ ॥
आमर्द्दकविधिः सर्व्वः कर्त्तव्यः पाटनं विना।
प्रपोटकेऽपि वाहस्य छित्वा चैव कदम्बकैः ॥ ३९ ॥
शिलासदृशकाठिन्यः शोथो जंघव्यवस्थितः।
अध्यस्थिसंज्ञितं विन्द्यान्मृदुश्चैवोपजंघिकम् ॥ ४० ॥
अग्निं दत्वा ततो वैद्यः कुर्य्यादामर्द्दकक्रियाम्।
शिरावेधो विशेषेण उपजंघेषु कीर्त्तितः ॥ ४१ ॥
एतेन यदि चारेण क्रियमाणेन शाम्यति।
पादरोगे तदा वैद्यः कुर्य्यात्कर्म्म पुनः पुनः ॥ ४२ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे पादरोगे एकोनचत्वारिंशोऽध्यायः।

---

३६। त्रिफलाक्वाथः प्रस्थद्वयमितः। गुग्गुलोश्च पलम्।

३९। कदम्बकैरित्यत्र कदम्बकमिति साधु मन्यामहे। एवं शिला-सदृशकाठिन्य इत्यादावपि द्वितीयान्तः पाठो भवितुं युक्तः।

४२। चारेण उपचारेणेत्यर्थः।

# अथ चत्वारिंशोऽध्यायः।

वातज्वरनिदानलक्षणानि।

कारणैः पूर्व्वमुद्दिष्टैः कुपिते मातरिश्वनि।
ज्वरो वातात्मिकोऽश्वस्य तदा भवति दुःसहः॥ १॥
गुरुत्वञ्चोष्णता चैव मस्तकस्योपजायते।
शोनता पर्व्वसन्धीनां चलनञ्चैव शंखयोः॥ २॥
स्तब्धाङ्गस्य तुरङ्गस्य ग्रासद्वेषेण बुद्धिमान्।
वातज्वरं विदित्वा तु ततः कुर्य्यात् प्रतिक्रियाम्॥ ३

चिकित्सा।

चिह्नतेन प्रसारिण्या अन्यैर्वातविनाशनैः।
तैलैरभ्यक्तिभाङ्गस्य कर्त्तव्ये स्वेदमर्द्दने[१]॥ ४॥
लंघनं कारयेत्तावद् यावन्मुक्तज्वरो भवेत्।

१। पूर्व्वमुद्दिष्टैः कारणैरिति सप्तत्रिंशत्यध्यायनिर्द्दिष्टैः तिक्तरुक्षक-षनिराहारश्रमादिभिरित्यर्थः। मातरिश्वनि वायौ।

३। स्तब्धाङ्गस्य निश्चलकायस्य।

४। अन्यैरिति प्रसारण्यादिभिरित्यर्थः।

१। उपजक्ति। गः।

अप्राप्तौ चिह्नतादीनां तैलयुक्तेन सर्पिषा ॥ ५ ॥
वसायुक्तेन[1] चाभ्यङ्गं तिलतैलेन कारयेत् ।
कषायः पञ्चमूलस्य सुरागोमूत्रसंयुतः[2] ॥ ६ ॥
निरूहः पिप्पलीकल्कयुक्तोऽतीव प्रशस्यते ।
तैलैर्वातहरैः सम्यक् हितं तस्यानुवासनम् ॥ ७ ॥

पित्तज्वरचिकित्सा ।

भोजनं[3] विहितं तस्य स्निग्धैर्मांसरसौदनैः ।
निदानैः पित्तजननैः[4] सेवितैः पित्तजो ज्वरः ॥ ८ ॥
स्वेददाहौ[5] वपुःशोषो रक्तनेत्रश्च जायते ॥ ९ ॥

---

५ । अप्राप्ताविल्येको योगः ।

६ । वसायुक्तेनेत्यपरो योगः । पञ्चमूलस्य पलदशकं वारिण-आढ़कचतुष्टयं पक्का पादशिष्टः कषायो ग्राह्यः । अथ तत्र पिप्पली-कल्कस्य पलं सुरागोमूत्रयोः पलं पलं मिश्रयित्वा निरूहो देयः ।

७ । अत्रानुवासने तैलस्य प्रस्थो ग्राह्यः ।

८ । भोजने मांसरसो वारिजानूपशूकरमहिषादिमांसैः सा-धनीयः ।

९ । पित्तजनकैः कट्वम्लादिभिरित्यर्थः ।

---

१ । रसाभ्यङ्गेन चाभ्यङ्गं । गः ।
२ । योजितः । गः ।
३ । विहितस्तस्य रोगस्य । गः ।
४ । पित्तकरणैः । गः ।
५ । स्वेददाहयुतः शोषा । गः ।

वदरीपत्रफेनेन तस्य गात्रं प्रलेपयेत् ।
वीजयेत्तोयसिक्तैश्च[1] तालवृन्तैर्भिषग्वरः ॥ १० ॥
अवगाहे जलेचैव स्नापयित्वाच तं हयम् ।
मस्तके दापयेत् प्राज्ञःशीतं धारजलं तथा ॥ ११ ॥
तस्याङ्गं सेचयेद्दध्ना काञ्जिकेन च बुद्धिमान् ।
क्षीरपानञ्च दातव्यं शर्करेक्षुसमन्वितम् ॥ १२ ॥
सकाशदूर्व्वेक्षुकुशैः[2] क्षीरपिष्टैः सितोत्पलैः ।
घृतयुक्तः प्रलेपश्च तस्य गात्रे प्रशस्यते ॥ १३ ॥
कुशकाशेक्षुमुस्तानां कल्कयुक्तः सपद्मकैः ।
क्षीरवस्तिः स्मृतस्तस्य मञ्जिष्ठाशर्करान्वितः ॥ १४ ॥

---

१० । वदरीपत्रफेनेनेति कोमलवदरीपत्राणां जलमर्द्दनोत्थेन फेनेनेत्यर्थः ।

११ । उक्तञ्च "ज्वरितानां तुरङ्गानां पयसैव क्रियाक्रमः" इति ।

१२ । अत्र दुग्धस्य प्रस्थः, इक्षोरसस्यार्द्धाढकः शर्करायाश्च पलाष्टकमुत्तमाश्वाय देयम् ।

१३ । काशः (केशेमूल) । इक्षुः (कृष्णेक्षुमूल) सिता शर्करा । उत्पलं (नीलशुद्धि) । एषां समो भागो ग्राह्यः ।

१४ । अत्र क्षीरवस्तौ दुग्धस्याढकः । कुशादिकल्को मिलित्वा दशपलमितः । पद्मकं (पद्मकाष्ठ) ।

---

१ । वीजयेत्तालवृन्तैश्च तोयसिक्तैश्च बुद्धिमान् । गः ।
२ । काशदूर्व्वेक्षुरसैश्च । गः ।

सर्पिषा सहितं तस्मै[1] यवान्नं भोजने[2] हितम् ।
शीतलञ्च जलं पाने ग्रासे दूर्व्वाच शस्यते ॥ १५ ॥
पित्तज्वरसमाकारौ रोगशेषौ निरामकौ ।
रोगे पित्तज्वरे प्रोक्ता तयोस्तां[3] कारयेत् क्रियाम् ॥१६॥
क्रोधादिभिः श्रमाच्चैव कट्वम्ललवणाशनात् ।
अनयोः सम्भवः प्रोक्तो ग्रीष्मवातोपसेवनात्[4] ॥ १७॥

श्लेष्मज्वरनिदानं ।

हेतुभिः श्लेष्मजननैः सेवितैः श्लेष्मसम्भवः ।
तेन तन्द्रा भवत्यस्य अरुचिर्गात्रसादनम् ॥ १८ ॥
उष्णाभिलाषो वाह्यानां नासास्रावश्च जायते ॥ १९ ॥

तच्चिकित्सा ।

मरिचञ्चैव पाठाञ्च मुस्तकं कटुरोहिणीम ।

---

१६ । पित्तज्वरो निरामज्वरश्चेत्युभावेव क्रोधादिसम्भवौ अतश्चिकित्सापि निरामज्वरस्य पित्तज्वरोक्ता एव ज्ञेया ।

१८ । श्लेष्मजननैः स्वाद्वादिद्रव्यातिशयभोजनरूपैरित्यर्थः ।

१९ । गात्रसादनं शरीरावसादः ।

---

१ । तस्मिन् । गः ।
२ । भोजयेत् । गः ।
३ । तयोः कुर्य्यात् क्रियां बुधः । खः ।
४ । निर्वातसेवनात् । गः ।

पिप्पलींचैव शुण्ठींच गुड़ूचीं चव्यकं वचाम्॥२०॥
वारिणा क्वाथयित्वा तु पादशेषं समाहरेत्।
कषाय एष दातव्यः पाने क्षौद्रेण योजितः॥२१॥
पञ्चतिक्तकसिद्धांश्च मुद्गांस्त्रिकटुकान्वितान्।
भोजयेन्मधुसंयुक्तान् सुखोष्णांश्चैव बुद्धिमान्॥२२॥
वालुकापुटकैः स्वेदो गात्रे मूर्ध्नि च दापयेत्।
शंखजाञ्च शिरां तस्य मन्याजाञ्चैव वेधयेत्॥२३॥

सन्निपातज्वरलक्षणचिकित्साः।

सर्व्वेषां चैव रूपाणि कुरुते सान्निपातिकः।
असाध्यः सतु विख्यातस्तस्य साधारणी क्रिया॥२४॥

अभिघातज्वरलक्षणचिकित्सा

कासः स्तम्भश्च[1] मूर्च्छा च सशोणितकफोद्गमः।
अभिघातसमुत्थे तु ज्वरे जृम्भा च जायते॥२५॥

---

२०—२१। मरीचादीनां पलं जलाढके पक्वा पादशेषः क्वाथो मधुकुड़वेन देयः।

२२। पञ्चतिक्तादीनां मिलितेन पलेन मुद्गस्य प्रस्थचयं प्रस्थं वा चतुर्गुणे वारिणि साधयित्वा मधुकुड़वेन कवोष्णं देयम्।

२५। स्तम्भो निश्चेष्टता।

---

१। कासशोणितमूर्च्छाश्च सशोणितकफोद्भवः। गः।

पञ्चवल्कलकल्केन घृतयुक्तेन वाजिनः।
लेपयेत्तस्य गात्राणि सशिरस्कानि बुद्धिमान्॥ २६॥
चन्दनोशीरमञ्जिष्ठावलामधुकपद्मकैः।
पयसा साधितं सर्पिस्तस्य पाने प्रशस्यते॥ २७॥
अनुवासनं निरूहञ्च भोजनञ्चैव पण्डितः।
पित्तज्वरसमुद्दिष्टं कुर्य्याद्बुद्धिमतांवरः॥ २८॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ज्वररोगे चत्वारिंशोऽध्यायः।

---

## अथैकचत्वारिंशोऽध्यायः।

---

अजीर्णलक्षणम्।

अजीर्णेन[1] भवेद्वाजी मन्दग्रासश्च[2] दुर्म्मनाः।
खञ्जपाणिश्च[3] जंघाभ्यां कृच्छ्रमूत्रपुरीषकृत्॥ १॥

---

२७। वला वाट्यालकं। मधुकं यष्टिमधु।
१। जंघाभ्यां सह खञ्जपाणिः।

---

१। अजीर्णतः। खः।
२। मन्दग्राससुदुर्म्मनाः। खः।
३। खुन्दत्यग्रिमजङ्घाभ्यां। खः।

यदि शोथो न जंघाभ्यामातुरस्य[1] न वा व्रणम् ।
अभिघातश्च नो कश्चित् तदाजीर्णेन खञ्जति ॥ २ ॥

तच्चिकित्सा ।

उपवासो हितस्तस्मै तावद्यावत्तु लङ्गति ।
अतिलङ्गं त्र्यहाद्दूर्द्धमस्तब्धमपि वारयेत् ॥ ३ ॥
कृतोपवासे[2] वाहे तु यथा तु प्रतिपानकैः ।
प्रतिपानं वारणीयं त्र्यहं पञ्चाहमेव च ॥ ४ ॥
अशुद्धे चारिते वाहे तथा जातबले भिषक् ।
सप्तरात्रात्परं विद्वान् शिरावेधं प्रयोजयेत्[3] ॥ ५ ॥
उरसा खञ्जतोऽश्वस्य औरसीं वेधयेत् शिराम् ।
जंघायां जांघिकीञ्चैव कूर्चजाः कूर्चलङ्गिते[4] ॥ ६ ॥

२ । अजीर्णज्ञानं कथं भवति तदाह— । शोथव्रणाभिघातं विनापि यदा खञ्जता वाजिनो दृश्यते, तदाजीर्णं जानीयादित्यर्थः ।

३ । वारयेदित्यत्र चारयेदिति पाठो युक्तः । चारयेत् स्तोकं स्तोकं भ्रामयेदित्यर्थः । अशुद्धमिति अकृतशिरावेधादिकम् ।

४ । विस्रगन्धेन आमगन्धेन ।

६ । दूदं पादद्वयं ख-पुस्तके नास्ति ।

1 । खुरस्यास्यः । खः ।
2 । ग्लानिं त्र्यहादूर्द्धं चैव । गः ।
3 । कृतो व्यवासो वाहस्य यथार्थं । खः ।
4 । प्रकल्पयेत् । खः ।
5 । कूर्चं यस्यापि लङ्गति । गः ।

पिण्डं हृद्गतुरङ्गस्य सायं मध्ये न दापयेत् ।
कटुकापिप्पलीशुण्ठीवचारामठसैन्धवैः ॥ ७ ॥
अशुद्धे गुग्गुलुर्देयः पूर्व्वोक्तेनैव कर्म्मणा ॥ ८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रेऽजीर्णचिकित्सिते एकचत्वारिंशोऽध्यायः ।

---

## अथ द्विचत्वारिंशोऽध्यायः ।

वाताद्यतीसारलक्षणचिकित्सितम् ।

अनिलेनाथ पित्तेन श्लेष्मणा चापि[1] वाजिनः ।
अतीसारस्तथाचान्यः सन्निपातेन जायते ॥ १ ॥
सङ्कोचिताङ्गः स्वानेन सकफं[2] योऽतिसार्य्यते ।
अल्पं तनु सशब्दञ्च पुरीषं बहु[3] वा हयः ॥ २ ॥
तस्य वातात्मकं विन्द्याद[4]तीसारं विचक्षणः ।
पित्तजञ्चैव वक्ष्यामि श्लेष्मजञ्च समासतः ॥ ३ ॥

---

७ । पिण्डश्च कटुकादिभिः षट्पलमितः कार्य्यः । पिण्डेत्यादि सार्द्धश्लोको ग-पुस्तके नास्ति ।

---

१ । वापि । खः ।
२ । सफेनं । खः ।
३ । बहु वाहयेत् । गः ।
४ । विद्यात् । खः ।

स्वेददाहपरीतानां[1] लक्षयेन्मतिमान् भिषक्।
स्रावेण नीलरक्तेन विस्रगन्धेन[2] पित्तजम्॥ ४॥
मन्दाहार[3]स्तथा वाहो हृष्टरोमातिपीड़ितः।
श्यामैः सपिच्छिलैर्भिन्नै र्विद्यात् श्लेष्मसमुद्भवम्॥ ५॥
सन्निपातात्मकञ्चैव सर्व्वेषां लक्षणैर्युतम्।
द्विरूपं द्वन्द्वजं ज्ञेयमतीसारं विचक्षणैः॥ ६॥
अतीसाराः समुद्दिष्टाः शालिहोत्रादिभिः पुरा।
एषां चिकित्सां वक्ष्यामि यथाशास्त्रानुसारतः॥ ७॥
येन शाम्यन्ति वाहानामतीसाराः सुदारुणाः।
बृहतीं शालिपर्णीञ्च पृश्निपर्णीं[4] निदिग्धिकाम्॥ ८॥
विल्वं शुण्ठीं कपित्थञ्च क्वाथयेत्सचिकण्टकम्।
एतेन[5] साधयेत् प्राज्ञो यवागूं शालितण्डुलैः॥ ९॥
दध्ना[6]म्लेन तु संयुक्तां दद्यात्तां भोजने[7] भिषक्।

८। ९। पृश्निपर्णीं (चाकुले)। निदिग्धिकां कण्टकारीं। अत्र यवाग्वर्थे शालितण्डुलस्य प्रस्थः। बृहत्यादीनां पलं जलद्रोणे पक्वार्द्धशिष्टः क्वाथो ग्राह्यः। अथ तेन क्वाथेन यवागूं पाचयेत्। इयं बृहत्यादिर्नाम यवागूः।

१। स्वेददाहोपजातानां। खः।
२। विषगन्धेन। गः।
३। मन्दाहारी तथा वाहे। खः।
४। तुर्गा। खः।
५। तेन संसाधयेत्। खः।
६। चाम्लदध्ना च। गः।
७। भोजयेत्। गः।

यवागूं साधयेद्यान्तु ह्रुत्यादिरुदाहृता ॥ १० ॥
क्काथः पाने प्रदातव्यो वातातीसारशान्तये ॥ ११ ॥

पित्तातिसारचिकित्सा ।

जम्बाम्रदाड़िमानान्तु क्काथयित्वा त्वचं बुधः ।
मधुना प्रतिपानाय दद्यात्पित्तातिसारिणे ॥ १२ ॥
चूर्णं वा मधुसंयुक्तं तैलयोगेन[1] दापयेत् ।
जम्बादीनां[2] प्रयोगेण पाठा[3] वा कुटजान्विता ॥ १३ ॥
अनेनैव कषायेण साधितां मधुसंयुताम् ।
यवागूं भोजयेद्वाहं[4] रक्तशालेस्तु तण्डुलैः[5] ॥ १४ ॥

श्लेष्मातिसारचिकित्सा ।

वीजं कुटजवृक्षस्य त्वक्चूर्णं दाड़िमाम्रयोः ।
मातुलुङ्गरसोपेतं सैन्धवेनावचूर्णितम् ॥ १५ ॥
लेहयेन्मधुसंयुक्तं श्लेष्मातीसारशान्तये ।
एतेषां वा कषायन्तु मधुना प्रतिपाययेत् ॥ १६ ॥

---

१२ । जम्बादीनां त्वचः पलं जलाढके पाच्यम् ।
१३ । जम्बादीनां चूर्णं पलं ग्राह्यम् ।
१५—१६ । कुटजवीजादिचूर्णं पलम् ।

---

१ । दलैर्युक्तेन । गः ।
२ । गन्धादीनां । खः ।
३ । पानं वा कुटजान्वितम् । गः ।
४ । वाहे । गः ।
५ । रक्तशालेश्च तद्गुणैः । गः ।

अनेनैव कषायेण साधितं यवतण्डुलैः ।
मधुसैन्धवसंयुक्तां यवागूं भोजयेत्ततः[1] ॥ १७ ॥

आमसन्निपातद्वन्द्वजातिसारचिकित्साः ।

पिप्पल्या लवणं शुण्ठी मरिचं चित्रकं वचा ।
आमातीसारिणे देयं सुरया पानमुत्तमम् ॥ १८ ॥
सन्निपातसमुत्थे तु कार्य्या साधारणी क्रिया ।
द्विरूपे द्विविधा चैव चिकित्सा परिकीर्त्तिता ॥ १९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रेऽतीसार-चिकित्सिते द्विचत्वारिंशोऽध्यायः ।

---

## अथ त्रिचत्वारिंशोऽध्यायः ।

पञ्चविधशूलनिदानलक्षणानि ।

सोभिक्ष्यश्चोर्द्ध्ववर्त्तिश्च[2] भिन्नवर्त्तिस्तथैव च ।
विबन्धस्नेहवर्त्तिश्च कुक्षौ शूलश्च पञ्चधा ॥ १ ॥

१८ । अत्र सुराप्रस्थः । पिप्पल्यादिचूर्णं षट्तोलकं ग्राह्यम् ।

१ । विबन्धस्नेहवर्त्तिरिति विबन्धवर्त्तिः स्नेहवर्त्तिश्च ।

---

१ । भिषक् ।ग: ।

२ । सुभिक्ष्योर्द्ध्ववर्त्तिश्च भिन्नवर्त्तिस्तथैव च । विविधस्नेहवर्त्तिश्च । ग: ।

गुरुभिः खादितैर्[1] नित्यं तथा स्नेहातियोगतः[2] ।
सौभिक्षो जायतेऽश्वस्य आमविड्वेगलक्षितः ॥ २ ॥
यवसं खादनश्चैव[3] यो वाजी खादितं पुनः ।
मुखेन प्रोज्झिरत्याशु तं विद्यादूर्द्ध्ववर्त्तिनम् ॥ ३ ॥
अतीसारेण संयुक्तं शूलं यस्योपजायते ।
भिन्नवर्त्तीति तं विद्यात्तुरङ्गं दीनचेष्टितम् ॥ ४ ॥
नोत्सृजेद्यः पुरीषं तु सानाहः शूलपीड़ितः ।
विबन्धवर्त्तिः सास्याहुस्तं विद्यात्कष्टजीवितम् ॥ ५ ॥
भिन्नं स्निग्धं पुरीषञ्च जायते यस्य वाजिनः ।
स्नेहातियोगात्तस्याशु स्नेहवर्त्तिं समादिशेत् ॥ ६ ॥

२। स्नेहातियोगतः घृताद्यधिकभोजनादित्यर्थः। आमविड्वेगलक्षित इति आमविट् अपक्वमलं तस्या वेगेन लक्षितः अनुमितः। प्रधानतोऽपक्वमलवेगेन सौभिक्षशूलमनुमीयते इत्यर्थः। लक्षणमिति पाठे स एवार्थः।

३। ऊर्द्ध्ववर्त्तिशूललक्षणमाह यवसमिति। यवसं घासः।

४। दीनचेष्टितं मन्दचेष्टम्।

५। सानाह आनाहेन विण्मूत्रसङ्गेन सह वर्त्तमानः। श्लोकोऽयं ग-पुस्तके लिपिकरप्रमादात् पतित इव लक्ष्यते।

१। खादनैः। गः।
२। स्नेहादियोगतः। गः।
३। खादने चैव। गः।

सौभिक्तविबन्धचिकित्साः ।

सौभिक्ते च विबन्धे च कृत्वा स्वेदं विचक्षणः ।
वक्ष्यमाणां ततः प्राज्ञः कुर्य्याद्वर्त्तिक्रियामिमाम् ॥ ७ ॥
आगारधूमं सुरसं पिप्पलीं सर्षपं वचाम् ।
सिन्धुवारीञ्च शुण्ठीञ्च तथा लवणपञ्चकम् ॥ ८ ॥
सुचूर्ण्य[1] च ततो वर्त्तिं कुर्य्यात्तप्तगुड़ेन तु ।
दैर्घ्यमष्टाङ्गुलं तस्याः स्थौल्यञ्चाङ्गुष्ठसम्मितम्[2] ॥ ९ ॥
प्रक्षिपेत्तां गुदेऽस्यस्य व्योपचूर्णावचूर्णितम् ।
सैन्धवक्षौद्रलिप्ताग्नु मलप्रच्युतिकारिणीम्[3] ॥ १० ॥
वर्त्त्यापहृतदोषस्य[4] वर्त्त्युक्तै[5]र्भेषजैस्ततः ।
सुराकाञ्जिकगोमूत्रैः प्रयुञ्जीतानुवासनम्[6] ॥ ११ ॥

८-१० । सुरसं गन्धहृणं । सिन्धुवारी मोचरसं । लवणपञ्चक-मुक्तं । इयमागारधूमादिवर्त्तिः कथ्यते ।

११ । शूले पिण्डमाह नकुलः-"सैन्धवं नागरं श्यामा गुड़ूची सितसर्षपाः । अम्लवेतससंयुक्तः पिण्डोऽयं शूलनाशनः" इति ॥ वर्त्त्य-धिकारैकथितौषधिमिश्रैः सुरादिभिरनुवासनवस्तिं प्रदद्यादित्यर्थः ॥

---

१ । संचूर्णितन्तु । गः ।
२ । स्थौल्येनाङ्गुलिसम्मितं । गः ।
३ । सैन्धवं क्षौद्रलिप्ताङ्गं मलप्रच्युतिकारणम् । गः ।
४ । वर्त्तिप्रहृतदोषस्य । गः ।
५ । वस्त्युक्तैः । खः ।
६ । अनुवासनं प्रयुञ्जीत सुरागोमूत्रकाञ्जिकैः । गः ।

आमं विना यदा शूलो वाताद्भवति दारुणः ।
अनुवासने[1] ततस्तैलं दातव्यं पूर्व्वनोदितम् ॥ १२ ॥
दुर्गन्धं पिच्छिलं[2] भिन्नं पुरीषं श्लेष्मणावृतम् ।
आमं भवति वाहस्य पक्वञ्चैव विवर्जयेत् ॥ १३ ॥
आमं[3] नैव प्रशंसन्ति वाजिशास्त्रविशारदाः ।
दौर्मनस्यारुचिग्लानिविण्मूत्रग्रहकारकम् ॥ १४ ॥
दत्तानुवासने वाहे शुद्धकोष्ठे विचक्षणः ।
अपरेऽहनि भुञ्जीत प्रतिपानमिदं ततः ॥ १५ ॥
हरेणुकाञ्च कुष्ठञ्च भार्गीं दन्तीञ्च चित्रकम् ।
लवणं व्योपचूर्णञ्च सुरया पाययेद्भिषक् ॥ १६ ॥
घासार्थं दापयेच्चूर्णं पानं कोष्णं जलं तथा ।
एवं यदि सुखी न स्याद्दाहः कुक्षौ तदा भवेत् ॥ १७ ॥

१२ । पूर्व्वनोदितमित्यत्र पूर्व्वनोदिते इति पाठो युक्तः ।

१६ । अत्र हरेणुकादिचूर्णस्य मिलितं पलं । सुरायाश्च प्रस्थो देयः । हरेणुकां (रेणुक) । अपरेऽहनीत्यादि शेषं यावत् ख-पुस्तके नास्ति ।

१७ । घासार्थं दापयेच्चूर्णमिति घासचूर्णं दापयेत् परिपाककरणासामर्थ्यादिति भावः ।

१ । अनुवासनेन तैलन्तु । गः ।
२ । पित्तभिन्नं । गः ।
३ । आमेनैव । गः ।

स्वकूलं प्रेक्षते वाजी उत्थानपतनैर्मुहुः।
कुञ्चितेन च गात्रस्य शूलं स्पष्टं करोत्यलम्॥ १८॥
श्यामजिह्वा समाध्माते ध्यायेन्निश्चलवालधिः।
रक्तमूत्रास्ततः शूली नच शक्यश्चिकित्सितुम्॥ १९॥

इति श्रीमहासामन्तजयदत्तविरचितेऽश्वशास्त्रे शूल-चिकित्सिते त्रिचत्वारिंशोऽध्यायः।

---

## अथ चतुश्चत्वारिंशोऽध्यायः।

उदावर्त्तलक्षणचिकित्सितम्।

पुरीषं वर्त्तितं यस्य कृच्छ्रं निर्याति वा पुनः।
वेदनार्त्तस्य वाहस्य तस्योदावर्त्तमादिशेत्॥ १॥

१८। स्वकूलमिति पाठो न सङ्गच्छते। स्वकूलस्थाने स्वकुल मित्येव पाठोऽनुमीयते।

१९। श्यामजिह्वासमाध्मात इत्यत्र श्यामजिह्वः समाध्मात इति पाठः साधुर्लक्ष्यते। समाध्मात उदराध्मानविशिष्ट इत्यर्थः।

१। वर्त्तितं प्रवर्त्तितमपीत्यर्थः। पुरीषमित्यादिः श्लोकः ख-पुस्तके नास्ति।

आरग्वधकषायेण मूर्च्छितं[1] घृतयोजितम्।
यावकं भोजने तस्मै स्नेहवस्तिञ्च दापयेत्॥ २॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे उदावर्त्त-चिकित्सिते चतुश्चत्वारिंशोऽध्यायः॥

---

## अथ पञ्चचत्वारिंशोऽध्यायः।

प्रस्कन्नरोगलक्षणचिकित्सितम्।

गुरुर्यस्य भवेद्वक्षः स्तब्धगात्रपरिक्रमः।
कुञ्जीभूतेन पृष्ठेन यो वाजी याति बद्धवत्॥ १॥
प्रस्कन्नरोगसन्तप्तं[2] विद्याद्बुद्ध्या च तं भिषक्।
चिकित्सां तस्य वक्ष्यामि भाषितां मुनिसत्तमैः॥ २॥
आज्यं त्रिकुटकोपेतं पाययेत्तं विचक्षणः।
ततः स्निग्धस्य कर्त्तव्यः शिरावेधो यथोदितः॥ ३॥

२। यावकं कुलत्थं घृतभर्जितं दापयेदित्यर्थः। गुरुर्यस्येति यः पाठः पुस्तकद्वयेऽपि दृश्यते स न साधुः। गुरु यस्येत्येव साधुः पाठो वक्षसः क्लीवत्वात्।

३। घृतस्य प्रस्थः। त्रिकटुकस्य च पादोनं पलम्।

१। मूर्च्छितां घृतयोजिताम्। याविकां। खः।
२। प्रस्कन्दरोगसन्तप्तं। खः।

औरसीं पादिकीं तस्य तलजां कूर्चजामपि ।
पूर्व्वकाये शिराशस्ते भेषजं तद्विचक्षणः ॥ ४ ॥
औपाण्डीं पश्चिमे काये स्थौरिकीं कूर्चजां तथा ।
विध्यात् शिराशस्त्रमुखे देयं कर्द्दमलेपनम् ॥ ५ ॥
विद्धं न चारयेद्वाहमेकरात्रं विचक्षणः ।
वक्ष्यमाणं ततः पानमपरेऽह्नि प्रदापयेत् । ६ ॥
त्रिफलाक्वाथसंयुक्तस्तथा क्षौद्रसमन्वितः ।
गुग्गुलुः प्रतिपानाय देयः प्रस्कन्ननाशनः ॥ ७ ॥
ग्रासार्थं दापयेद्दूर्व्वाः पाने चैव मधूदकम् ।
अथवा पिप्पलीतोयं प्रशस्तं तस्य वाजिनः ॥ ८ ॥
पञ्चमूलकषायस्तु तिलतैलेन योजितः ।

४-५ । शिरावेधः कुत्र कर्त्तव्य इत्याह । पूर्व्वकाये औरस्यादि-कूर्चजान्ताः शिरा विध्यात् । शिराशस्त्र तच्छिराक्षतमुख इत्यर्थः कर्द्दमालेपनं देयम् । तथा पश्चिमे काये औपाण्ड्यादिकूर्चजान्ताः शिरा विध्यात् तथा शिराक्षतमुखे कर्द्दमालेपनं देयमित्यर्थः । तत इत्यादि एकरात्रं विचक्षण इत्यन्तः पाठो ग-पुस्तके नास्ति ।

७ । अत्र त्रिफलापलसिद्धः कषायप्रस्थः । मधुनः पलं गुग्गुलोश्च पलं ग्राह्यम् ।

८ । समधुपलं वारिणः पलषष्टिकं देयम् ।

हेमन्ते क्षारसंयुक्तो देयः प्रस्कन्नपीड़िते ॥ ९ ॥
यदि सिद्धिर्भवेन्नैव भेषजानामुपक्रमैः।
ततो वह्निः प्रदातव्यो वाहोर्वक्षसि कूर्चके ॥ १० ॥
दग्धाग्रेर्गुग्गुलुः शस्तो वाहस्य त्रिफलायुतः।
भ्रामणञ्चैव वाहानां प्रस्कन्नव्याधिशान्तये ॥ ११ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे प्रस्कन्नचिकित्सिते पञ्चचत्वारिंशोऽध्यायः।

---

## अथ षट्चत्वारिंशोऽध्यायः।

कृमिकोष्ठनिदानचिकित्सितम्।

कृशस्य यस्य वाहस्य जन्तुभिः परिवेष्टितम्।
पुरीषं जायते भिन्नं तं विन्द्यात् कृमिकोष्ठकम् ॥ १ ॥
श्लेष्मकोष्ठी समुद्दिष्टो मन्दाहारस्तुरङ्गमः।
दुर्ब्बलो भिन्नरोमा च गुरुगात्रस्तथैव च ॥ २ ॥
पुरीषं श्लेष्मणा मिश्रं पिच्छिलं तस्य सर्व्वदा।
निद्रा च जायतेऽत्यर्थं तन्द्रा चैव समन्विता ॥ ३ ॥

---

९। तिलतैलस्य कुडवः। क्षारस्य पादोनं पलं देयम्।

तत्रादौ कृमिकोष्ठस्य क्रियां वक्ष्यामि तत्त्वतः।
आज्यमस्मै प्रदातव्यं मांसक्षीरेण साधितम्॥ ४॥
षष्टिकान्नं तिलाः[1] क्षीरं गुडञ्च दधिमिश्रितम्।
कृमिकोष्ठाय दातव्यं भोजनं तावदग्रतः[2]॥ ५॥
विड़ङ्गं चित्रकं पाक्या दन्ती च[3] निचुलं तथा।
कम्पिल्लकञ्च तुल्यांशं कषायं कारयेद्बुधः॥ ६॥
कम्पिल्लकस्य कल्केन कषायेणामुनैव[4] तु।
विड़ङ्गचूर्णसंयुक्तं सिद्धं सर्पिः प्रदापयेत्॥ ७॥
घृतं विड़ङ्गसंयुक्तं सिद्धसर्पिः प्रदापयेत्।
दन्तीकषायकल्केन साधितञ्च प्रदापयेत्॥ ८॥
घृतं विड़ङ्गसंयुक्तं दृष्टकर्म्मा विचक्षणः।
द्वे हरिद्रे विड़ङ्गानि तथा लवणपञ्चकम्॥ ९॥

६। विड़ङ्गादिघृतमाह विड़ङ्गमित्यादि। पाक्यो यवक्षारः। कम्पिल्लकं (कमल्लागुड़ि)।

८। श्लोकोऽयं ग-पुस्तके नास्ति।

१। षष्टिकान्नतिलं। गः।

२। ध्यक्रमः। खः।

३। श्यामा द्रवन्ती दन्ती च। खः।

४। ध्यम्बुनैव। खः।

पटोलं निम्बपत्रञ्च वचां चित्रकमेव च ।
पिप्पलीशृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ॥ १० ॥
एतत्पानं[1] प्रदातव्यं सुरया क्रमिनाशनम् ।
चूर्णपानप्रयोगोऽयं[2] श्लेष्मकोष्ठे प्रशस्यते ॥ ११ ॥
मन्दाग्निदीपनोऽत्यन्तं शालिहोत्रेण कीर्त्तितः ॥ १२ ॥

श्लेष्मकोष्ठनिदानचिकित्सिते ।

श्लेष्मकोष्ठी समुद्दिष्टो मन्दाहारस्तुरङ्गमः ।
क्रमिकोष्ठोदितां कुर्य्यात् श्लेष्मकोष्ठेऽपि च क्रियाम् ॥१३॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे क्रमिकोष्ठ-श्लेष्मकोष्ठचिकित्सिते षट्चत्वारिंशोऽध्यायः ।

---

११। "स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम्। पिण्डोऽयं हन्ति मध्यस्थान् उदरस्थान् क्रमिव्रणान्" इति नकुलः। परिभाषा नियमेन घृतमिदं साधयित्वा पाययेत्।

---

१ । एष पाने प्रदातव्यः । खः ।
२ । प्रयोगश्च । गः ।

## अथ सप्तचत्वारिंशोऽध्यायः।

वातादिमूत्रग्रहलक्षणानि।

स्तोकं स्तोकं सफेनञ्च कृच्छ्रान्मूत्रं करोति यः।
तस्य वातसमुत्थन्तु विद्यान्मूत्रग्रहं बुधः॥ १॥
दाहोच्छ्वासयुतः पित्तान्मूत्ररोगः प्रजायते।
वाजिनः पीतमूत्रस्य मूत्ररोगः प्रजायते॥ २॥
वाजिनः पीतमूत्रस्य अथवा रक्तमूत्रिणः।
कफजे मूत्ररोगे तु सान्द्रमूत्रं सपिच्छिलम्॥ ३॥
स्तोकं स्तोकञ्च कुरुते वेदनार्त्तस्तुरङ्गमः।
एकधा नोदयस्तेषां जायते सन्निपातजः॥ ४॥
अत्र साधारणीं कुर्य्याच् चिकित्सां वक्ष्यमाणिकाम्।
मेढ्राभ्यासे तथा वस्तिं घृतेनाभ्यज्य वातिके।
मर्द्दयेत्तदनुस्रोतो लघुहस्तैः शनैः शनैः॥ ५॥
पाषाणभेदकं शुण्ठी गोक्षुरं बृहतीद्वयम्।

२। दाहोच्छ्वासयुत इति दाहो ज्वाला उच्छ्वासः अन्तर्मुखनिःश्वासस्तु तेन युतः।

४। तेषां वातादिमूत्रग्रहलक्षणानाम्। एकधा उदयो न जायते अपितु अनेकधा विविधप्रकारमित्यर्थः। उदय आविर्भावः।

५। अनुस्रोतः स्रोतोऽनुलोमत इत्यर्थः।

६। पाषाणभेदः। (पाथर् कुचा)। वर्षाभूः (श्वेतपुनर्नवा)।

एरण्डमूलं वर्षाभूरनन्ताच शतावरी ॥ ६ ॥
कषायं वारिणा कृत्वा यवानां तण्डुलैर्भिषक्।
साधयित्वा ततो मण्डं पाययेद्वातमूत्रिणम् ॥ ७ ॥
एतेनैव कषायेण मिश्रितं वा सुखावहम्।
भवेद्ग्रासस्य पानं वा वातिके मधुमूर्च्छितम् ॥ ८ ॥

पित्तमूत्रग्रहचिकित्सा।

एर्व्वारुकस्य[1] वीजानि त्रपुसस्य तु[2] पित्तजे।
पिष्ट्वा शर्करया सार्द्धं दद्यात्तण्डुलवारिणा ॥ ९ ॥
शृतं कशेरुशालूकै[3]स्तथा शृङ्गाटकेन च।
पाने शस्तं स्मृतं क्षीरं शर्करेक्षुरसान्वितम् ॥ १० ॥
नलकाशेक्षुदर्भाणां क्वाथं पाने प्रदापयेत्।
पित्तमूत्रग्रहे वैद्यः क्षीरवस्तिञ्च बुद्धिमान् ॥ ११ ॥

एषां समभागं पलं जलाढ़के पक्वा पादशिष्टः क्वाथो ग्राह्यः। तेन क्वाथेन मण्डो देयः।

९। एर्वारुकस्य कर्कटीविशेषस्य। त्रपुषस्य शसा इति प्रसिद्धस्य। तण्डुलवारि प्रस्थमितं।

१०। कशेरुः (केशुर)।

११। नलादीनां पलं। जलाढ़के पादशिष्टं देयम्। क्षीरवस्तौ दुग्धस्याढ़कः ग्राह्यः।

१। कर्कटीकस्य। गः।
२। त्रिपुसी चापि। गः।
३। कषरुकैश्च। गः।

त्रिके धाराजलं देयं कर्द्दमालेपनं तथा।
शीतं स्थानं हितं प्रोक्तं प्रवातं व्यजनानिलम्[१] ॥ १२ ॥

श्लेष्ममूत्रग्रहचिकित्सा।

श्वदंष्ट्रां शृङ्गवेरञ्च पूतिकं[२] पिप्पलीं तथा।
श्लेष्मजे मूत्ररोगे तु लाजमण्डेन दापयेत् ॥ १३ ॥
कौलत्थं पाययेद् यूषं तिक्तमुद्गैश्च भोजनम्।
तैलाभ्यङ्गो भवेद्वस्तौ माषस्वेदः कफात्मके ॥ १४ ॥
श्वदंष्ट्रा शृङ्गवेरञ्च पूतीकं पिप्पली तथा।
पित्तमूत्रग्रहप्रोक्तां क्रियां सर्व्वां प्रयोजयेत् ॥ १५ ॥
वस्तौ प्रक्षालिते वैद्यस्तुरङ्गानां विचक्षणः।
हितं वलितवस्तिभ्यो[३] लाक्षापद्माङ्गचूर्णकम् ॥ १६ ॥
मधुना सह संयुक्तं पाने गोपयसा युतम्।
मूत्रेण सह यस्य स्याद्वेदनार्त्तस्य वाजिनः ॥ १७ ॥

१२। त्रिके पृष्ठवंशाधोभागे।

१३। श्वदंष्ट्रा गोक्षुरं। शृङ्गवेरं शुंठी। पूतिकं पूतिकरञ्जं।

१६। वलितवस्तिभ्यः सम्पादितवस्तिकर्म्मभ्य इत्यर्थः। पद्माङ्ग (वकमकाष्ठ)। रक्तचन्दनं वा।

१। प्रवातव्यजनानिलैः। खः।
२। पूतिकां। गः।
३। हितं प्रक्षाल्यते वैद्यः। गः।

शर्कराणां प्रपातस्तु स ज्ञेयो मूत्रशर्करी ।
कुष्ठशिग्रुविड़ङ्गानि हिङ्गुतुम्बुरुकं तथा ॥ १८ ॥
सैन्धवञ्चाश्मभेदञ्च कल्कं कृत्वा विचक्षणः ।
तत्कल्कं यवभक्तञ्च सुरया सह मर्द्दयेत् ॥ १९ ॥
मूत्रशर्करिणो दद्याद् भोजने सततं बुधः ।
रजनीक्षारवद्भस्म गालयित्वा पलाशजम् ॥ २० ।
गृहीत्वा तज्जलं प्राज्ञः पुनः कृत्वा पयःस्रुतम्[1] ।
ब्रह्मरपामार्गसूक्ष्मैलाकुलत्थाष्टकवर्गकैः ॥ २१ ॥
सुपिष्टं तेन तोयेन पानं शर्करिणो[2] हितम् ॥
शुक्रं मेहति यो वाजी शुक्रमेहीति तं विदुः ॥ २२ ॥

---

१८ । तुम्बुरुः (धने) ।

१९ । सुराप्रस्थेन सैन्धवादीनां पलम् ।

२०—२२ । रजनी हरिद्रा लाक्षा वा । तस्याः क्षारं पलाशजं क्षारञ्च समभागं वारिणा गोलयित्वा दोलायन्त्रेण परिस्राव्य तेन तोयेन ब्रह्म्यादिकल्कं संमिश्र्य पाययेत् । "जीवकर्षभकौ मेदे काकोल्यावृद्धिवृद्धिकौ । अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः" । इति ॥

---

१ । पटस्रुतं । गः ।
२ । पानं शर्करिणां । गः ।

अयमेव विधिः कार्य्यः मुक्रमेहेऽपि वाजिनः।
वड़वां वाहयेद्वापि दृष्टकर्म्मा भिषग्वरः॥ २३॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे मूत्रग्रह चिकित्सिते सप्तचत्वारिंशोऽध्यायः।

---

## अथाष्टचत्वारिंशोऽध्यायः।

### कुष्ठरोगलक्षणचिकित्सितम्।

अलोमिकां ग्रन्थिमतीं तथा वै व्रणसंयुताम्।
त्वचं कुष्टमहारोगः करोत्यश्वस्य दारुणाम्॥ १॥
गवां मूत्रपरीषाभ्यां स्वेदस्तु व्रणिनो हितः।
कुष्ठरोगेषु सर्व्वेषु समीपे वेधयेच्छिराम्॥ २॥
निम्बपत्रं पटोलञ्च त्रिफला खदिरं तथा।
तत्क्वाथं पाययेद्वाहं सुतरक्तं विचक्षणः॥ ३॥
त्र्यहमेतत् प्रदातव्यं पानं कुष्ठप्रशान्तये।
ततः परं प्रयोक्तव्यं पानं यद्वक्ष्यमाणकम्॥ ४॥
त्रिवृताञ्च हरिद्राञ्च मदनं कटुरोहिणीम्।
पाटलां त्रिफलां दन्तीं निम्बं मूर्व्वां तथा वचाम्॥ ५॥

---

१। सुतरक्तं क्षतरक्तस्रावं।

कृत्वा कषायं मतिमान् कुष्ठरोगेषु दापयेत् ।
पानाय मधुना सार्द्धं सिद्धं भोजनमुत्तमम् ॥ ६ ॥
लोहितं चन्दनं दूर्व्वामुशीरं कटुरोहिणीम् ।
पिष्ट्वा निम्बपटोलञ्च व्रणे कुष्ठे प्रलेपयेत्[1] ॥ ७ ॥
अर्काश्वमारयोः पत्रं सर्षपं पिप्पलीं वचाम् ।
मरिचं शृङ्गवेरञ्च दन्तीमूलं सचित्रकम् ॥ ८ ॥
गवां मूत्रेण संपिष्य लवणैः सह योजयेत् ।
संलिप्य तेन कुष्ठानि व्रणहीनानि मर्द्दयेत् ॥ ९ ॥
व्रणेषु चैव सर्व्वेषु तैलं सर्षपजं हितम् ।
कल्केनानेन संयुक्तमभ्यङ्गे मर्द्दने सदा ॥ १० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे कुष्ठ-चिकित्सितेऽष्टचत्वारिंशोऽध्यायः ।

---

५—७। पाटलेत्यादिलोहितान्तः पाठो ग-पुस्तके नास्ति ।
१०। कल्केनानेनेति उपर्य्युक्तेन अर्कादिकल्केनेत्यर्थः ।

---

१। प्रयोजयेत् । ग। ।

## अथैकोनपञ्चाशत्तमोऽध्यायः ।

वातादिशोथलक्षणचिकित्साः ।

शोथे चिकित्सां वक्ष्यामि वातपित्तकफान्विते ।
सन्निपातसमुत्थे च रूपं पञ्चैव कीर्त्तितम्[1] ॥ १ ॥
वेदनास्थौल्यसंयुक्तं मृदुस्पर्शञ्च शीतलम् ।
शोथं वातात्मकं विद्याद्वाजिदेहसमुद्भवम् ॥ २ ॥
रक्तपित्तेन शोथः स्यात् कृष्णपाकेन संयुतः ।
वेदनोष्मसमायुक्तो नात्यन्तोच्छूनकस्तथा ॥ ३ ॥
कठिनत्वमहत्वाभ्यां युक्तं रुग्दाहवर्ज्जितम् ।
श्लेष्मशोथं विजानीयाद्रक्तजं पित्तलक्षणम्[2] ॥ ४ ॥
सर्व्वलिङ्गं विदुर्वैद्याः सन्निपातसमुद्भवम् ।
द्विचिह्नं द्वन्द्वजं प्राहुर्मुनयः शास्त्रकोविदाः ॥ ५ ॥
शोथानां मारुतादीनां सर्व्वदोषापकर्षणम् ।
एकतश्च क्रियाः सर्व्वा रक्तमोक्षणमेकतः ॥ ६ ॥
अनुलेपसहस्राणि अनुलेपशतानि च ।
रक्तविन्दुविमोक्षस्य कलां नार्हन्ति षोड़शीम् ॥ ७ ॥

१ । चैव यथाक्रमम् । खः ।
२ । रक्तोद्भवो रक्तपित्तेन शोथः स्यात् पाकसंवृतः । गः ।

प्रच्छन्नेन जलौकाभिः शिरावेधेन वा भिषक्।
सर्व्वेषामेव शोथानां रक्तमाकृष्य बुद्धिमान्॥ ८॥
पूर्व्वशास्त्रसमुद्दिष्टां ततः कुर्य्यात् क्रियामिमाम्।
भेषजैः सघृतैः सम्यक् शोथरोगोपशान्तये॥ ९॥
शोथे वातसमुद्भूते तैलाभ्यङ्गः प्रशस्यते।
स्वेदो गोमयपिण्डेन पुटैश्चैरण्डपत्रकैः॥ १०॥
पिप्पलीशुण्ठिवर्षाभूदेवदार्वर्कशिग्रुभिः।
तुरङ्गानां स्मृतो लेपः शोथे वातसमुद्भवे॥ ११॥
गोधावतीमहाकाली[१]वरुणालम्बुषोद्भवैः॥
मूलैर्गोमूत्रसंपिष्टैः प्रलेपस्तस्य शस्यते॥ १२॥
पञ्चमूलकषायस्तु तिलतैलेन योजितः।
प्रातः पाने प्रयोक्तव्यो भोजने च रसौदनः॥ १३॥

८। प्रच्छन्नेन परिच्छन्नेन।

१०। शोथादीति श्लोकद्वयं ख-पुस्तके नास्ति।

१२। गोधावती (गोयालिया लता)। महाकाली लताविशेषः। माकाल् इति प्रसिद्धा। महाजालीति पाठोऽप्यस्ति। महाजाली पीतघोषा। अलम्बुषा लज्जालुका लता।

१। महाकाल। खः।

पित्तशोथचिकित्सा ।

मञ्जिष्ठाधातकीलोध्रसारिवानन्तपद्मकैः ।
प्रलेपाः पित्तशोथेषु क्षीरवस्तिश्च कीर्त्तितः ॥ १४ ॥
कुशकाशनलेक्षूणां मूलक्वाथः सशर्करः ।
शस्तः पाने प्रभाते तु मधुमाचासमन्वितः ॥ १५ ॥
पञ्चतिक्तकसंसिद्धैर्गव्यसर्पिःसमन्वितैः ।
भोजनं विहितं मुद्गैः शालिभिर्वा[1] पयोऽन्वितैः ॥ १६ ॥

श्लेष्मशोथचिकित्सा ।

रूक्षः स्वेदः प्रदातव्यः इष्टकासिकतापुटैः ।
श्लेष्मशोथे प्रलेपश्च[2] कर्त्तव्यो यस्तु वातजे ॥ १७ ॥
वचाव्योपविडङ्गैलाकुष्ठजीरकसैन्धवैः ।
गोमूत्रपिष्टैः सुरया[3] प्रतिपानञ्च कीर्त्तितम् ॥ १८ ॥
शुण्ठीमरिचसंयुक्ताः पिप्पलीक्षौद्रमिश्रिताः[4] ।

---

१७ । इष्टकासिकतापुटैः खर्परवालुकापुटैः । वातजोक्तलेपश्च अत्र प्रयोज्य इत्यर्थः ।

१८ । वचादीनां पलं गोमूत्रपिष्टं सुराप्रस्थेन देयम् ।

---

१ । शालिक्षहीसमन्वितैः । ग० ।
२ । श्लेष्मशोथप्रलेपः । ग० ।
३ । सुधिता । ग० ।
४ । योजिताः । ख० ।

सुस्विन्ना भोजने शस्ताः कुलत्थास्तैलयोजिताः[1] ॥१९॥
क्रिया सधारणी कार्य्या सन्निपातसमुद्भवे।
द्वन्द्वजा द्विविधाः प्रोक्ताः शालिहोत्रादिभिः पुरा॥२०॥
रक्तजे पित्तजोद्दिष्टा चिकित्सा परिकीर्त्तिता।
अभिघातोद्भवे शोथे हितं यत्तद्विवक्षते[2] ॥ २१ ॥
पञ्चवल्कलकल्केन सघृतेन मुहुर्मुहुः।
औदुम्बरेण वा विद्वांस्तद्विलेपं प्रदापयेत्॥ २२ ॥
पूर्व्वोद्दिष्टेन विधिना मोक्षयेत्तस्य शोणितम्।
एवमागन्तुना वाहः शोथेनाशु प्रमुच्यते ॥ २३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शोथचिकित्सिते एकोनपञ्चाशत्तमोऽध्यायः॥

---

१९। सुस्विन्ना अग्नौ वारिणा सिद्धा इत्यर्थः।

२०-२१। क्रियादिश्लोकद्वयं ग-पुस्तके नास्ति।

---

१। तैलमिश्रिताः। ख०।

२। उद्दिष्टं तच्च कथ्यते। ग०।

# अथ पञ्चाशत्तमोऽध्यायः।

मुष्करोगे

वाताण्डलक्षणचिकित्सितम्।

प्रकोपान् मारुतादीनां कारणैः पूर्व्वचोदितैः।
अण्डस्कन्द[1] स्तुरङ्गानां जायते बहुसंज्ञकः॥ १॥
तस्य रूपं चिकित्साञ्च भेदञ्चैव समासतः।
प्रवक्ष्यामि यथायोगं वाजिनां हितकाम्यया॥ २॥
वृषणौ दूषयेद्वायुः श्लेष्मणा यस्य संयुतः[2]।
तस्य मुष्कश्वलत्येको रोगो वाताण्डसंज्ञकः॥ ३॥
यदाण्डं क्रमाद्यस्य तेन पादेन[3] खंजति।
स्तब्धपृष्ठस्य[4] तस्याशु वेदना मुष्कयोर्भवेत्॥ ४॥

१। सम्प्रति त्रिविधाण्डस्कन्दरोगस्य निदानचिकित्सिते विवक्षुराह प्रकोपादिति। पूर्व्वचोदितैः वातादिप्रकोपकथनाध्याये कथितैः कारणैरित्यर्थः। मारुतादीनां वातपित्तकफानामित्यर्थः। प्रकोपः अण्डेषु स्कन्दइव अण्डस्कन्दो जायते। बहुसंज्ञक इति वातपित्तकफात्मकः।

२। यथायोगमिति योगमनतिक्रम्य यस्मिन्नधिकारे यो योगः तदनुसारेणेत्यर्थः।

१। अण्डस्तुत। गः।
२। पोषितः। गः।
३। तेन गात्रेण। गः।
४। यस्य च पृष्ठवाहस्य। गः।

आपाण्डीं वेधयेत्तस्य शिरां पूर्व्वं विचक्षणः ।
अभ्यङ्गञ्च भिषक् कुर्य्यान्मुष्कयोः सर्पिषा ततः ॥ ५ ॥
सुखोष्णौदनं शस्तं क्षीरैर्गव्यादिभिस्तथा ।
अनुवासनञ्च कर्त्तव्यं तैलैस्तु घृतपूर्व्वकैः ॥ ६ ॥
हयगन्धस्य वृक्षस्य मूलमुत्कृत्य पेषयेत् ।
सघृतं दापयेद्वाहे वातार्त्तस्तेन सिध्यति ॥ ७ ॥
सौवर्चलं रसोनञ्च हिङ्गुसौवर्चलान्वितम् ।

५ । वाताण्डचिकित्सामाह । वाताण्डे खञ्जतायुपद्रवे सति तदुपशमार्थं पूर्व्वं आण्डशिरां वेधयत् संवेध्य च शोणितमोक्षणं कार्य्यमित्यर्थः । सर्पिषा मुष्काभ्यङ्गञ्च वेदनाशान्त्यर्थमित्यर्थः । कुर्य्यात् ।

६ । पथ्यञ्च सुखोष्णपायसौदनं देयम् ।

८ । हयगन्धस्येत्यादि द्विसप्तकमित्यन्तः पाठः ख-पुस्तके नास्ति । कुलत्थेति । कुलत्थाः ( कुड़्तिकड़ाइ ) । यवाः प्रसिद्धाः । कोलाः वदराः (कुल) तेषां । पञ्चमूल्या इति विल्वश्योणाकगाम्भारी-पाठलागणिकारिकाणञ्च मिलित्वा अष्टौ पलानि वारि च विंशति-पलमितं गृहीत्वा पादशषः कर्त्तव्यः । स्नेहद्रव्यञ्च क्वाथचतुर्थांशं ग्राह्यम् । निरूहद्रव्यमाने वाभटः । "क्वाथे तु विंशतिपले द्रव्यस्याष्टौ पलानि च । ततः क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत्," इति ।

१ । अपाण्डीं । खः ।
२ । पूर्व्वां । खः ।
३ । ओदनैः शस्तं क्षीरं । गः ।

सघृतं कुष्ठसंयुक्तं दापयेत्तद्बुधो भिषक्।
निहन्त्यामयमण्डानां सप्तकं वा द्विसप्तकम ॥ ८॥
कुलत्थयवकोलानां पञ्चमूल्यास्तथैव च।
क्वाथेन तैलयुक्तेन[1] निरूहं संप्रयोजयेत्[2] ॥ ९ ॥
मांसानां रसकैः स्निग्धैर्भोजनं तत्र[3] शस्यते।
ग्रामे दूर्व्वार्जुनौ वापि जलं कूपात्समुद्धृतम् ॥ १० ॥
ग्रामप्रतिहता यस्तु कृच्छ्रमूत्रपुरीषयोः।
तत्र पृष्ठे समाध्मातो न स शक्यश्चिकित्सितुम् ॥ ११ ॥

पित्ताण्डलक्षणचिकित्सितम्।

शूनता मुष्कयोश्चैव रक्तता[4] कृष्णतापि वा।
भवेत् पित्तेन दुष्टेन पिड़कानाञ्च[5] सम्भवः ॥ १२ ॥

१० । पथ्यमाह । मांसेत्यादि ।

११ । असाध्यत्वमाह ग्रामेत्यादि । तस्य लक्षणन्तु कृच्छ्रमूत्रपुरीषत्वादिकं ज्ञेयम् । ग्रामेत्यादिश्लोको ग-पुस्तके नास्ति । कृच्छ्रमूत्रपुरीषयोरित्यत्र कृच्छ्रमूत्रपुरीषक इति पाठो युक्तः । तथा यत्र यस्येति पाठः साधुः ।

१२ । पित्ताण्डलक्षणमाह । शूनतेति । पिड़कानां व्रणानाम् ।

१ । तिलतैलेन । गः ।
२ । संप्रदापयेत् । गः ।
३ । तस्य । ग्वः ।
४ । रक्ताकृष्टाभितापिच । गः ।
५ । पिड़कानां समुद्भवः । गः ।

शिरावेधस्तथाभ्यङ्गो[1] वाताण्डे यः प्रकीर्त्तितः ।
कर्त्तव्यः स तु[2] पित्ताण्डे यदन्यच्च प्रचक्षते ॥ १३ ॥
कङ्कोलमुस्तकाश्मर्य्यवाजिगन्धैस्तुसाधितः[3] ।
क्वाथः पाने हितस्तस्मै शर्करामधुमूर्च्छितः ॥ १४ ॥
पञ्चवल्कस्य कल्कश्च सर्पिषा सह योजितः ।
प्रदातव्यः प्रलेपाय गोक्षुरश्च निरूहणे[4] ॥ १५ ॥
मुस्तवालकधन्याकं[5] क्वथितं शीतलीकृतम्[6] ।
तोयं पाने प्रदातव्यं ग्रासे दूर्वा च शस्यते ॥ १६ ॥

श्लेष्माण्डलक्षणचिकित्सितम् ।

शूनौ तु कठिनौ रूक्षौ वृषणौ मन्दवेदनौ ।
ह्रस्वमूत्रस्य वाहस्य मूत्रकोशश्च शूयते[7] ॥ १७ ॥

१३। पित्ताण्डस्य चिकित्सामाह। शिरेति।

१४। योगान्तरमाह। कङ्कोलेत्यादि। कङ्कोलादीनां मिलितं पलं शर्करामधुनोश्च प्रत्येकं कुडवः।

१५। निरूहणे गोक्षुरं, पञ्चवल्कस्य कल्कः सर्पिषा सह प्रलेपार्थं देयः।

१७। मूत्रकोषश्च शूयते स्फीतो भवति ।

---

१। तथास्यैव। गः।
२। कर्त्तव्यं स्याच्च। गः।
३। वाजिगन्धेन साधितः। खः।
४। प्रलेपार्थे प्रयोक्तव्यो गोक्षीरन्तु निरूहयेत्। गः।
५। मुस्तवालकधान्याकैः। गः।
६। शीतलं कृतम्। गः।
७। जायते।

श्लेष्माण्डः स तु[1] विज्ञेय श्चोपाण्डीं वेधयेच्छिराम् ।
निरूहं[2] कटुतैलेन चाङ्गे[3] स्वेदं च कारयेत् ॥ १८ ॥
कुष्ठैलातिविषा[4]लोध्रवचाव्योषहरेणुभिः ।
पानं[5] कल्कीकृतैः शस्तं सुरामध्वासवान्वितम् ॥ १९ ॥
पञ्चतिक्तकसंसिद्धैः कुर्य्यान्मुद्गैश्च भोजनम् ।
पिप्पलीक्षौद्रसंयुक्तैस्तैलशुण्ठीसमन्वितैः ।
व्योषक्षौद्रसतैलै(श्च) कुलत्थैर्वापि भोजयेत् ॥ २० ॥
भ्रामणञ्च[6] तुरङ्गस्य सायं प्रातः शनैर्हितम् ।
शुष्को घासः प्रदातव्यः शृतशीतं[7] जलं तथा ॥ २१ ॥
किराततिक्तकच्छूनामार्द्रकाणां समायुतम् ।
पिण्डं वा देयमश्वस्य श्वयथुव्याधिशान्तये ॥ २२ ॥

१९ । अतिविषा (आतइच्) ।

२० । पिप्पलीत्यादिपाठः ख-पुस्तके नास्ति । व्योषेत्यादि पादद्वयं ग-पुस्तके नास्ति ।

२२ । किरातेत्यादिः श्लोकः ख-पुस्तके नास्ति । कच्छुः कपिकच्छुः ।

---

१ । श्लेष्माण्डं तस्य । खः ।
२ । निरूहेत् । गः ।
३ । चाङ्गस्वेदविचक्षणाः । खः ।
४ । पिप्पली । गः ।
५ । पानं । गः ।
६ । भ्रमणं । खः ।
७ । शृतं शीतं । गः ।

पोताण्डलक्षणचिकित्सितम् ।

शूनौ पक्कौ तुरङ्गस्य मुष्कौ यस्य सवेदनौ ।
त्रिकस्तम्भेन युक्तस्य तस्य पूताण्ड[1]मादिशेत् ॥ २३ ॥
वाताण्डे[2] विहितस्तत्र शिरावेधः प्रशस्यते ।
घृताभ्यङ्गश्च कर्त्तव्यो मुष्कयोस्तस्य वाजिनः ॥ २४ ॥
पिप्पलीलोध्रयष्ट्याह्वैरेलवाल्लुकसंयुतैः ।
पानं तस्मै हितं दृष्टं सिन्धुमध्वा समन्वितम्[3] ॥ २५ ॥
वर्षाभूसरला[4]श्यामालोध्रचन्दनपद्मकैः ।
तोयपिष्टैः प्रलेपस्तु मुष्कयोः परिकीर्त्तितः ॥ २६ ॥
अनया वाजिनो रोगः क्रमया शान्तिमृच्छति ।
विपाट्य मुष्कौ शस्त्रेण तदाण्डमपकर्षयेत् ॥ २७ ॥
हस्तेनाकृष्य मुष्काण्डं नाडीं बद्ध्वा दृढं भिषक् ।
सुवर्त्तितेन सूत्रेण तच्छिन्द्याच्च विचक्षणः ॥ २८ ॥

२४ । पूताण्डं पोताण्डं पुच्छाण्डमिति च त्रिविधः पाठो पुस्तक-द्वये दृश्यते, तेषु पूताण्डं पोताण्डमित्युभयमेव साधु न पुच्छा-ण्डमिति ।

२६ । वर्षाभूः पुनर्नवा शुण्ठी वा ।

२८ । तदाण्डमपकर्षयेदित्यादि वर्त्तितेन शस्त्रेणेत्यन्तः पाठो ग-पुस्तके न दृश्यते ।

१ । पुच्छाण्डम् । गः ।
२ । वाताण्डे । गः ।
३ । सीधुमध्वासमन्वितम् खः ।
४ । वर्षाभूरमला । खः ।

वह्नितप्तेन शस्त्रेण तद्व्रणेन सुनिश्चितम्।
रक्तमेवं तुरङ्गस्य प्रशमं नैव गच्छति[1] ॥ २९ ॥
अग्निवर्णेन येनैव[2] छिन्द्याच्छस्त्रेण दुर्बुधः[3]।
अबद्धा[4] सुदृढं नाडीं तस्य कर्म्म न सिध्यति ॥ ३० ॥
आकृष्याण्डं भिषङ् मुष्कं पूरितं मधुसर्पिषा।
क्षीरवृक्षकषायेण व्रणवत् समुपाचरेत् ॥ ३१ ॥
प्रशस्तं गुग्गुलोः पानं त्रिफलाक्वाथयोजितम्।
तच्चंक्रमणशीलस्य कृताभ्यक्तस्य वाजिनः ॥ ३२ ॥
निपात्य भूमौ तुरगं बद्धा चैव दृढं बुधः।
उत्तानस्य विनिःक्षिप्य पृष्ठं गर्त्तिस्तथैव च ॥ ३३ ॥
पातनादि ततः कर्म्म कुर्य्यात्तच्छाण्डरोगिणः।
दृढकर्म्मा प्रगल्भश्च शास्त्रविच्च भिषग्वरः ॥ ३४ ॥

२९। श्लोकोऽयं न संगच्छते। सुतप्तेन सुतप्तेन।

३२। प्रशस्तमित्यादिः विरोधी च विशेषत इत्यन्तः पाठो ग-पुस्तके न दृश्यते।

---

१। त्वरमेव प्रगच्छति। गः।
२। यो नैव। गः।
३। दुर्म्मतिः। गः।
४। सुबद्धा। खः।

पोताण्डलक्षणचिकित्सितम् ।

शूनौ पक्वौ तुरङ्गस्य मुष्कौ यस्य सवेदनौ ।
चिकस्तम्भेन युक्तस्य तस्य पूताण्ड[1]मादिशेत् ॥ २३ ॥
वाताण्डे[2] विहितस्तत्र शिरावेधः प्रशस्यते ।
घृताभ्यङ्गश्च कर्त्तव्यो मुष्कयोस्तस्य वाजिनः ॥ २४ ॥
पिप्पलीलोध्रयष्ट्याह्वैरेलवालुकसंयुतैः ।
पानं तस्मै हितं दृष्टं सिन्धुमध्वा समन्वितम्[3] ॥ २५ ॥
वर्षाभूसरला[4]श्यामालोध्रचन्दनपद्मकैः ।
तोयपिष्टैः प्रलेपस्तु मुष्कयोः परिकीर्त्तितः ॥ २६ ॥
अनया वाजिनो रोगः क्रमया शान्तिमृच्छति ।
विपाट्य मुष्कौ शस्त्रेण तदाण्डमपकर्षयेत् ॥ २७ ॥
हस्तेनाकृष्य मुष्काण्डं नाडीं बद्धा दृढं भिषक् ।
सुवर्त्तितेन सूत्रेण तच्छिन्द्याच्च विचक्षणः ॥ २८ ॥

२४। पूताण्डं पोताण्डं पुच्छाण्डमिति च त्रिविधः पाठो पुस्तक-द्वये दृश्यते, तेषु पूताण्डं पोताण्डमित्युभयमेव साधु न पुच्छाण्डमिति ।

२६। वर्षाभूः पुनर्नवा शुण्ठी वा ।

२८। तदाण्डमपकर्षयेदित्यादि वर्त्तितेनेन शस्त्रेणेत्यन्तः पाठो ग-पुस्तके न दृश्यते ।

१। पुच्छाण्डम् । गः ।
२। वाताण्डे । गः ।
३। सोधुमध्वासमन्वितम् । खः ।
४। वर्षाभूरसला । खः ।

वह्नितप्तेन शस्त्रेण तदग्रेण सुनिश्चितम् ।
रक्तमेवं तुरङ्गस्य प्रशमं नैव गच्छति[1] ॥ २९ ॥
अग्निवर्णेन येनैव[2] छिन्द्याच्छस्त्रेण दुर्बुधः[3] ।
अबद्धा[4] सुदृढं नाडीं तस्य कर्म्म न सिध्यति ॥ ३० ॥
आकृष्याण्डं भिषङ् मुष्कं पूरितं मधुसर्पिषा ।
क्षीरवृक्षकषायेण व्रणवत् समुपाचरेत् ॥ ३१ ॥
प्रशस्तं गुग्गुलोः पानं त्रिफलाक्वाथयोजितम् ।
तच्चंक्रमणशीलस्य घृताभ्यक्तस्य वाजिनः ॥ ३२ ॥
निपात्य भूमौ तुरगं बद्धा चैव दृढं बुधः ।
उत्तानस्य विनःक्षिप्य पृष्ठं गर्त्तिस्तथैव च ॥ ३३ ॥
पातनादि ततः कर्म्म कुर्य्यात्तच्छाण्डरोगिणः ।
दृढकर्म्मा प्रगल्भश्च शास्त्रविच्च भिषग्वरः ॥ ३४ ॥

२९ । श्लोकोऽयं न संगच्छते । मूत्रनिर्गतेन मुष्कन ।

३२ । प्रशस्तमित्यादिः विरोधी च विशेषत इत्यन्तः पाठो ग-पुस्तके न दृश्यते ।

---

१ । रक्तमेव प्रगच्छति । गः ।
२ । या नैव । गः ।
३ । दुर्मतिः । गः ।
४ । सुबद्धा । गः ।

रक्ताण्डलक्षणचिकित्सितम् ।

स्पर्शतः कठिनौ रूक्षौ रूपतश्चैव यौ मृदू ।
वृषणौ यस्य वाहस्य स रक्ताण्डः प्रकीर्त्तितः ॥ ३५ ॥
तस्मिन् सर्व्वाः प्रयोक्तव्याः क्रियाः पोताण्डबोधिताः ।
क्षिप्रं सिद्धिर्भवत्येव वैद्यानां शास्त्रशालिनाम् ॥ ३६ ॥
उच्चाण्डवान् प्रयुञ्जीत दुष्टानां मुष्ककालनम् ।
भ्रमणञ्च विशेषेण तेषां कुर्य्याद्दिसप्तकम् ॥ ३७ ॥
भ्रमतामेव दातव्यं जलं ग्रासास्तथैव च ।
घृताभ्यङ्गं च सततं व्रणे गात्रे च वाजिनाम् ॥ ३८ ॥
दातव्यो गुग्गुलुस्तावत् त्रिफलाक्वाथयोजितः ।
रूढं यावद् व्रणं तेषां जायते निरुपद्रवम् ॥ ३९ ॥
खादकः खादकश्चैव विरोधी च विशेषतः ।
मुष्कयोर्लागनं वाजी प्रतिहन्ता च सिध्यति ॥ ४० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे मुष्करोग-चिकित्सिते पञ्चाशत्तमोऽध्यायः ।

---

३७ । उच्चाण्डवानिति पादद्वयं न लगति ।

४० । अस्य श्लोकस्य शेषपादद्वय न सम्यक् लगति ।

# अथैकपञ्चाशत्तमोऽध्यायः ।

श्रौनीतरोगलक्षणम् ।

गुरुभिर्भोजनैर्ग्रासैरभिष्यन्दकरैस्तथा ।
अष्टस्याकर्म्मिणोऽश्वस्य ह्रयीमनभिगच्छतः ॥ १ ॥
स्वस्थानात् प्रच्युतं शुक्रं मेहने प्रतिहन्यते ।
तेन शुक्राभिघातेन मूत्रकृच्छं प्रजायते ॥ २ ॥
ततो रक्तप्रकोपेण शूलं भवति मेहने ।
प्रक्लिन्नं प्रबलं पक्कं कण्डुमत्पिड़कान्वितम् ॥ ३ ॥
स्वस्थाने प्रविशेन्नैव मक्षिकाभिः समावृतम् ।
श्रौनीताख्यं तमातङ्कं निर्द्दिशेत्तस्य वाजिनः ॥ ४ ॥

चिकित्सा ।

उपाण्डञ्चैव कोष्ठञ्च मात्रायान्तु विरेचयेत् ।
प्रच्छयेन्मूत्रकोपञ्च स्नानं वाज्येन सेवयेत् ॥ ५ ॥

---

१ । एष अध्यायो ग-पुस्तके न धृतः । ख-पुस्तकानुसारेणायमध्यायो गृहीतः । अष्टस्येति आकुञ्चनोत्क्षेपणप्रसारणगमनक्षेपण विरेचनवस्तिनस्यानीति अष्ट कर्म्माणि । तदकर्म्मिण इत्यर्थः ।

२ । प्रक्लिन्नादिकं मेहनविशेषणम् । स्वस्थानात् शुक्राधारात् ।

३ । तत इति मूत्रकृच्छ्रात् स्वस्थाने नैव प्रविशेत् मेहनमिति शेषः ।

५ । प्रच्छयेत् शान्तयेदित्यर्थः ।

क्षारतैलं जलं कोष्णं पानार्थञ्च प्रदापयेत्।
खदिरक्षीरिणां क्वाथः सुखोष्णो व्रणधावनः॥ ६॥
तिलक्षारैः पयःस्विन्नैः ससर्पिष्कैः प्रलेपनम्।
धूपनं कटुमध्वाज्यैरगलापीलुदारुभिः॥ ७॥
सप्तपत्रसल्लक्या धवस्यारग्वधस्य च।
कुटजस्य त्वचश्चैव चूर्णिता व्रणरोपणाः॥ ८॥
लवङ्गानि हरिद्रे च सूर्य्यवल्ली सरोचना।
अरुष्करोऽग्निकदरः त्रिफलानिकुटत्वचः॥ ९॥
एभिस्तैलं सगोमूत्रं साधितं व्रणरोपणम्।
भोजयेत्तिक्तमुद्गांश्च मधुतैलकणान्वितान्॥ १०॥

इति श्रीमहासामन्तजयदत्तविरचितेऽश्वशास्त्रे श्रो-नीतरोगचिकित्सिते एकपञ्चाशत्तमोऽध्यायः।

---

७। अराला सर्जरसः। पीलुः स्वनामख्यातः फलविशेषः। धवो (धाओया) इति प्रसिद्धः।

९। सूर्य्यवल्ली अर्कपुष्पीवृक्षः। अरुष्करो भल्लातः। अग्निर्निम्बूकः। कदरः श्वेतखदिरः। निकुठः अङ्कोटः।

## अथ द्विपञ्चाशत्तमोऽध्यायः ।

अष्टविधोदरनामलक्षणानि ।

अष्टभेदस्य वक्ष्यामि उदरस्य यथाक्रमम् ।
चिह्नं चिकित्सितञ्चैव यथा शास्त्रे व्यवस्थितम् ॥ १ ॥
वातजं पित्तजञ्चैव कफजं सन्निपातजम् ।
प्लीहोदरं बद्धगुदं परिस्राव्युदकोदरम् ॥ २ ॥
आध्मातमुदरं यस्य वाजिनो वेदनान्वितम् ।
वर्चसो रूक्षता चैव सशब्दश्चैव मारुतः ॥ ३ ॥
पुरीषे च कृते यस्य गुदं निर्याति सर्व्वदा ।
क्षीणस्याल्पाशनस्यैव तस्य वातोदरं वदेत् ॥ ४ ॥
हारिद्रविण्महाकुक्षिः कृशः स्वेदी महाशनः ।
उष्णनिःश्वाससंयुक्तो भवेत् पित्तोदरी हयः[1] ॥ ५ ॥
उदरं वर्द्धते यस्य मन्दाग्नेः शोथसंयुतम्[2] ।
अलसस्य[3] कृशस्यैव विन्द्यात् श्लेष्मोदरं भिषक् ॥ ६ ॥
वातपित्तकफानान्तु रूपं यस्य च दृश्यते ।
सन्निपातसमुत्थानं तद् विन्द्यादुदरं महत्[4] ॥ ७ ॥
वर्णान्यत्वं महत्वञ्च काठिन्यञ्च विशेषतः ।

२ । परिस्राव्युदकोदरमिति परिस्राव्युदरं दकोदरञ्च ।

५ । हारिद्रविट् पीतपुरीषः । महाकुक्षिरिति कुक्षेर्महत्वमुक्तम् ।

१ । भवेत् पित्तोदराक्रयः । गः ।  ३ । सालसस्य । खः ।
२ । शोथसंयुतम् । घः ।  ४ । ततः । गः ।

श्लीहोदरे विजानीयाद्देहे च कृशतां[1] तथा ॥ ८ ॥
अल्पमल्पं पुरीषन्तु कृच्छ्राद्दातं[2] प्रमुञ्चति ।
आध्मातकुक्षिर्यो वाजी तस्य बद्धगुदं वदेत् ॥ ९ ॥
आध्मातकोष्ठः[3] कुरुते फेनिलं रक्तमेव च ।
परिस्रावोदरी मूत्रं दाहरुग्वर्जितं[4] सदा ॥ १० ॥
अत्यन्ताध्मानकश्चैव जलपूर्णमिवोदरम् ।
कृशस्य यस्य[5] वाहस्य भवेत्तस्योदकोदरम्[6] ॥ ११ ॥

वातोदरचिकित्सा ।

पञ्चमूलकषायेण सहितां तैलसंयुताम्[7] ।
यवागूं भोजयित्वा तु ततः स्नेहै[8]र्निरूहयेत् ॥ १२ ॥
पिप्पलीलवणक्षारपाठाचित्रकहिङ्गुभिः ।
कल्कीकृतैः पचेत्तैलं मूत्रैर्गोमाहिषादिभिः[9] ॥ १३ ॥
तस्मिन्नेव चित्रचूर्णं स्नुहीदुग्धेन भावितम् ।
पलार्द्धमात्रया क्षिप्त्वा पचेत्तैलं विचक्षणः ॥ १४ ॥
बलं वीक्ष्य तुरङ्गस्य तैलपानं प्रदापयेत् ।
अतिपानप्रयोगेण मृत्योर्गोचरमृच्छति ॥ १५ ॥

---

१५। अतिपानादि श्लोकद्वयं -पुस्तके नास्ति ।

---

१। तद्देहे कृशता तथा।
२। कृच्छ्रदारञ्च। गः।
३। आध्मातकोष्ठैः। खः।
४। रुजादाहविवर्जितम्। गः।
५। यस्तु। गः।
६। विन्द्यादुदरकोदरम्। गः।
७। साधितां वा प्रदापयेत्। गः।
८। तैलं। गः।
९। गोमूत्रैर्महिषान्वितैः। गः।

पीततैलं विरिक्तञ्च दूर्व्वाघासेन पोषयेत्।
आध्मानादुदरस्यैव पुनः कुर्य्यात् क्रियामिमाम्॥ १६॥
त्रिवृद्दन्ती वचा चैव कषायेण च साधितम्।
वातोदरे घृतं शस्तं पाने युक्त्या प्रयोजितम्॥ १७॥

पित्तोदरचिकित्सा।

पिप्पलीशृङ्गवेरञ्च दन्त्यारग्वधचित्रकम्।
दध्ना मूत्रन्ततस्तैलं पचेन्मृद्वग्निना बुधः॥ १८॥
पित्तोदराभिभूतस्य पानमेतत् प्रदापयेत्।
हिङ्गुयुक्तं तुरङ्गस्य यथाग्नि च यथाबलम्॥ १९॥

श्लेष्मोदरचिकित्सा।

वातोदरे समुद्दिष्टां श्लेष्मजे कारयेत् क्रियाम्।
सन्निपातसमुत्थे तु कुर्य्यात् साधारणीं क्रियाम्॥ २०॥
पिण्डीकृतं त्रिकटुकं क्षारसैन्धवयोजितम्।
दत्वानुपाययेन्मूत्रं माहिषं वाथ सौरभम्॥ २१॥
प्रति प्रभाते कर्त्तव्यं तुरङ्गस्य यथाबलम्।
प्लीहोदरविनाशाय विधिरेष विजानता॥ २२॥
या क्रिया विहिता पूर्व्वं वातोदरचिकित्सिते।
सैव बद्धगुदे कार्य्या सस्रावे पित्तजेऽपि वा॥ २३॥
बद्ध्वा वाहं दृढं विद्वान् धरण्यां विनिपातयेत्।
उदकोदरे ततः कर्म्म कुर्य्याद्भिषगतन्द्रितः॥ २४॥

हृदयस्याधरे भागे ऊर्द्धभागे च नाभितः।
अधोवा नाभितः कुर्य्याच्छेदनं चतुरङ्गुले ॥ २५ ॥
शस्त्रेणोत्पलपत्रेण वामभागे विचक्षणः।
एकमेवाङ्गुलं शस्त्रं कुक्षौ चापि प्रवेशयेत् ॥ २६ ॥
वेधव्रणे ततस्तस्मिन् नालिकां वस्त्रवेष्टिताम्।
प्रक्षिप्य गालयेद्वारि यावद्वै कोष्ठलाघवम् ॥ २७ ॥
स्वच्छतोयपरिस्रावे तदसाध्यं समादिशेत्।
आलोहिते सरक्ते वा साध्यं विद्वान् समादिशेत् ॥ २८ ॥
आकृष्य नलिकां प्राज्ञः पट्टकेन तथा व्रणम्।
घृतस्रुतेन बध्नीयाद्दत्वा कर्पटचीरकम् ॥ २९ ॥
मुक्त्वा चोत्थाप्य वाहन्तु वाग्भिः प्रसारयेद्भिषक्।
कषायैः क्षीरवृक्षाणां व्रणञ्चाश्च्योतयेत्ततः ॥ ३० ॥
बिद्धोदरस्य वाहस्य निर्वा .... .... .... ....।
उदकञ्चैव घासञ्च नो दद्याद्दिवसत्रयम् ॥ ३१ ॥
ततो दूर्व्वा प्रदातव्या उदकञ्चापि संस्कृतम्।
क्वथितं क्षीरवृक्षाणां वल्कलैर्मधुयोजितम् ॥ ३२ ॥
ततो रूढ़व्रणं वुद्धा सञ्जातवलमेव च।
एतान् वै खादने दद्याद् युक्त्या चैव सुसंस्कृतान् ॥३३॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे उदरचिकित्सिते द्विपञ्चाशत्तमोऽध्यायः।

# अथ त्रिपञ्चाशत्तमोऽध्यायः ।

अर्शोलक्षणम् ।

कृशो रूक्षश्च मन्दाशी बलहीनशिरान्वितः[1] ।
अर्शसा क्रियते वाजी गुदमार्गगतेन च ॥ १ ॥
जम्बू[2]बदरखर्ज्जूरफलरूपश्च तद्भवेत्[3] ।
गुदाभ्यन्तरजं मांस[4]मेकद्विबहुसंख्यकम् ॥ २ ॥

तच्चिकित्सा ।

क्रियां तस्य प्रवक्ष्यामि यथाशास्त्रं समासतः ।
येन शाम्यति[5] वाहानां भृशमर्शो विवर्द्धितम् ॥ ३ ॥
यन्त्रं षडङ्गुलं विद्यात् छिद्रं[6] पञ्चाङ्गुलं भिषक् ।
अधोऽर्द्धाङ्गुलविस्तीर्णं[7] दैर्घ्येणाप्यङ्गुलत्रयम्[8] ॥ ४ ॥
उभयोः पार्श्वयोस्तस्य कुर्य्याच्छिद्रद्वयं बुधः ।
अर्शस्तेन तु वाहस्य हिच्छिद्रेण विलोकयेत्[9] ॥ ५ ॥

---

१ । अर्शःसु मांसाङ्कुरा जम्बूफलाद्याकारा द्वित्र्यादिबहुसंख्यकाः गुदाभ्यन्तरे जायते इत्यर्थः ।

---

१ । शिरोद्भवः । खः ।
२ । जम्बूफलश्च । खः ।
३ । यद्भवेत् । खः ।
४ । मूलम् । गः ।
५ । शाम्येत । गः ।
६ । शिरः । गः ।
७ । चतुरङ्गुलविस्तीर्णं । गः ।
८ । कुर्य्यात् प्रङ्गादिभिःक्षतम् । गः ।
९ । अवलोकयेत् । गः ।

एकच्छिद्रेण वै कर्म्म[1] कुर्य्याच्छेदादि[2]पूर्व्वकम् ।
पातितस्य सुबद्धस्य तुरगस्य[3] विचक्षणः ॥ ६ ॥
घृताभ्यक्ते गुदे क्षिप्ता युक्त्या यन्त्रं द्विछिद्रकम् ।
ततः सम्यक् समासेन अर्शस्तद्बुद्धिमान् भिषक् ॥ ७ ॥
यन्त्रं द्विछिद्रमाकृष्य प्रक्षिपेदेकरन्ध्रकम् ।
यन्त्रं छिद्रान्तरस्थन्तु अर्शः कृत्वा विचक्षणः ॥ ८ ॥
छित्त्वा तीक्ष्णेन शस्त्रेण दहेल्लौहशलाकया ।
सम्यग्दग्धं भिषग्बुद्धा मधुयुक्तेन सर्पिषा ॥ ९ ॥
लेपयेद्व्रणदेशन्तु यन्त्रञ्चैवापकर्षयेत् ।
मुक्ता वाहं समुत्थाप्य वाजिं वातेषु चारयेत्[4] ॥ १० ॥
अतिशीतं जलं मूर्ध्नि चिके चापि प्रदापयेत् ।
तस्यां रात्रौ प्रदातव्यो घासो वाहस्य यत्नतः ॥ ११ ॥
त्रिफलाक्वाथसंयुक्तं प्रातर्दद्याच्च गुग्गुलुम् ।
शृतशीतं जलं पाने घासे[5] दूर्व्वा च शस्यते ॥ १२ ॥

---

६ । पातितस्य सुबद्धस्येति निपात्य सुयन्त्रितस्येत्यर्थः ।

१० । वाजिमितीकारान्तवाजिशब्दोऽप्रसिद्धः ।

---

१ । एकच्छिद्रे ततःकर्म्म । गः ।
२ । भेदादि । गः ।
३ । प्रतीतस्य । गः ।
४ । वाजिं प्रश्वास्य वाहयेत् । खः ।
५ । ग्रासे । गः ।

सप्त[1] पञ्च प्रदातव्यः त्रिफलाक्वाथयोजितः।
ततो जातबलं बुद्ध्वा[2] तुरगं भिषजांवरः॥ १३॥
यथेष्टाहारचेष्टन्तु कारयेत् क्रमशः[3] पुनः।
वातजं श्लेष्मजं बुद्ध्वा साधयेदग्निना भिषक्॥
पित्तजं सम्यगालोक्य[4] दहेत् क्षारेण बुद्धिमान्॥ १४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे अर्शश्चिकित्सिते त्रिपञ्चाशत्तमोऽध्यायः।

---

## अथ चतुःपञ्चाशत्तमोऽध्यायः।

### उत्कर्णलक्षणचिकित्सितम्।

कर्णौ स्तब्धौ तथा पुच्छं स्तब्धं गात्रमकिञ्चन।
वातात्मकेन वाहस्य भवेदुत्कर्णकेन हि॥ १॥
वसया[5] घृततैलेन तस्याभ्यङ्गः प्रशस्यते।
प्रसारण्यादिभिस्तैलैः कुर्य्याच्चैवानुवासनम्॥ २॥

---

१३। सप्त पञ्चेति सप्ताहं तथा पञ्चाहं द्वादशाहमित्यर्थः।

१४। वातजे श्लेष्मजे वा अग्निदाहः पित्तजे क्षारदाहः प्रयोज्य इत्यर्थः। क्रमणमिति पाठे पादचारणमर्थः।

---

१। सप्ताहकं। खः।
२। बद्धा। गः।
३। क्रमशः बुधः। गः।
४। वातजं ज्ञात्वा। गः।
५। पयसा। गः।

अतसीभिः शणैर्माषैस्तिलधान्यैर्यवैस्तथा।
वस्त्रबद्धपुटः[१] स्वेदः शस्तः काञ्जिकसाधितैः॥ ३॥
जंघा भासस्य[२] सर्पस्य जाङ्गलैः साधितो[३] रसः।
तस्मै पाने हितो दृष्टः शाल्यन्नेन च भोजनम्॥ ४॥
शौकरैर्माहिषैश्छागैरसैर्वा तदभावतः।
पञ्चमूलकषायेण सिद्धस्तैलेन भावितः[४]॥ ५॥
गुड़तैलयुता वापि सुरा पाने प्रशस्यते।
शुनः छित्वा शिरो रक्तं गृहीत्वा दापयेत् ततः[६]॥ ६॥
छागमार्जारमेषाणां[७] रक्तं सद्यः[८] सुतं भिषक्।
दापयेत् पञ्चमूलस्य कषायेण समन्वितम्॥ ७॥

---

३। अतसी (मश्निना)।

५। अयं पाठो ग-पुस्तके नास्ति। रसैरित्यत्र रस इति पाठः साधुः।

६। गुड़तैलयोर्यथाक्रमं पलाष्टकं प्रस्थार्द्धं च देयम्।

७। अयं पाठो ग-पुस्तके नास्ति।

---

१। सवर्णैर्माषैः। खः।

२। वस्त्रबद्धपुटस्वेदस्तप्तकाञ्जिकसाधितः। गः।

३। चर्म्म नागस्य। गः।

४। शास्त्रकोविदः। खः।

५। मूर्च्छितः। गः।

६। पुनः छित्वा ततो रक्तं गृहीत्वा दापयेत्सदा। गः।

७। मेषमार्जारछागानां। गः।

८। रक्तं दद्यात् स्रुतं। गः।

पञ्चमूलकषायेण कृत्वा मांसरसं बुधः ।
यवागूं साधयेत्तेन तिलमिश्रैश्च तण्डुलैः ॥ ८ ॥
वसया[1] तिलतैलेन सर्पिषा चापि संस्कृतम् ।
भोजने तां भिषग्दद्यादुत्कर्णकनिवारणीम् ॥ ९ ॥
ग्रासार्थं दापयेद्दूर्व्वां पाने वोष्णजलं पिबेत्[2] ।
बिल्वताद्यैस्तथा तैलैः कर्णयोस्तस्य पूरणम् ॥ १० ॥
उत्कर्णको यदाश्वस्य क्रियया नोपशाम्यति ।
वह्निं प्रदापयेत् कुक्षौ[3] ललाटे कर्णयोस्तथा ॥ ११ ॥
ग्रासद्वेषी सदाध्मातः[4] कृच्छ्रमूत्रपुरीषकृत् ।
लालाव्रण[5]युतः श्वासी उत्कर्णी नैव जीवति[6] ॥ १२ ॥
स्वेदस्निग्धौ निवातञ्च स्थानं प्रावरणानि च ।
पयांसि भोजने स्वादुकट्वम्ललवणानि च ।
बृंहणं सर्व्वथा वैद्यः कुर्य्यादुत्कर्णपीड़िते ॥ १३ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे उत्कर्ण-चिकित्सिते चतुःपञ्चाशत्तमोऽध्यायः ।

---

१० । कर्णपूरणे तैलस्य कुडवो मात्रा ।

---

१ । पयसा । गः ।　　४ । समाध्मातः । गः ।
२ । यथा । गः ।　　५ । ललाटव्रणः । गः ।
३ । पुच्छे । गः ।　　६ । सिध्यति । गः ।

## अथ पञ्चपञ्चाशत्तमोऽध्यायः ।

वातव्याधौ

मन्यास्तम्भादिलक्षणानि ।

नमत्युन्नमति[1] ग्रीवा स्तब्धा च यस्य वाजिनः ।
मन्यास्तम्भं विजानीयाद्रोगं तस्य सुदारुणम् ॥ १ ॥
एवं विधायां ग्रीवायां स्फुरणं यस्य विद्यते[2] ।
मन्याचालीति[3] तं विद्यान्मन्दाहारं तुरङ्गमम् ॥ २ ॥
संगृहीतौ हनू यस्य[4] निश्चलौ यस्य वाजिनः ।
लाला स्रवति[5] चात्यन्तं विन्द्यात्तस्य हनुग्रहम् ॥ ३ ॥
स्तब्धं[6] पृष्ठोन्नतञ्चैव रन्ध्रौ क्षिप्तस्य यस्य च ।
तस्य पृष्ठग्रहं रोगमूर्द्धग्रीवस्य निर्द्दिशेत् ॥ ४ ॥
एकः प्रलम्बते कर्णः शरीरार्द्धञ्च शुष्यति ।
शूनो[7] भवति चाश्वस्य रोगे चैकाङ्गसंज्ञके ॥ ५ ॥

२ । एवं विधायां स्तब्धायामित्यर्थः । स्फुरणं कम्पनम् ।

१ । नमात्युन्नमति ग्रीवा तथा यस्य हि वाजिनः । गः ।
२ । दृश्यते । खः ।
३ । मन्यावनीति । गः ।
४ । हनुर्यस्य निश्चलो वापि वाजिनः । खः ।
५ । लालास्रावीति चात्यर्थं । गः ।
६ । तद्भ्रमानश्च नष्टश्च रन्ध्रं । गः ।
७ । शूनं भवतु । गः ।

संचासी चैव यः पूर्व्व पुनः स्वस्थो भृशं भवेत्।
प्रस्विन्नाङ्गस्य तस्याशु मृगरोगं समादिशेत्॥ ६॥
मृगरोगी यदा वाजी जृम्भावान् जायते मुहुः।
मृगजृम्भं तदा तस्य व्याधिं समुपलक्षयेत्॥ ७॥
गत्वा यः पूर्व्वकायेन पुनः पश्चाच्च[1] गच्छति।
स्तब्धाङ्गो वेदनार्त्तश्च तस्याक्षेपकमादिशेत्[2]॥ ८॥
वक्रः पश्चिमकायेन मण्डलैर्यो विचेष्टते[3]।
मन्दग्रासश्च दीनश्च भ्रामिताक्षो रजोवृतः[4]॥ ९॥
पश्चात्कायेन यो वाजी भूमिं गत्वा निषीदति।
खेदश्चाग्रिमकायेन स्वस्थश्च परिवर्त्तते[5]॥ १०॥
कृच्छ्रादुत्थापितश्चापि पुनर्यो याति[6] मेदिनीम्।
कपोतकनिपादीति स ज्ञेयः कृच्छ्रजीवनः॥ ११॥

---

६। प्रस्विन्नाङ्गस्य घर्म्माक्तकलेवरस्य।

---

१। पुनरश्वश्च। गः।
२। तस्याधिक्षेपमादिशेत्। गः।
३। विचेष्टयेत्। खः।
४। रुजान्वितः। गः।
५। तेनैव परिवर्द्धयेत्। गः।
६। पुनर्यो भ्रमवेदनः। गः।

हनुद्वयस्य[1] विक्षेपाद्घोणाभेदाच्च बुद्धिमान् ।
नासापुटविकाराच्च अर्द्दितं रोगमादिशेत् ॥ १२ ॥

एषां चिकित्सा ।

एते वातात्मका रोगा मन्यास्तम्भादयः स्मृताः ।
उत्कर्णकक्रियाः[2] सर्व्वा वाहानां तेषु कारयेत् ॥ १३ ॥
उत्कर्णकचिकित्सा च पानमेतद् विशिष्यते ।
कपोतकनिषादस्य तद्विन्द्याद्वक्ष्यमाणकम्[3] ॥ १४ ॥
हरितान्[4] यावशूकांश्च पिष्ट्वालम्बुषया सह ।
आलोड्य तिलतैलेन ततः पानं प्रदापयेत् ॥ १५ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे वातव्याधि चिकित्सिते पंचपञ्चाशत्तमोऽध्यायः ।

---

१२ । अयं सार्द्धश्लोको ग-पुस्तके नास्ति । बलवर्द्धनं कर्म्म बृंहणम् ।

---

१ । हनुद्वयं संप्रश्लिष्टं यस्य नासा च भिद्यते । नासापुटविकारैश्च अर्द्दितः परिकीर्त्तितः । खः ।

२ । उत्कर्णकां क्रियां सर्व्वां दापयितामेषु । खः ।

३ । दद्यात्तद्वक्ष्यमाणकम् । गः ।

४ । हरितं यवशूकञ्च काशञ्चैव विशेषतः ।

## अथ षट्पञ्चाशत्तमोऽध्यायः ।

### उन्मादनिदानलक्षणम् ।

यद्युन्मादः[१] समुद्दिष्टः श्लेष्मपित्तसमुद्भवः ।
तथापि[२] न विना वातमुन्मादो जायते ध्रुवम् ॥ १ ॥
प्रकोपकारणैः प्रोक्तैः[३] कुपिते मातरिश्वनि ।
उन्मादो जायतेऽश्वस्य तस्य रूपञ्च वक्ष्यते ॥ २ ॥
यातुमिच्छति यः स्थित्वा रज्जुं दन्तैश्च खादति ।
खादत्यकस्माद् यवसं पुनश्चैव न खादति ॥ ३ ॥
कदाचिद्बुध्यते संज्ञां कदाचिच्च न बुध्यते ।
स्वभावान्यात्वसंयुक्तं तद्बुद्धा कारयेत् क्रियाम् ॥ ४ ॥
हिङ्गुयुक्तं पुराणस्य सर्पिषः पानमुत्तमम् ।
उन्मादिनस्तुरङ्गस्य घृताभ्यङ्गस्तु सर्व्वदा ॥ ५ ॥
उत्कर्णकादिरोगेषु साग्निकर्म्माणि यानि तु ।
भोजनाभ्यङ्गपानानि निरूहास्थापनानि[४] च ॥ ६ ॥
तानि[५] चास्य प्रयोज्यानि बद्धा चैव दृढं हयम् ।
अबद्धे तु क्रियां कर्तुं नैवोन्मादिषु शक्यते[६] ॥ ७ ॥

१ । यदि नाम । खः ।
२ । तथापित्तं विना वात उन्मादो वायुतो ध्रुवम् । गः ।
३ । सुप्ते । गः ।
४ । तानि सम्यक् प्रयोजयेत् । गः ।
५ । निपात्य भूमौ तुरगं बद्धा चैव दृढं वधः । खः ।
६ । कारयेत् । गः ।

निम्बपत्रवचाकुष्ठलाक्षालवण[1]हिङ्गुभिः ।
गोलोमखुरशृङ्गैश्च पीतसिद्धार्थकैर्यवैः[2] ॥ ८ ॥
उलूककाकपक्षैश्च भूतकेशैश्च पाण्डुभिः[3] ।
सर्पनिर्मोकसंयुक्तैः कुर्य्याच्चूर्णं विचक्षणः ॥ ९ ॥
अर्ककाष्ठाग्निनाधूमं तेन चूर्णेन दापयेत् ।
घृतयुक्तेन वाहानामुन्मादव्याधिशान्तये ॥ १० ॥
गोकुरङ्गकगोधानां[4] शिखिनः शशकस्य च ।
पित्तानि दापयेत् प्राज्ञो यथालब्धानि वा पुनः ॥ ११ ॥
रसोनहिङ्गुतगरान् कुष्ठसर्षपसैन्धवान्[5] ।
मनःशिलाञ्च संयुक्तां पित्तैः सार्द्धं प्रदापयेत् ॥ १२ ॥
महिषच्छागमूत्रेण[6] वर्त्तिं कृत्वा ततः पुनः ।
उन्मादितेषु[7] सर्व्वेषु तया कुर्य्यात्तथाञ्जनम् ॥ १३ ॥
तया छायां विनिष्कास्य जायते सुखमुत्तमम् ॥

९ । रजोवृतः रजोभिर्धूलिभिर्वृत इव ।

१३-१४ । मन्यास्तम्भादिषु सर्व्वेषु वातव्याधिषु उन्कर्णक-

१ । रसोन । गः ।

२ । तथा । गः ।

३ । उलूकस्य च पक्षैश्च भूतकेशिपलाण्डुभिः । गः ।

४ । गोकुरङ्गाभ्रलूकाना गोधानां । गः । पित्तमादाय सर्व्वेषां । गः ।

५ । सैन्धवसर्षपान् । गः ।

६ । भिषक् छागस्य मूत्रेण ।

७ । उन्मादितं तलं कृत्वा वर्त्त्या छायाविमुक्तया । खः ।

अश्वगन्धावचाकुष्ठरोचनामधुसर्षपैः ।
रसार्थं पुटिका कार्य्या कण्ठे कर्पटवेष्टिता ॥ १४ ॥
गोमूत्रघृतदुग्धैश्च दध्ना च गोमयेन च ।
पञ्चगव्यं पचेत् सर्पिस्तस्य पानार्थमुत्तमम् ॥ १५ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे उन्माद-चिकित्सिते षट्पञ्चाशत्तमोऽध्यायः ।

---

## अथ सप्तपञ्चाशत्तमोऽध्यायः ।

ग्रहनामलक्षणानि ।

दृश्यन्ते यानि लिङ्गानि ग्रहदोषेण वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि ग्रहनामानि यानि तु[१] ॥ १ ॥
लोहिताक्षो विरूपाक्षो हरिर्वलिस्तथैव च ।
स काशी चैव विख्यातः संकाशी च परः स्मृतः ॥ २ ॥

---

चिकित्सैव कार्य्या केवलं कपोतकनिषादे हरितादिपानविशेषः प्रयोज्य इत्यर्थः ।

१ । अयं ग्रहग्रहचिकित्साध्यायो गपुस्तके खण्डितोऽस्ति ।

---

१ । ग्रहाणां यानि यानि च । खः ।

सुसंस्थितश्च[1] कौवेरो वैशाखश्च महाग्रहः ।
ऊर्द्धश्च दारुणश्चैव षड्विधो वरुणग्रहः ॥ ३ ॥
वृहस्पतिश्च सोमश्च तथा[2] सूर्य्यग्रहोऽपरः ।
एते प्रोक्ता ग्रहाः सर्व्वे दारुणा मुनिसत्तमैः ॥ ४ ॥
एतैर्हृष्टाः स्फुटं वाहा नैव जीवन्ति सर्व्वदा ।
चिह्नं सर्व्वं[3] प्रवक्ष्यामि यथा शास्त्रे व्यवस्थितम् ॥ ५ ॥
कम्पते पूर्व्वकायस्तु निश्चलो यस्य पश्चिमः ।
पश्चाल्लङ्गी सकम्पश्च खिद्यते हरिपीड़ितः ॥ ६ ॥
भवन्ति विन्दवो रक्ता अकस्माद् यस्य चक्षुषः ।
हरिताक्षगृहीतोऽश्वो ग्रासद्वेषी च जायते ॥ ७ ॥
प्रस्विन्नगुरुगात्रश्च लुब्धचंक्रमणक्रियः ।
मीलितोन्मीलिता चाक्ष्णा स्वभावान्नित्यमेव च ॥ ८ ॥
विरूपाक्षगृहीते तु कम्पः स्वेदश्च जायते ।
उत्थितः सहसा यस्तु मूर्धा पतति भूतले ॥ ९ ॥
स्तब्धाक्षो मुच्यते केशैस्तथा वालैः[4] खुरैरपि ।

७। अत्र हरिताक्षस्थले लोहिताक्ष इति पाठो भवितुं युक्तः । भवन्तीत्यादयो यो भूतले इत्यन्ताः श्लोकाः ख० पुस्तके न सन्ति ।

१। सुसंस्थितं । खः ।
२। ततः । गः ।
३। चिह्नमेषां । गः ।
४। रोमखुरैरपि । गः ।

वलिग्रहगृहीतोऽसौ[1] स्तब्धकर्णशिरोधरः[2] ॥ १०॥
अकस्माद् यस्य लोमानि शीर्य्यन्ते यश्च लङ्घति ।
शूनपश्चिमपादस्य[3] तस्य काशिग्रहं[4] वदेत् ॥ ११ ॥
सहसा कुपितो वाजी स्वानि गात्राणि खादति ।
प्रोथते सततञ्चैव संकाशिग्रहपीड़ितः ॥ १२ ॥
खिन्नाङ्गो[5] वेपमानश्च जानुभ्यां यश्च[6] तिष्ठति ।
कौवेरग्रहसंदुष्टं[7] तं विन्द्यात् कष्टजीवितम् ॥ १३ ॥
हेपते सततं यस्तु पश्चादात्मानमीक्षते[8] ।
सुसंस्थितग्रहाविष्टः[9] स विज्ञेयो मनीषिभिः ॥ १४ ॥
स्तब्धेन गुरुणा चैव वेपमानेन पण्डितः[10] ।
गात्रेण विद्याद् वाहं तु वैशाखग्रहसेवितम् ॥ १५ ॥
ग्रीवां चैव तथा जिह्वां परिवर्त्त्य मुहुर्मुहुः ।
जृम्भते पूर्व्वकायेन शीतोच्छ्रासी विशोचनः[11] ॥ १६ ॥

१ । कलिग्रहगृहीतः । खः ।
२ । स्तब्धकर्णाश्रुताधरः । खः ।
३ । शूनपश्चिमकायस्य । गः ।
४ । सकाशीग्रहमादिशेत् । गः ।
५ । स्विन्नाङ्गः । गः ।
६ । योऽत्रतिष्ठते । गः ।
७ । कौवेरग्रहसंग्रस्तं विद्यात्तस्य च जीवितम् । गः ।
८ । आत्मनि लीयते । गः ।
९ । ग्रहदृष्टः । गः ।
१० । पीडितः । गः ।
११ । विशोधना । गः ।

नोद्विजेत्त्वाहतः[१] पृष्ठे कशया पाणिनापिवा ।
तं वै दीर्घस्वरग्रस्तं[२] दृष्ट्वैव परिवर्जयेत् ॥ १७ ॥
श्यामं[३] जिह्वामुखं यस्य नष्टदृष्टिस्मृतिर्भवेत् ।
ऊर्द्ध[४]ग्रहकृतं दोषं तस्य[५] दीनस्य निर्द्दिशेत् ॥ १८ ॥
तालुजिह्वे[६] च नेत्रे च वृषणौ मेढ्रमेव च ।
श्यावं रूपं च[७] यस्य स्याद् गात्रगौरवमेव च ॥ १९ ॥
तस्य स्वेदपरीतस्य बुद्धिमान्[८] वरुणग्रहैः ।
कृतं दोषं महाघोरं[९] स्तब्धाङ्गस्य विनिर्द्दिशेत् ॥ २० ॥
हेषते[१०] सततं यस्तु हृष्टरोमा तुरङ्गमः ।
स्तब्धाक्षो जृम्भतेऽत्यर्थं तस्यापि सलिलग्रहः[११] ॥ २१ ॥

---

१७। नोद्विजेत् न भीतो भवेत्। दीर्घस्वरग्रस्तमिति दीर्घेण स्वरेण रावेण ग्रस्तमाक्रान्तं। मृगग्रहग्रस्तमिति पाठे, तन्नामकेन ग्रहेण ग्रस्तम्।

१८। श्यावमिति पाठे कृष्णपीतं, जिह्वामुखकृष्णत्वं दर्शनस्मरण-नाशश्चेति सर्व्वं ऊर्द्धनामकग्रहजनितमित्यर्थः। दीनस्य भीतस्य स्तब्धाङ्गस्येति पाठे जड़ीभूतकलेवरस्य।

---

१। हतः। गः।
२। मृगग्रहग्रस्तं। गः।
३। श्यावं। गः।
४। ऊर्द्धं। गः।
५। स्तब्धाङ्गस्य। गः।
६। तालुजिह्वा च। गः।
७। श्यावं तपस्व। खः।
८। मेहमानस्य बुद्धिमान्। खः।
९। वरुणग्रहकृतं रोगं। खः।
१०। क्षेषते। गः।
११। सालिलग्रहः। गः।

सुविस्फुरितसर्व्वाङ्गः[1] सलिले निश्चलस्थितः।
ऐषते विस्तरं[2] वाजी वरुणग्रहपीड़ितः॥ २२॥
मुहूर्त्तावस्थितस्तोये जानुभ्यां योऽवगच्छति[3]।
मुखपाकश्च[4] यस्यान्ते तं विन्द्यादुदकग्रहम्॥ २३॥
उद्वर्त्तिताक्षः[5] खिन्नश्च संगृहीतहनुश्च यः।
कम्पमानश्च यो वाजी स रविग्रहपीड़ितः॥ २४॥
स्तब्धग्रीवो न जानाति कशाघातं सुदुर्म्मनाः।
जलग्रहगृहीतोऽश्वो वामपार्श्वेन निश्चलः॥ २५॥
शूनाक्षिकूटो रक्ताक्षः[6] कृशः स्खलति यो मुहुः।
बृहस्पतिगृहीतोऽसौ नैव जीवति तादृशः॥ २६॥

२२। सुविस्फुरितसर्व्वाङ्ग अतिशयकम्पान्वितकलेवरः। खिन्न-स्फुरितसर्व्वाङ्ग इति पाठे खिन्नं घर्म्माक्तं। विस्तरं विकृतस्वरं।

२३। मुखपको मुखस्रावः। त्वचि पाक इति द्वितीयपाठे त्वचः पक्ववद्वेदनावत्वमित्यर्थः।

२४। संगृहीतहनुः स्तब्धहनुः।

१। भिन्नस्फुरितसर्व्वाङ्गः। गः।
२। निश्चलः। गः।
३। योऽवतिष्ठते। गः।
४। त्वचि पाकश्च यस्य स्यात्तं विन्द्यादुदकं ग्रहः। गः।
५। ऊर्द्ध्वं वर्त्तितचक्षुस्तु खिन्नस्तब्धहनुश्च यः। गः।
६। शूनाक्षिपक्ष्मकूटस्य। खः।

कम्पते[1] पूर्व्वकायेन स्वल्पपानाशनश्च यः ।
शेते प्रसार्य्य गात्राणि शीताङ्गः सोमपीड़ितः ॥ २७ ॥
रक्ताक्षः[2] शूनकण्ठश्च कम्पमानश्च श्वासयुक् ।
फेनतीव्राङ्गखेदश्च[3] ग्रस्तः सूर्य्यग्रहेण सः ॥ २८ ॥
उदके[4] तत्समीपे वा प्रायो गृह्लाति दारुणः ।
तुरङ्गं सत्वहीनन्तु पङ्गुधो वारुणग्रहः ॥ २९ ॥
यज्ञभूमिचिताचैत्यशून्यवेश्मसुरालये[5] ।
लोहिताक्षादयो रोपाद्[6] ग्रहा गृह्लन्ति वाजिनः ॥३०॥
एवंविधैर्निदानैस्तु ग्रहदोषं विनिर्द्दिशेत् ।
वातपित्तकफानान्तु निदानैर्व्याधिमादिशेत् ॥ ३१ ॥
एकाकारेण रोगेण म्रियते वा हयो यदा ।
तुरङ्गानां तदा ज्ञेया उपसर्गाः सुदारुणाः ॥ ३२ ॥
ग्रहदोषेषु सर्व्वेषु उपसर्गांस्तथैव च ।
अथोक्ताञ्च महाशान्तिं गान्धर्व्वीञ्च प्रयोजयेत् ॥ ३३ ॥
अश्वरक्षाविधानाय चाश्वं सम्मान्य पावकम् ।

१ । स्तम्भते । गः ।
२ । रक्ताक्षः सन्नकण्ठश्च कम्पकश्वासंसंयुतः । गः ।
३ । फेनातिशाखान् वेदी । खः ।
४ । उदकस्य समीपे वा । गः ।
५ । यज्ञभूमिं विनिर्मित्य तत्रैव नुधदेवता । गः ।
६ । सर्व्वे ग्रहाः गृह्णन्ति वाजिनम् । गः ।

जुहुयाद्घृतसंयुक्तं शुचिः स्नात्वा सुपूजितः ॥ ३४ ॥
शान्तिकं कारयेत् कर्म्म बलिञ्चापि प्रयोजयेत् ।
ग्रहदोषेषु[1] सर्व्वेषु शान्तिकर्म्माणि कारयेत् ॥ ३५ ॥
देवद्विजप्रव्रजितगुरुवृद्धान् यतीनपि ।
तोषयेद्भोजनैर्दानैर्वस्त्रगोकाञ्चनादिभिः ॥ ३६ ॥
रात्रौ शालासमीपे तु बलिं दद्याच्चतुर्दिशम् ।
मत्स्यमांसैश्च पक्वान्नैः कृशरैः[2] पायसादिभिः ॥ ३७ ॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
नीराजनविधिं कृत्वा नयेदश्वान् पृथक् पृथक् ॥ ३८ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ग्रहगृहीतचिकित्सिते सप्तपञ्चाशत्तमोऽध्यायः ।

---

## अथाष्टपञ्चाशत्तमोऽध्यायः ।

वातादिशोषलक्षणानि ।

वातादिदोषजातानां शोषाणामनुपूर्व्वशः ।
लक्षणञ्च चिकित्सां प्रवक्ष्यामि समासतः ॥ १ ॥

---

१ । अयं श्लोको ग-पुस्तके नास्ति ।

---

१ । रोगेषु । गः ।   २ । कृशरा । खः ।

आध्मातकुक्षिर्[1]यस्य स्याद् रूक्षः कार्श्यः क्षशस्य च।
मूत्रक्षच्छ्रं ततश्चैव भिन्नफेनिलविह्वलम्॥ २॥
प्रत्यहं हीयमानस्य मन्दग्रासस्य तस्य वै।
भिषग् वातात्मकं शोषं चित्ररोगिणः[2] समादिशेत्॥ ३॥
कार्श्यदौर्ब्बल्यसंयुक्तस्तृष्णादाहसमन्वितः।
सङ्कीर्णे रोमकेशे च पित्तशोषं विनिर्द्दिशेत्॥ ४॥
भिन्नदीर्घाङ्गवालस्य मन्दग्रासस्य बुद्धिमान्।
सततं हीयमानस्य भृशं कासार्द्दितस्य च॥ ५॥
नित्यं शीतशरीरस्य निद्रातन्द्रान्वितस्य च।
भिन्नचिह्नस्य वाहस्य शोषं श्लेष्मात्मकं वदेत्[3]॥ ६॥
सर्व्वलिङ्गान्वितश्चैव[4] जानीयात्सान्निपातिकम्।
असाध्यं वाजिनां[5] शोषं कृच्छ्रसाध्यमथापि वा॥ ७॥

४। एषच श्लोकः ख-पुस्तके नास्ति।

५। पञ्चमस्य तृतीयतुर्यपदौ षष्ठस्य च प्रथमपादद्वयं ग-पुस्तके नास्ति।

१। आध्मातकुक्षिः। खः।
२। शोषरोगिणां तत्। खः।
३। भवेत्। खः।
४। सर्व्वलिङ्गान्वितं शोषं। गः।
५। वाजिनश्चैव। गः।

गात्रं[1] भवति दुर्गन्धि सर्व्वेषामेव शोषिणाम्।
अहन्यहनि चाङ्गानि हीयन्ते च विशेषतः॥ ८॥

एतच्चिकित्साः।

एषां चिकित्सां वक्ष्यामि मुनिभिः पूर्व्वनोदिताम्।
वातादिदोषजातानां[2] शोषाणामनुपूर्व्वशः॥ ९॥
पञ्चमूलकषायेण कृत्वा मांसरसं बुधः।
शाल्यन्नं[3] भोजयेत्तेन सतैललवणान्वितम्॥ १०॥
युक्त्या[4] संभोजितं पश्चात् सञ्जाताग्निबलं सुधीः।
प्रसारिण्यादिभिस्तैलैस्तत[5]श्चास्थापयेद् भिषक्॥११॥
कदाचिद्वातशोषार्त्तः सिद्धिं याति न वा[6] क्षयः।

८। सर्व्वेषामेव शोषिणामिति वातादिचतुर्विधशोषिणामित्यर्थः। पाठान्तरे गात्रमित्यत्र मलम्। हीयन्ते क्षीणानि भवन्ति।

१०। पञ्चमूलस्य पादशिष्टकषायेण मांसं विपाच्य तेन सह शाल्यन्नं भोजयेदित्यर्थः। पञ्चमूलं पलमितम्। लवणस्य पलं तैलस्य च कुडवः।

११। आस्थापयेत् आस्थापनकर्म्म कारयेदित्यर्थः। प्रसारिण्यादिभिस्तैलैरिति तैलाध्यायोक्तैरित्यर्थः।

१। मलं। गः।
२। वातादीनाञ्च दोषाणां शोषिणां। खः।
३। शाल्यन्नभोजनं तेषां। गः।
४। युक्ता। गः।
५। पश्चात्। गः।
६। अन्यथा क्षयः। गः।

विद्वद्भिः क्रियया वैद्यैः सम्यगेवं[1] प्रयुक्तया ॥ १२ ॥
दर्भमोरट[2]शालीनां तथाच नल[3]काशयोः ।
मूलान्यादाय सर्व्वेषां क्वाथयेन्मृदुनाग्निना[4] ॥ १३ ॥
मांसैस्तेन[5] कषायेण रसं कृत्वा विचक्षणः ।
यवान्नं भोजने दद्यात् सघृतं पित्तशोषिणम् ॥ १४ ॥
वासानिम्बकषायेण रसं कृत्वा विचक्षणः ।
जाङ्गलानां तथा मांसैर्मृगाणामथ पक्षिणाम् ॥ १५ ॥
कुलत्थं सुकृतं तेन[6] रसकेन समन्वितम् ।
भोजयेन्मधुना युक्तं तैलत्रिकटुकान्वितम्[7] ॥ १६ ॥

१३ । मोरट इक्षुमूलं । नलकाशयोरित्यत्र पाठान्तरे शणमूलम् । एषां मूलानां मिलित्वा पलं ग्राह्यम् ।

१४ । सघृतमित्यत्र घृतं पलचतुष्टयमितम् ।

१५ । जाङ्गलानामिति मृगविशेषणम् ।

१६ । सुकृतं सुसिद्धं । तेन रसकेनेति पूर्व्वोक्तकषायसिद्धमांसरसेनेत्यर्थः । श्लेष्मशोषातुरं भोजयेदित्यन्वयः ।

१ । चैवहि । गः ।
२ । दर्भशरेक्षु । गः ।
३ । प्लक्ष । गः ।
४ । मृदुना चाग्निना शनैः । गः ।
५ । तेन सर्वकषायेण । गः ।
६ । क्वाथयेद्वैद्यः । गः ।
७ । मधुसंयुक्तांस्तान् तिक्तैश्च कटुकान्वितैः । खः ।

श्लेष्मशोषातुरं[1] वाहं वीक्ष्य चाग्निबलं बुधः ।
सन्निपातोद्भवे चापि कुर्य्याद् भेषजसङ्करम् ॥ १७ ॥
चितायां दह्यमानायां तद्धूमेन विचक्षणः ।
धूपयेत् सर्व्वशोषे तु तुरङ्गं शास्त्रकोविदः ॥ १८ ॥
जलौकसाञ्च रक्तेन कुर्य्यान्नेत्राञ्जनं[2] भिषक् ।
पिष्टाभिः सकलाभिर्व्वा ताभिः[3] शस्तमथाञ्जनम् ॥ १९ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे शोषेऽष्टपञ्चाशत्तमोऽध्यायः ॥

---

## अथ एकोनषष्टितमोऽध्यायः ।

वातवलासकलक्षणचिकित्सितम् ।

कफमारुतसम्भूतः स्थूरासन्धिसमाश्रितः ।
शोथो वातवलासाख्यो मृदुश्चैव सवेदनः ॥ १ ॥
तेनातिखञ्जतोऽश्वस्य स्तब्धं पर्व्व च जायते ।
स्थोरकां[4] वेधयेत् सम्यग् वसातैलञ्च सर्पिषा ॥ २ ॥

---

१ । श्लेष्मपित्ताय चाश्वाय । गः ।

२ । तेनाञ्जनं । गः ।

३ । वातार्त्ते शस्तमञ्जनम् । गः ।

४ । वसातैलञ्च सर्पिश्च पञ्चभिर्लवणैः सह । क्षते दद्याद् भिषक् प्रातः स्वच्छस्वेदैश्च मर्द्दयेत् ॥ गः ।

पञ्चभिर्लवणैः सार्द्धं पाने दद्याद्भिषग्वरः।
प्राज्ञः शोथं ततस्तैश्च मर्द्दयेद्भिषजां वरः॥ ३॥
भग्नैः शंखकपालाद्यैः स्वेदैस्तं स्वेदयेद्भिषक्[1]।
तैलयुक्तं जलं पाने ग्रासे दूर्व्वाञ्च दापयेत्॥ ४॥
पञ्चमूलकषायेण क्षीरयुक्तेन वस्तयः[2]।
सुखाय विहितास्तस्य पिप्पलीकल्कयोजिताः॥ ५॥
चैवृतेन[3] च तैलेन कुर्य्यात्तैलानुवासनम्[4]।
अशान्तौ[5] वह्निना कर्म्म ततः सम्पद्यते सुखम्॥ ६॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे वातबलासकचिकित्सिते एकोनषष्टितमोऽध्यायः॥

---

३। तैरिति उक्तवसातैलैर्लवणादिमिश्रैरित्यर्थः।
५। पञ्चमूलस्य पलदशकम्। क्षीरस्य चाढ़को वस्त्यर्थे ग्राह्यः।

---

१। स्वेदैः संस्वेदयेद्भिषक्। खः।
२। वस्तिना। गः।
३। त्रैवृताद्येन। गः।
४। तस्यानुवासनम्। गः।
५। असान्तौ। खः।

## अथ षष्टितमोऽध्यायः।

व्यापन्नलवणचिकित्सितम्।

प्रभूतं लवणं यस्य भोजने वाजिनो भवेत्।
केवलं वा ततश्चास्य[1] व्यापत् सुमहती भवेत्॥ १॥
लवणव्यापदार्त्तस्य स्वेदः श्वासश्च जायते।
जलावगाहनं शस्तं तस्य कर्द्दमलेपनम्॥ २॥
शर्करोदकपानञ्च हितं तस्मै[2] प्रकीर्त्तितम्।
पयोऽनुवासनं वापि[3] विशेषेणैव जायते॥ ३॥
लवणव्यापदार्त्तस्य पिष्ट्वाऽलम्बुषया सह।
आलोड्य तिलतैलेन ततः पानं प्रदापयेत्।
हरीतकी कुष्ठकृतं दापयेत् पानमुत्तमम्॥ ४॥
बहुभिः खादितैर्धान्यैर्धान्यव्यापदमादिशेत्।
शूलचिह्नं[4] ततस्तस्य विह्वलत्वञ्च जायते॥ ५॥

---

४। लवणेत्यादि सार्द्धश्लोकः ख-पुस्तके नास्ति। अत्र तिल-तैलस्य प्रस्थार्द्धं ग्राह्यम्। अलम्बुषायाश्च पलम्।

५। धान्यव्यापदं धान्यभक्षणजनितव्याधिमित्यर्थः।

---

१। तस्य व्याधिश्च महती। खः।
२। तस्य सुमात्रया। गः।
३। क्षीरस्यास्थापनं तस्य। ग।
४। शूलं चिह्नं। खः।

सौभिस्ववर्त्तिविहितां कुर्य्यात्तस्य भिषक् क्रियाम्।
अनयापि[1] सुखी न स्यात् कुक्षौ दाहस्ततः[2] स्मृतः॥ ६॥
लवणव्यापदुक्तस्तु[3] विधिः सर्व्वः प्रकीर्त्तितः।
सुराव्यापत्परीतस्य मुनिभिः शास्त्रकोविदैः॥ ७॥
क्षीरव्यापद्गृहीतोऽश्वो मन्दं पिबति खादति।
निद्रालुर्वेदनार्त्तश्च ध्यायी गुरुशिरा भवेत्॥ ८॥
पिप्पल्या हस्तिपिप्पल्या तेजोवत्या तथैव च।
अतिविषेण शुण्ठ्या च युक्ता पाने सुरा हिता॥ ९॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे व्यापच्चिकित्सिते षष्टितमोऽध्यायः॥

---

## अथैकषष्टितमोऽध्यायः।

### विषलक्षणचिकित्सितम्।

स्थावरं जङ्गमञ्चैव विषं द्विविधमुच्यते।
जङ्गमं प्राणिसम्भूतं स्थावरञ्चापि मूलजम्॥ १॥

---

९। हस्तिपिप्पली गजपिप्पली। तेजोवती वचा। एषां पलमात्रः कल्को देयः।

१। प्राणिसम्भूतमिति सर्पादिजनितम्। मूलजं कालकूटादिजम्।

---

१। यदि तया। गः।
२। तदा। गः।
३। लवणव्यापत्परीतस्य। गः।

प्रस्वेदो रोमहर्षश्च अरुचिर्गात्रसादनम्।
विमर्द्दनं च लाला च भिन्नविह्वलमेव च ॥ २ ॥
लिङ्गान्येतानि वाहस्य सर्पदष्टस्य लक्षयेत्।
स्थावरेऽप्येवमेवन्तु नो दंशस्तत्र केवलम् ॥ ३ ॥
कीटादिविषसंयुक्ते लालास्रावोऽपि जायते[1]।
शोथो वाधप्रदेशे तु अन्यच्च सर्पदष्टवत्[2] ॥ ४ ॥
दत्वादौ[3] घृतपानन्तु जीवरक्षाविचक्षणः।
ततः कुर्य्यात् क्रियां वैद्यः प्रच्छन्नोद्वर्त्तनादिकम् ॥ ५ ॥
तण्डुलीयकमूलन्तु मूलं विल्वकपित्थयोः।
गोघृतेन समालोड्य सर्पदष्टे तु पाययेत् ॥ ६ ॥
सर्पदष्टस्य वाहस्य क्षिप्रं वस्त्रेण बुद्धिमान्।
प्रच्छायेद्दंशदेशन्तु[4] शिरां तस्य च[5] वेधयेत् ॥ ७ ॥

---

४ । वाधेत्यत्र वेधेति पाठः साधुः ।

६ । तण्डुलीयकमूलं । (कांटानटेरमूल) ।

७ । प्रच्छायेत् परिच्छादयेदित्यर्थः ।

---

१ । कीटादिकविषे लाला स्रावो वाहस्य जायते । गः ।

२ । दंशप्रदेशेतु अन्यद्दा सर्पदंष्ट्रवत् । गः ।

३ । दत्वादौ । खः ।

४ । प्रच्छायेदंशदेशन्तु । खः ।

५ । वा तस्य । खः ।

एवं कृत्वा भिषक् चूर्णैः शीघ्रमुद्वर्त्तयेत्ततः।
शालिहोत्रादिभिः प्रोक्तैर्विषघ्नैर्वक्ष्यमाणकैः॥ ८॥
कुष्ठजीरक[१]दन्तीभिर्नेपाली[२]भद्रमुस्तकैः।
कट्फलेन्द्रयवागारधूमास्फोतकसैन्धवैः॥ ९॥
विडङ्गपिप्पलीक्षारशतपुष्पावचाजलैः[४]।
निशातेजोवतीपाठामरिचागारधूमकैः॥ १०॥
यथाप्राप्तः समस्तैर्वा एतैश्चूर्णीकृतैर्बुधः।
दष्टस्योद्वर्त्तयेद्देशं प्रस्थितश्चैव वाजिनः॥ ११॥
प्रलेपो वा प्रदातव्य एतैर्गोमूत्रपेषितैः।
ततः शान्तिं प्रयच्छन्ति तुरङ्गे विषदूषिते॥ १२॥
चन्दनागुरुकुष्ठैश्च लोध्रभार्गीफलीनखैः।
शिरीषदन्तीमूलैश्च दंशलेपो विषापहः॥ १३॥
दंशनार्त्तस्य वाहस्य दंशस्थानं विचक्षणः।
छिन्द्यात्तीक्ष्णेन शस्त्रेण मन्त्रैश्चैव विषं हरेत्॥ १४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे विषचिकित्सिते एकषष्टितमोऽध्यायः॥

---

८। उद्वर्त्तयेत् घर्षयेत्।

९। आस्फोतः (हापरमाली)।

१३। फली प्रियङ्गुः।

---

१। चित्रक। गः। ३। कक्कोल। गः।
२। पिप्पली। गः। ४। सलिः। गः।

## अथ द्विषष्टितमोऽध्यायः।

अपस्मारलक्षणचिकित्सितम्।

पतत्यकस्माद् यो भूमौ स्तब्धाक्षो गतचेतनः[1]।
स्वस्थाश्रयोऽपि[2] यः शीघ्रं सोऽपस्मारीति कीर्त्तितः॥ १॥
उन्मादोक्तक्रियां सर्व्वां ततः कुर्य्याद्विचक्षणः।
घृतस्यातिपुराणस्य तस्य पानञ्च शस्यते[3]॥ २॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे अपस्मारचिकित्सिते द्विषष्टितमोऽध्यायः।

---

## अथ त्रिषष्टितमोऽध्यायः।

षट्पदीभक्षलक्षणचिकित्सितम्।

आपाण्डुवर्णा[4] कपिला हरिता च प्रजायते।
महोदरा च षट्पादी[5] हृस्ववक्त्रोत्तमाङ्गिका॥ १॥
षट्पदी नाम विख्याता तथा चाञ्जलिकारिका[6]।
गङ्गापतङ्गसंज्ञा[7] च भाषिता सा दुरासदा॥ २॥

---

१। कम्पवाहनः। गः।
२। पुनश्च योत्थितः। गः।
३। प्रशस्यते। गः।
४। हरुर्त्तलाच। गः।
५। मन्दोदरी षट्पदीच। गः।
६। चाण्डालिकारिका। खः।
७। गाङ्गपाताङ्गसंज्ञा। खः।

ग्रासमध्यगतं[१] वाहा ये भक्षन्ति सुदारुणम्।
तेषां शोषश्च मूर्च्छा च भ्रमः श्वासश्च[२] जायते॥ ३॥
तेषु गव्यं घृतं पाने अभ्यङ्गश्च प्रशस्यते।
सर्पदष्टचिकित्सायां कीर्त्तितं यच्च भेषजम्॥ ४॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे षट्पदी-भक्षचिकित्सिते त्रिषष्टितमोऽध्यायः॥

## अथ चतुःषष्टितमोऽध्यायः।

साध्यासाध्यविवेकः।

अत ऊर्द्ध्वं प्रवक्ष्यामि साध्यासाध्यविनिश्चयम्।
एकः प्रशाम्यते व्याधिः पुनरन्यः[३] प्रकुप्यति॥
पुनरन्यः[४] पुनश्चान्यो यस्य तं परिवर्ज्जयेत्॥ १॥
व्याधिनाऽस्य[५] वाहस्य प्रकृतिं याति[६] सर्व्वदा।
यः स्वभावं[७] परित्यज्य दुश्चिकित्स्यः स उच्यते॥ २॥

१। पुनरित्येकस्य प्रशमनं अन्यस्य च प्रकोप इत्यर्थः।
२। अस्य श्लोकस्य द्वितीयपाठो न सङ्गच्छते।

१। ग्रासमध्यगता वाहा भक्षयन्ति। गः।
२। शोथः। गः।
३। अन्यस्यैव। गः।
४। पुनश्चान्यः। गः।
५। विपरीतस्य। खः।
६। प्रकृतिर्याति। खः।
७। स्ववाहन्तु। खः।

किञ्चित्साध्यं[१] तथासाध्यं लक्षणं च प्रकाश्यते।
कृच्छ्रसाध्यः स विज्ञेयो याप्यो वाथ हयो भवेत्[२] ॥ ३ ॥
शुष्यते नेष्टगन्धश्च[३] सोऽप्यसाध्यः प्रकीर्त्तितः ॥ ४ ॥
सप्ताहात् क्रियमाणेऽपि भेषजे यस्य वाजिनः।
विशेषो न भवेत्तस्य चिकित्सां न प्रयोजयेत् ॥ ५ ॥
दीप्ताग्नेस्तु प्रयोक्तव्या क्रिया हीनाग्नये तु न।
निश्चेष्टोऽनिमिषाक्षश्च वालैर्वा यो न वीज्यते ॥ ६ ॥
लभते ताड़नं दाहं रूपैश्च परिवर्जयेत्।
तनुः स्तब्धा श्लथा वापि जिह्वा चैव तथाविधा ॥ ७ ॥
स्थूलो वा यो निराहार आहारैर्वा न पुष्यति।
पूर्व्वाङ्गं शूयते वामं दक्षिणं यस्य पश्चिमम् ॥ ८ ॥
सदाहगुरु एकाङ्गं शूयते यस्य वा हरेः।
शीतं गुदश्च नासास्यं शीतोच्छ्वासी च यो हयः ॥ ९ ॥

---

७। तनुरित्यादि नैव साध्यः प्रकीर्त्तित इत्यन्तैः श्लोकैरसाध्यलक्षणानि प्रदर्शितानि।

८। वाहमित्यत्र वाममिति युक्तः पाठः।

---

१। इत्येवासाध्यताया। खः। ३। नष्टगन्धी च। गः।
२। मतः। गः।

शूलाध्मानानिमेषार्त्तः कृच्छ्रगामी च जायते ।
कृच्छ्रश्च कम्पते श्वासाध्मातश्च शूनमेहनः ॥ १० ॥
श्लेष्मा न पिच्छिलः सान्द्रः फेनिलः पाण्डुरस्तथा ।
गलशुण्डा गले यस्य शोफो वा कठिनो भृशम् ॥ ११ ॥
हृद्ग्रो गलग्रहो वापि मन्या वापि सुदूषिता ।
श्लेष्मा विविधवर्णश्च सान्द्रोऽतिपूतिगन्धवान् ॥ १२ ॥
क्षयजः काशतो वापि ह्रेर्यस्य प्रवर्त्तते ।
अतिसारेण क्षीणस्य यस्य शोथः प्रजायते ॥ १३ ॥
पश्चात्तु मूत्ररोगश्च जायतेऽश्वस्य दारुणः ।
न संवृणोति यो मेढ्रं वक्षःशोभाविवर्जितः ॥ १४ ॥
गुर्वङ्गोऽतिशयं भूय आत्मानमभिवीक्षते ।
भग्नग्रीवश्च यो वाहो व्रणैर्यश्च विशुष्यते ॥ १५ ॥
विस्तीर्णा श्रोणिका यस्य श्वासः स्वेदश्च मूत्ररुक् ।
बाह्वोरभ्यन्तरे यस्य द्रोणिका भिद्यतेऽपि च ॥ १६ ॥
मण्डूकायाञ्च कीर्णायां नित्यस्रावी तलो भवेत् ।
खुरश्च यस्य वाहस्य खिन्नश्चैव प्रजायते ॥ १७ ॥
सर्व्वे पूर्व्वोदिता ह्येते नैव साध्याः प्रकीर्त्तिताः ।
तथापि जीवमानस्य कुर्य्याद्वैद्यः प्रतिक्रियाम् ॥ १८ ॥
प्रदीप्ताग्निर्भवेद्यस्तु प्रसन्नं रूपमीक्षते ।
बहुपानरतो वाजी साध्यरोगः स उच्यते ॥ १९ ॥

कायेन धनुते यस्तु लोड़तेऽतिशयं हरिः।
वड़वायां रतश्चैव सोऽपि साध्यः प्रकीर्त्तितः॥ २०॥
चक्षुषोः सुदीप्तिर्यस्य स्वेददोषी च यो हयः।
स्कंतुच्छर्द्दितेस्तुं (!) शिरा यस्य च वेधिता॥ २१॥
यस्त्वसाध्यः स्मृतो वाहः स कश्चिन्नैव साध्यते।
काले नोपेक्षिताः साध्या दुश्चिकित्स्याः प्रकीर्त्तिताः॥२२॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे साध्यासाध्यविवेके चतुःषष्टितमोऽध्यायः।

---

## अथ पञ्चषष्टितमोऽध्यायः।

वातादिप्रकृतिलक्षणानि।

धूमवर्णः कृशो रूक्षः शिरालो वेगवान्[1] हयः।
ऊर्द्ध्ववर्त्तितजिह्वश्च[2] वातप्रकृतिरुच्यते॥ १॥
पित्तप्रकृतिकश्चापि[3] कृशतीक्ष्णतनुत्वचः।
नित्यं शीताभिलाषी च वह्वाशी पीतवर्णकः॥ २॥

---

२०। धनुते धनुराकारो भवति। लोड़ते मत्तो भवति।

---

१। शिरानद्धाङ्गवान्। गः।
२। ऊर्द्ध्ववान्तो द्विजिह्वश्च। खः।
३। नितान्तजावतिसिद्धः प्रोक्तः। गः।

पित्तप्रकृतिकस्यापि भवेत् स्वेदश्च जायते ।
श्लेष्मसुसंहताङ्गस्य क्षुत्तृट्संहरणे क्षमः ॥ ३ ॥
सङ्कीर्णप्रकृतिश्चापि[1] विद्यात् सङ्कीर्णलक्षणम् ।
प्रकृतिं सम्यगालोक्य भिषग्वातादिकामिमाम् ॥ ४ ॥
यथादोषं ततः कुर्य्याच्चिकित्सां शास्त्रसम्मताम् ।
वातश्लेष्म तथा पित्तं ज्ञात्वा कर्म्म प्रचक्रमेत् ॥ ५ ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे प्रकृतिज्ञाने पञ्चषष्टितमोऽध्यायः ॥

---

## अथ षट्षष्टितमोऽध्यायः ।

### रसोनकल्पः ।

रसोनस्य प्रवक्ष्यामि कल्पं[2] शास्त्रानुसारतः ।
[3]सम्पूर्णरसवीर्य्योऽसौ मासे संगृह्य फाल्गुने ।
गृहीत्वा स्थापयेत्तत्र यत्नतो[4] नैव नश्यति ॥ १ ॥
ततस्तस्य प्रयोगन्तु कुर्य्यान्मात्राप्रमाणतः ।

---

३ । प्रथमपादद्वयं ख-पुस्तके नास्ति।

५ । अस्य तृतीयचतुर्थपादौ ख-पुस्तके न स्तः ।

---

१ । श्चापि । खः ।

२ । कल्पं । गः ।

३ । सम्पूर्णरसवीर्य्याभ्यां मासे ग्राह्यो तु फाल्गुने । गः ।

४ । यत्नासौ । गः ।

मातुलुङ्गरसोपेतं मांसानां रसकेन च[1]।
रसं दद्याद्रसोनस्य अन्यैर्वाम्लैः[2] समायुतम्॥ ३॥
प्रथमे दिवसे देयं[3] रसोनस्य पलद्वयम्।
एकैकपलवृद्ध्या तु दद्याद्[4] यावच्च विंशति॥ ४॥
उत्तमाश्वस्य मात्रैषा मध्यमस्य चतुर्द्दश।
जघन्यस्य[5] पलान्यष्टौ मात्रैषा न विरोधिनी॥ ५॥
हीनन्तु रसमात्रातो[6] भागेनैकेन बुद्धिमान्।
यवकल्केन[7] संपुष्टं मांसयुक्तं प्रदापयेत्॥ ६॥
प्रत्यहं दापयेत्तावद् यावन्मात्रा विवर्द्धते।
मात्रावृद्धिं भिषग्युक्त्या[8] दद्यादेकान्तरं ततः॥ ७॥
रसोनस्य प्रयोगश्च हेमन्ते शिशिरे तथा।
प्रावृट्काले वसन्ते च मध्यमः परिकीर्त्तितः॥ ८॥

---

८। रसोनस्येत्यादिश्लोकः ख-पुस्तके नास्ति।

---

१। मायानाच्च रसेन वा। गः।
२। प्रत्यैः। गः।
३। दद्यात्। गः।
४। यावत् पूर्णाच्च विंशतिः। गः।
५। अधमस्य। गः।
६। रसमात्रायाः। गः।
७। यावबाटीयुतं। गः।
८। बुद्ध्या। खः।

शरन्निदाघयोश्चापि नैव देयः कदाचन।
प्रावृट्काले प्रदातव्यो जलपूर्णे महीतले ॥ ९ ॥
वातिकेषु विकारेषु तिलतैलेन योजितः[1]।
क्षीरसर्पिःसमायुक्तः पित्ते वै शर्करान्वितः[2] ॥ १० ॥
कफे[3] कटुकतैलेन कटुकैरवचूर्णितः[4]।
रसः प्रभाते दातव्यः सायं कल्कस्तु भोजने ॥ ११ ॥
पिण्डेनैव[5] प्रदातव्यो रसोनस्तु विजानता।
वायौ प्रधानः पित्ते तु विषमस्तु कफे समः ॥ १२ ॥
वातश्लेष्मणि वाते वा कफे वा पानमिष्यते।
रसं दद्यात्[6] प्रभाते तु स्तोकं वातं निवारयेत्[7] ॥१३॥
क्षौद्रकं मधुरं[8] वापि दद्याद् ग्रासं ततो बुधः।
शीतलं विमलं तोयं स्थानं वापि सुखानिलम् ॥ १४ ॥
कल्कप्रयोगे विहितो विधिरेष शरद्वितः[9]।
महागुणं स्मृतं पानं सकल्कञ्च[10] मनीषिभिः ॥१५॥

---

१२—१३। वातेति पादद्वयं ख-पुस्तके, वायाविति पादद्वयञ्च ग-पुस्तके नास्ति।

---

१। मूर्च्छित। गः।
२। युतः। गः।
३। सकफे। गः।
४। चूर्णितो रसः। गः।
५। पिष्टेन। खः।
६। दत्वा। खः।
७। वारं न वारयेत्। खः।
८। मधुकं। खः।
९। विजानता। गः।
१०। पाने सत्वयश्च। गः।

कल्कप्रयोगेऽल्पगुणं तथा चात्ययवर्जितम्[1] ।
क्रियावसाने[2] दातव्यं शालिषष्टिकपायसम् ॥१६॥
त्रिरात्रं[3] पञ्चरात्रं वा शर्करासर्पिषान्वितम् ।
पुराणः स तु विज्ञेयो नैव देयस्तु वाजिनाम् ॥ १७ ॥
विधिरेष समुद्दिष्टः पूर्व्वशास्त्रविशारदैः ।
द्विगुणञ्चापि सप्ताहं तुरङ्गं[4] नैव वाहयेत् ॥ १८ ॥
स्वादुशीतोपचारश्च तत्र यावत्[5] प्रकीर्त्तितः ।
रसोने तु यदा स्वेदी[6] श्वासवान् जायते हयः ॥ १९ ॥
व्यापद्युक्तः स विज्ञेयस्तस्य कुर्य्याद्भिषक्[7] क्रियाम् ।
पित्तज्वरसमुद्दिष्टां[8] क्रियां सर्व्वां प्रयोजयेत् ॥ २० ॥
रसोनव्यापदाघाते तुरङ्गं मतिमान् भिषक् ।
वातभग्नास्थिगात्रेषु मारुताहतमूर्त्तिषु ॥ २१ ॥
वृद्धेषु च विशेषेण रसोनञ्च[9] प्रदापयेत् ।

---

१७ । पुराण इत्यादिश्लोकः ख-पुस्तके नास्ति ।

---

१ । ...त्ययवर्जितः । खः ।
२ । कृतावसाने । खः ।
३ । त्रिरात्रं पञ्चरात्रं वा शर्करा फाणितान्विता । गः ।
४ । द्विगुणं । गः ।
५ । यथावत् परिकीर्त्तितः । गः ।
६ । स्वादी स्वभावाज्जायते हयः । गः ।
७ । क्रियामिमाम् । गः ।
८ । समुद्दिष्टं विधिं सर्व्वम् । गः ।　　९ । सरसोनं । गः ।

सप्ताहमेकं[1] द्विगुणं त्रिगुणं वा यथाविधि।
प्रयोगोऽस्य स्मृतः सम्यग् यथाशास्त्रं तपोधनैः ॥२२॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे रसोनकल्पे षट्षष्टितमोऽध्यायः।

---

## अथ सप्तषष्टितमोऽध्यायः।

---

गुग्गुलुकल्पः।

स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः[2]।
शोभनो गुग्गुलुः प्रोक्तः सुगन्धिर्यश्च पिच्छिलः ॥ १ ॥
शुष्को दुर्गन्धिकश्चैव वर्णान्यत्वसमन्वितः[3]।
पुराणः सतु विज्ञेयो नैव देयस्तु वाजिनः[4] ॥ २ ॥
विधिरस्य[5] द्विधा प्रोक्तः पूर्व्वशास्त्रविशारदैः।
एकः पाने[6] प्रयोगेण द्वितीयो भोजनेन तु ॥ ३ ॥

---

१। एतद् द्विगुणं प्रदद्याच्च यथाविधिम्। गः।
२। निभोपमः। गः।
३। वर्णान्यत्वमुपागतः। गः।
४। वाजिनाम्। गः।
५। विधिश्चास्य। गः।
६। एकं पानप्रयोगेण। गः।

अर्द्धप्रहरगे[1] सूर्य्ये गुग्गुलुं दापयेद्भिषक् ।
अष्टभागावशिष्टेऽह्नि[2] भोजने संप्रदापयेत् ॥ ४ ॥
दत्वातु गुग्गुलुं पाने अनुपानं ततो बुधः ।
न द्वितीये चतुर्थे वा गोक्षीरञ्च प्रदापयेत् ॥ ५ ॥
गुग्गुलुं पाययित्वातु भोजयेत्तुरगं भिषक् ।
विकाले भोजयेद् भक्त्या भोजनैरक्षमाचकैः ॥ ६ ॥
शाल्यन्नं वातले दद्यान् मांसानां रसकैर्युतम् ।
पित्ते मुद्गं ससर्पिश्च भोजयेन्मधुना ततः ॥ ७ ॥
पञ्चतिक्तजले स्विन्नान् कटुकैरवचूर्णितान् ।
तथा मुद्गान् कुलत्थांश्च कफे विद्वान् प्रदापयेत् ॥ ८ ॥
पीतगुग्गुलुके वाहे क्षुधार्त्ते दापयेत्ततः ।
प्रहरं प्रहरार्द्धं वा नैव घासं प्रदापयेत् ॥ ९ ॥
शृतं शीतं जलं पाने घासे दूर्व्वा प्रकीर्त्तिता ।
मुनिभिः शालिहोत्राद्यैः शास्त्रमार्गानुसारतः ॥ १० ॥
व्याधितेषु तुरङ्गेषु पाने देयस्तु गुग्गुलुः ।

५ । दत्वेत्यादिश्लोकचतुष्टयं ख-पुस्तके नास्ति ।
९ । प्रहरमितिश्लोको ग-पुस्तके न विद्यते ।

१ । प्रहरार्द्धगते । गः ।
२ । अर्द्धभागावशिष्टेऽह्नि भोजनेन । गः ।

स्वस्थानां वापि पुष्ट्यर्थं भोजने संप्रदापयेत् ॥ ११ ॥
त्रिषु दोषेषु दुष्टेषु रक्ते रिक्ते तथा व्रणे।
खञ्जे च दुर्व्वले वापि एकस्मिन्नेव वासरे ॥ १२ ॥
प्रथमेऽह्नि पलं दद्यात् प्रतिकर्षं प्रवर्द्धते।
पलानां पञ्चकं देयमेकस्मिन्नेव वासरे ॥ १३ ॥
उत्तमस्य तुरङ्गस्य मध्यमस्य चतुष्टयम्[1]।
पलानि त्रीणि देयानि जघन्यस्य तथा विधिः[2] ॥ १४ ॥
अस्मात्[3] प्रमाणादधिको नैव देयः कदाचन।
पानादूर्द्ध[4] न दातव्यो भोजने वापि गुग्गुलुः ॥ १५ ॥
पलान्य[5]शीतिः प्रवरः प्रायोऽश्वस्य[6] प्रकीर्त्तितः।
षष्टिर्मध्यः समुद्दिष्टश्चत्वारिंशतिरन्यतः[7] ॥ १६ ॥

१३। प्रथमेऽह्नीति श्लोकः ख-पुस्तके नास्ति।

---

१। चतुष्टये। खः।
२। बन्धनस्य यथाविधिम्। गः।
३। अस्य प्रमाणमधिकं नैव देयम्। गः।
४। पानादार्द्ध। खः।
५। एतानि। खः।
६। प्रयोगस्येति कीर्त्तितः। गः।
७। षष्टिर्मध्यस्य निर्द्दिष्टा चत्वारिंशत् कनीयसः। गः

व्रणे[1] कुष्ठिषु खञ्जेषु त्रिफलाक्काथसंयुतः ।
मन्दाग्नौ शोथरोगे[2] च गवां मूत्रेण योजितः ॥ १७ ॥
वातपित्तोल्वणे व्याधौ गोक्षीरघृतसंयुतः ।
देयः कृशानां पुष्ट्यर्थं मांसैर्युक्तश्च भोजने[3] ॥ १८ ॥

इति श्रीमहासान्तजयदत्तकृतेऽश्वशास्त्रे गुग्गुलुकल्पे सप्तषष्टितमोऽध्यायः ।

---

## अथाष्टषष्टितमोऽध्यायः ।

### रसायनकल्पः ।

प्रकृष्टाय प्रदातव्यं गुडूच्याः पलपञ्चकम्[4] ।
प्रभाते घृतसंयुक्तं शरद्ग्रीष्मेषु वाजिनम्[5] ॥ १ ॥
रोगघ्नं पुष्टिदं वापि[6] बलतेजोविवर्द्धनम् ।
तमेव[7] मतिमान् दद्यात्[8] क्षीरयुक्तमथापि वा ॥ २ ॥

---

१ । व्रणेषु दुष्टमर्मेषु । ग: ।
२ । रोगेषु । ग: ।
३ । भोजनैः । ग: ।
४ । दातव्यं । ग: ।
५ । वाजिनाम् । ग:
६ । चापि । ग: ।
७ । तदेव । ख: ।
८ । दत्वा । ग: ।

गुडूची[1]कल्कयोगेन शतावर्य्यश्वगन्धयोः।
मूलकल्कः प्रदातव्यः कुक्कुट्याश्च[2] विशेषतः ॥ ३ ॥
पलानि पञ्च वाहस्य उत्तमस्य प्रदापयेत्।
मध्यमं[3] पलचत्वारि अधमस्य पलत्रयम् ॥ ४ ॥
औषधी[4] न च दातव्या एषां श्लेष्मान्विते हये।
वातिके पैत्तिके वापि विहिता शास्त्रवेदिभिः[5] ॥ ५ ॥
हरीतक्यामलाकल्कः प्रावृट्काले विधौ[6] स्मृतः।
तेनात्र नो विनिर्दिष्टः पुनरुक्ताभिशङ्कया ॥ ६ ॥
एवं विरिक्तं शुद्धाङ्गं कृत्वा यत्नेन वाजिनम्।
दद्याद् गोमूत्रसंयुक्तां सतैलाञ्च हरीतकीम्।
नित्यं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः ॥ ७ ॥
सौवर्चलं तथा हिङ्गु पुष्करं विड़दाड़िमम्।
ग्रन्थिकं मेथिकाश्चैषां भिषक् पिण्डञ्च कारयेत् ॥ ८ ॥
रक्तपित्तं ज्वरं हन्ति कासं श्वासं तथा घृणिम्।
विद्रधिं क्षयरोगञ्च नाशयेद्वाजिनां ध्रुवम् ॥ ९ ॥

३। कुक्कुटी शाल्मलीवृक्षः। सुकर्णी इन्द्रवारुणी।

१। गुडूचीकल्कजं नस्यं कुर्य्यादश्वगन्धायाः। खः।
२। सुकर्ण्या। गः।
३। मध्यमस्याथ चत्वारि जघन्यस्य। गः।
४। औषधस्य प्रदातव्य एषां श्लेष्मा निपातयेत्। खः।
५। हिता शास्त्रार्थशालिभिः। खः।
६। विशेषतः। खः।

श्रीशालिहोत्रादिमुनिप्रणीतं
दृष्ट्वाश्वशास्त्रं बहुविस्तरञ्च ।
स्वल्पप्रबोधं सफलं यथार्थं
कृतञ्च तद्वै जयदत्तकेन ॥ १० ॥

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे रसायनकल्पे अष्टषष्टितमोऽध्यायः ।

इति श्रीमहासामन्तजयदत्तकृताश्ववैद्यकशास्त्रं समाप्तम् ॥ शुभमस्तु ॥

---

# अश्ववैद्यकम् ।

श्रीमज्जयदत्तसूरिविरचितम् ।

श्रीनकुलकृताश्वचिकित्सितसमेतम् ।

श्रीलश्री—

वङ्गदेशीयासिआतिक्-समाजानुज्ञया

गवर्णमेण्ट-संस्कृतविद्यालयस्य-

पुस्तकाध्यक्षेण

**श्रीउमेशचन्द्र गुप्त कविरत्नेन**

परिशोधितं व्याख्यातञ्च ।

---


**कलिकाताराजधान्यां**

व्याप्तिस्त-मिशन्-यन्त्रे मुद्रितञ्च ।

---

संवत् १९४२-४४ ॥

श्रीगणेशाय नमः ।

# अथाश्वचिकित्सितम् ।

---

## प्रथमोऽध्यायः ।

येन ज्ञानवता हिमालयतरुच्छायासु विक्रीडितम् ।
यः स्नातो हिमपुष्पवातशिशिरे गङ्गाजले पावने ।
रेमे यस्तु तुरङ्गयूथजनितैर्नानाविधैर्हेषितैः ।
पायाद्वः स तुरङ्गघोपतनयः श्रीशालिहोत्रो मुनिः ॥ १ ॥
जयति च पाण्डवनाथो धर्मसनाथो[1] युधिष्ठिरो नृपतिः ।
भीमार्ज्जुनसहदेवास्तदनुच[2] ये वाजिशास्त्रतत्वज्ञः[3] ॥ २ ॥
दृष्ट्वा सम्यङ्नकुलः शास्त्रं[4] कृत्स्नं[5] च शालिहोत्रीयम् ।
ब्रूते शास्त्रार्थमन्यच्छास्त्रं कृत्वा समासेन ॥ ३ ॥

प्रश्नो जातिवर्णमावर्त्तदन्ता
लक्ष्मं वेगा वाहनं धातुरसम् ।
कालो नस्यं पिण्डमाज्यं कषायं
शालां चेष्टां वाजिनामच वक्ष्ये ॥ ४ ॥

---

* नकुलकृतमश्वचिकित्सितं सर्व्वैर्वादृतमतिप्राचीनत्वात् । अतएव अश्वविद्यानिष्णातमनसां सुधियां प्रीत्यर्थं तत् पुस्तकमस्याश्ववैद्यकस्य परिशिष्टरूपेणात्र मुद्रितम् ।

१ । धर्म्मनिधानः । खः ।
२ । तदनुचरो । कः ।
३ । वाजिशास्त्रतत्त्वज्ञाः । खः ।
४ । ज्ञानम् । खः ।
५ । सर्व्वं । खः ।

सपक्षा वाजिनः सर्वे[१] सञ्जाता व्योमचारिणः ।
गन्धर्वेभ्यो यथाकामं गच्छन्ति च समन्ततः ॥ ५ ॥
तान् दृष्ट्वा जवसम्पन्नान् सह्यान्वाहनोचितान् ।
शक्रः प्रोवाच पार्श्वस्थं शालिहोत्रं मुनीश्वरम् ॥ ६ ॥
नास्त्यसाध्यं मुने किञ्चिद्भवतो भुवनत्रये ।
तस्मादाशु[२] कुरुष्व त्वं वाहनार्हान् हयोत्तमान् ॥ ७ ॥
ये च मे युद्धकालेषु[३] प्रवहन्ति रथं सदा ।
अशक्यं वारणेन्द्रैश्च[४] दानवैर्बलवत्तरैः ॥ ८ ॥
ईषिकास्त्रं[५] समुत्सृज्य पक्षच्छेदं व्यधात्तदा ।
वाजिनां शक्रवाक्येन शालिहोत्रो महामुनिः ॥ ९ ॥
च्छिन्नपक्षास्तु ते सर्वे गत्वा[६] तमृषिमब्रुवन् ।
दीनाः सुदुःखसम्पन्ना रुधिरेण परिप्लुता ॥ १० ॥
भगवन् किं निमित्तं नः पक्षच्छेदः कृतस्त्वया ।
अपराधविहीनानां नेदृगिच्छन्ति पण्डिताः ॥ ११ ॥
तस्माद्गतिर्भव प्राज्ञ सर्वेषामिह वाजिनाम् ।
यथा स्यात् सर्वदा सौख्यं पुष्टिश्च मुनिपुङ्गव ॥ १२ ॥

---

१ । पूर्व्वं । खः ।
२ । हयान् व । खः ।
३ । कुरु रथार्हान् मे युग्यानेतान् हयोत्तमान् । खः ।
४ । युध्यतः संख्ये । खः ।
५ । वारनेन्द्रस्य । खः ।
६ । तेषां प्रख्सं । कः ।
७ । गन्धर्व्वा मुनिम् : खः ।
८ । नेत्थं संप्रति सज्जनः । खः ।
९ । कुरु भयं त्यक्त्वा । खः ।

अथासौ कृपयाविष्टस्तानुवाच सुदुःखितान्।
इन्द्रादेशात्कृतं[1] सर्वं भवतां पक्षपातनम्॥ १३॥
तस्माद्वः प्रकरिष्यामि[2] भविष्यति यथा सुखम्।
पुष्टीरम्या[3] यथा देहे गौरवं च जगत्त्रये॥ १४॥
यूयं शक्रादिदेवानां वाहनत्वं करिष्यथ[4]।
तथा भूमिपतीनाञ्च गौरवेण समन्विताः॥ १५॥
यो राजा भवतां पुष्टिं स्वन्न[5]पानादिभिः सदा।
करिष्यति न सन्देहो भविष्यति स दुर्ज्जयः॥ १६॥
न च त्यक्ष्यति तं लक्ष्मीः कदाचिज्जयलक्षणा।
अपि सर्वैर्गुणैर्हीनं बहुशत्रुभिरावृतम्॥ १७॥
तथा चैव विधास्यामि[6] परमञ्च चिकित्सितम्।
पुष्ट्यै च रोगनाशार्थं नराणां विहितं[7] यथा॥ १८॥
तस्माद्गच्छत भूलोकं पातालञ्च तथापरे।
स्वर्गं चान्ये [8]मदादेशाद्येन शान्तिर्भवेद्[9] ध्रुवम्॥ १९॥
एवं विसृज्य तान् सर्वान् शालिहोत्रस्तुरङ्गमान्।
चक्रे द्वादशसाहस्रीं तदर्थं संहितां सुधीः॥ २०॥

---

१। मया वत्साः कृतं वः पक्षभेदनम्। खः।
२। प्रहरिष्यामि। ख।
३। पुष्टिमन्यां। खः।
४। गमिष्यथ। खः।
५। स्वान। खः।
६। अभिधास्यामि। खः।
७। च हितं सदा। खः।
८। समादेशात्। खः।
९। परा भवेत्। खः।

ततःप्रभृति लोकेऽस्मिन् वाह्या जातास्तुरङ्गमाः ।
ततश्चिकित्सितं तेषां शालिहोत्रप्रभाषितम् ॥ २१ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते प्रश्नोनाम प्रथमो ऽध्यायः ।

---

## अथ द्वितीयोऽध्यायः ।

### जाति ।

उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे ।
चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥ १ ॥
ताजिकाः खुरशाणाश्च उत्तरा[१]श्चोत्तमा हयाः ।
गोजिकाणाश्च केकाणाः प्रौढ़ाहाराश्च[२] मध्यमाः ॥ २ ॥
भाण्डजाश्चोत्तमांसाश्च राजशूलाश्च मध्यमाः ।
गोह्वराः शावराश्चैव[३] सिन्धुपाराः कनीयसः ॥ ३ ॥
अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ॥ ४ ॥
समीरप्रभवाश्चान्ये उलूकमृगजास्तथा ।
जलोद्भवा द्विजातीयाः[४] क्षत्रिया वह्निसम्भवाः ॥ ५ ॥

---

१ । तुषाराः । खः ।
२ । पोषहाराः । खः ।
३ । सवरांसाश्च । कः ।
४ । द्विजा ज्ञेयाः । खः ।

समीरप्रभवा[1] वैश्या एणोलूकाश्च शूद्रजाः।
विवेकी सद्गुणो विप्रस्तेजस्वी क्षत्रियो वली॥ ६॥
दुष्टभावस्तथा वैश्यः शूद्रो निःसत्वकातरः[2]।
ब्राह्मणः सामवाही च भेदवाही च क्षत्रियः॥ ७॥
उपादानेन वैश्यः स्याच्छूद्रो दण्डेन ताड़ितः।
पुष्पगन्धः[3] सदा विप्रः क्षत्रियोऽगुरुगन्धकः॥ ८॥
घृतगन्धः सदा वैश्यो मीनामोदी च शूद्रकः[4]।
विप्राद्या वाजिनः सर्वे क्षत्रियो[5] भूपतेः सदा॥ ९॥
द्वौ वैश्यस्याथ शूद्रस्य शूद्र[6] एव सुखावहः।
केचिदिच्छन्ति भूपानां सर्वेऽश्वा वाहनोचिताः॥ १०॥
तदर्थं भूतले यस्माच्छालिहोत्रेण निर्मिताः।
ब्राह्मणाः क्षेमकृत्येषु सिद्धिं गच्छन्ति वाजिनः॥ ११॥
क्षत्रिया युद्धकार्येषु वैश्या वित्तार्ज्जने[7] सदा।
शूद्राश्चान्येषु कृत्येषु ज्ञात्वैवं वाजिनः सदा॥ १२॥
आरोहेत्सर्वकार्येषु यदीच्छेच्छाश्वतीं श्रियम्।
सदा शुभा भवन्त्येते वाजिनो यस्य भूतले॥ १३॥
सदैव निद्रावशगा निद्राच्छेदस्य सम्भवः।

---

१। प्रभञ्जनोद्भवा। खः।
२। कारकः। कः।
३। पुष्पगन्धसमः। खः।
४। चतुर्थकः। खः।
५। त्रयो भूमिपतेः। खः।
६। एकः। खः।
७। वृत्त्यर्ज्जने। खः।

जायते सङ्गरे प्राप्ते कर्करस्य च भक्षणे ॥ १४ ॥
प्रबुद्धाः कथयन्त्यस्याः शुभं वा यदि वाशुभम् ।
स्वस्वामिनो निजैश्चिह्नैस्तद्विज्ञेयं विचक्षणैः ॥ १५ ॥
यः सन्नद्धो हयो रावमूर्ध्वमूर्ध्वं करोति च ।
खुराग्रेण लिखन् भूमिं स शंसति रणे जयम् ॥ १६ ॥
यः करोत्यसकृन्[1] मूत्रं पुरीषञ्चाश्रुमोक्षणम् ।
स शंसति पराभूतिं यश्चैवं[2] वर्त्तते हयः ॥ १७ ॥
निरामिषं निशीथे यो जागर्त्ति नृपतेर्हयः ।
स शंसति द्रुतन्तस्य स्थिरस्यापि[3] प्रयाणकम् ॥ १८ ॥
यदा व्याधिं विना वाजी ग्रासन्त्यजति दुर्मनाः ।
अश्रुपातञ्च कुरुते तदा भर्त्तुरशोभनम् ॥ १९ ॥
पुलकांकितपुच्छा ये जायन्ते भूपतेर्हयाः ।
निरीक्षन्तः[4] प्रभोर्नाशं ते वदन्ति निशागमे ॥ २० ॥
शरटं रक्षयेद्यत्नात्प्रविशन्तं हयालये ।
यदोच्छेच्छाश्वतीं वृद्धिं तेषाञ्चैव तथात्मनः ॥ २१ ॥
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः ।
परचक्रागमाशंसो विज्ञेयो हयपण्डितैः ॥ २२ ॥
अश्वशालां समासाद्य यदान्त[5]र्मधुमक्षिकाः ।

---

१। करोति सकृत् । खः ।
२। यश्चैवोपहृतः । खः ।
३। स्थितस्य । खः ।
४। निर्गच्छतः । खः ।
५। यदा च । कः ।

मधुजालं प्रकुर्वन्ति[1] तदाश्वान् घ्नन्ति कृत्स्नशः ॥ २३ ॥
तस्मात्सर्वप्रयत्नेन वाजिशालां प्ररक्षयेत्[2]।
उपायेभ्यश्च[3] सर्वेभ्यो य इच्छेद्भूतिमात्मनः ॥ २४ ॥
ब्राह्मणान्वाचयेत्स्वस्ति नित्यं वेदविचक्षणान्[4]।
तिलहोमस्तथा कार्य्यो जपश्च[5] शतरुद्रियः ॥ २५ ॥
मन्दुरान्ते सदा धार्य्यो रक्तवक्त्रो महाकपिः।
सर्वपापविनाशाय वाजिनाञ्च विवृद्धये ॥ २६ ॥
शरघां रक्षयेद् यत्नात् प्रविशन्तीं हयालये।
यदीच्छेच्छाश्वतीमृद्धिं तेषाञ्चैव तथात्मनः ॥ २७ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते जात्यधिकारे द्वितीयोऽध्यायः ॥

## अथ तृतीयोऽध्यायः।

### वर्णवर्णनं।

वर्णाः सप्त भवन्तीह[6] सर्वेषां वाजिनां ध्रुवम्।
तानहं कीर्त्तयिष्यामि भेदैर्जातानेकधा ॥ १ ॥

---

१। प्रबध्नन्ति। ख।
२। प्रलक्षयेत्। खः।
३। अपायानाञ्च सर्व्वेषां यदिच्छेच्छ्राममात्मनः। खः।
४। अर्च्चयेन्नित्यं तत्त्ववेदविचक्षणान्।
५। जयः स्यात्तत्र सद्वृतः। खः।
६। वर्णा भवन्ति येऽपीह। कः।

सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एवच ।
नीलः कृष्णोऽथ सर्वेषां श्वेतः श्रेष्ठतमः स्मृतः ॥ २ ॥
पट्टार्हो भूपतेर्वाजी सर्वश्वेतः प्रशस्यते ।
तदभावे यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च ॥ ३ ॥
श्वेतः प्रालेयसङ्काशो रक्तः कुङ्कुमसन्निभः ।
हरिद्रासदृशः पीतः सारङ्गः कर्बुरः स्मृतः ॥ ४ ॥
पिङ्गः कपिलकाकारो नीलो दूर्वाग्रसंनिभः ।
कृष्णो जम्बूफलाकारः शास्त्रज्ञैः समुदाहृतः ॥ ५ ॥
पीताभः श्वेतपादोयस्तथा स्यात्सितलोचनः ।
चक्रवाकः स विज्ञेयो राजार्हो वाजिसत्तमः ॥ ६ ॥
सर्वश्वेतो हयो यस्तु भवेन्मेचककर्णकः[1] ।
सवाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः ॥ ७ ॥
मुखे चन्द्रकसंवीतो[2] जम्बूफलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः ॥ ८ ॥
चत्वारोऽप्यसिताः पादाः सर्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ॥ ९ ॥
यस्य पादाः सिताः सर्वे पुच्छं वक्षो मुखं तथा ।
मूर्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥ १० ॥

---

१ । श्यामैककर्णकः । खः ।
२ । सङ्काशः । खः ।

भस्माभं वाजिनं जह्यात् सुदूरेण नराधिपः।
यदि वाञ्छति[1] कल्याणं वाञ्छेच्च श्रीसमुद्भवम्॥ ११॥
यस्य[2] रोमविभेदेन जायन्ते रोमविन्दवः।
पुष्पाख्यः स परित्याज्यः सर्व्ववाजिभयावहः॥ १२॥
यस्य पादाः सिताः सर्व्वे तथा वक्त्रञ्च मध्यतः।
कल्याणपञ्चकः प्रोक्तः सर्व्वकल्याणकृच्च सः॥ १३॥
विमिश्रवर्णकाः सर्व्वे प्रशस्ता वाजिनः स्मृताः।
कृष्णनीलस्य मिश्रत्वमेकं मुक्ता सुदूरतः॥ १४॥
यस्योत्कृष्टतरो वर्णो वृद्धिं याति शनैः शनैः।
नाशयति तथा नीचान् स करोति बहून् हयान्॥१५॥
यस्याधमेन वर्णेन छाद्यते[4] च प्रधानजः।
विवृद्धिं गच्छता[5] सोऽथ करोति हयसंक्षयम्॥१६॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वर्णोनाम तृतीयोऽध्यायः॥

---

१। कर्म्मणि वाञ्छास्य करोति श्रीसमुद्भवाम्। खः।
२। हयस्य वर्णभेदेन। खः।
३। सदा। खः।
४। सीदन्ति च प्रधानजाः। खः।
५। गच्छति। खः।

## अथ चतुर्थोऽध्यायः ॥

आवर्त्ताः ।

आवर्त्ता विंशतिः प्रोक्ताः शालिहोत्रमहात्मना ।
गात्रस्थानविभागेन तेषां व्यक्तिर्मयोच्यते ॥ १ ॥
ललाटे मस्तके चैव ग्रीवायां हृदये तथा ।
पादे पृष्ठे मणीबन्धे नाभिदेशे विशेषतः ॥ २ ॥
स्कन्धे पार्श्वे[1] गले वक्त्रे कुक्षौ रंध्रे चिके तथा ।
आद्यास्त्रयोदशावर्त्ता[2] विज्ञेया वाजिपण्डितैः ॥ ३ ॥
नासिकाग्रे ललाटाग्रे शङ्खे कण्ठे च मस्तके ।
आवर्त्ता जायते येषां ते धन्यास्तुरगोत्तमाः ॥ ४ ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाङ्गे मध्यमास्ते प्रकीर्त्तिताः ॥ ५ ॥
ललाटे यस्य चावर्त्ता द्वितीयस्य स लिङ्गकः ।
मस्तके च तृतीयश्च पूर्णकुक्षिः स उत्तमः ॥ ६ ॥
पृष्ठवंशे तथावर्त्ता यस्यैकः संप्रजायते ।
स करोत्यश्वसंघातान् स्वामिनः सूर्यसंज्ञकः ॥ ७ ॥
कक्षायां जानुमेढ्रे च त्रिवलौ पुच्छसन्निधौ ।
पुच्छे गुह्ये वलावष्टावावर्त्ता अधमा हये ॥ ८ ॥

१ । ललाटाग्रे । खः ।
२ । आद्यन्ता द्वादशावर्त्ताः । खः ।

त्रयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः परः॥ ९॥
एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः।
त्रयावर्त्तः[1] स वाजीशो जायते भूपमन्दिरे॥ १०॥
ललाटे युगलावर्त्तौ चन्द्रार्कौ संप्रकीर्त्तितौ।
वाजिनो यदि[2] तौ स्यातां राष्ट्रवृद्धिकरौ परौ॥ ११॥
उपर्य्युपरि यस्य स्युरावर्त्ता अलिके त्रयः।
निःश्रेणिः सतु विज्ञेयो राष्ट्रवृद्धिकरः परः॥ १२॥
एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते।
वर्त्तमानः[3] स विज्ञेयः स दुष्टोस्वामिनाशनम्॥ १३॥
कपोलाभ्यान्तथावर्त्तौ विद्येते[4] वाजिनो यदि।
तावश्विनाविति प्रोक्तौ युद्धकाले जयप्रदौ॥ १४॥
गण्डावर्त्तो[5] भवेद्यस्य वाजिनो दक्षिणाश्रयः।
स करोति महासौख्यं स्वामिनः शिवसंज्ञकः॥ १५॥
तद्वद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम।
इन्द्रकाख्या[6]वुभौ शस्तौ नृपराज्यविवृद्धिदौ॥ १६॥

१। यस्यावर्त्तः। खः।
२। यस्य। खः।
३। रथिनामश्वनिष्ठानां स दृष्टः स्वामिनाशने।
४। कपोलाभ्यन्तरावर्त्तौ विद्येते। खः।
५। गलावर्त्तः। खः।
६। इन्द्रकाख्यौ। खः।

कर्णमूले यदावर्त्तस्तन्मध्ये च तथापरः।
विजयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ ॥ १७ ॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः।
चक्रवर्त्ती स विज्ञेयो वाजी भूपालपूजितः ॥ १८ ॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य[1] प्रजायते।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः ॥ १९ ॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः।
करोति विधिवत् पद्मे स्वामिनः सततं सुखम् ॥ २० ॥
शुक्ताख्यौ[2] तालुकान्तस्थावावर्त्तौ कीर्त्तिवृद्धिदौ।
हयस्य स्वामियुक्तस्य सदैव ससुखावहौ ॥ २१ ॥
एका[3]वर्त्तो भवेद्यस्य[4] कक्षान्ते वाजिनो यदा[5]।
स रणे मृत्युमाप्नोति द्वौ च[6] स्वामिविनाशनौ ॥ २२ ॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते।
प्रवासं सततं ब्रूते स्वभर्त्तुः क्लेशसंयुतम् ॥ २३ ॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो महीभुजाम्।
स करोति हरेर्नाशं परचारसमुद्भवम्[7] ॥ २४ ॥

---

१। एकः स्पष्टः। खः।
२। शुक्लाख्यौ। खः।
३। यस्य। खः।
४। व्यक्तः। खः।
५। अशुभः। खः।
६। चाशु। खः।
७। परस्परसमुद्भवम्। खः।

त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः[1]।
वाजिनस्ते परिज्ञेयाः स्त्रीपार्श्वस्था[2] भयप्रदाः॥ २५॥
पुच्छ[3]देशे यदावर्त्तो वाजिनः संप्रदृश्यते।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः॥ २६॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गमः॥ २७॥
अधऊर्द्ध[4] यदा वाजी सम्पुटं न स्पृशेत् क्वचित्।
यमदूतः स विज्ञेयो वर्जनीयः प्रयत्नतः॥ २८॥
हीनदन्तोऽधिदन्तश्च कराली कृष्णतालुकः।
मुशली च तथा शृङ्गी षड़ेते स्वामिघातकाः॥ २९॥
एकाण्डजातश्चाण्डो[5] हीनांगोऽप्यधिकाङ्गकः।
परित्याज्यः स[6] वाञ्छद्भिरन्विष्य परमं यशः॥ ३०॥
घण्टी वदनको वाली शृङ्गीचैव चतुर्थकः।
वर्जनीयः प्रयत्नेन सर्वे ते पापकृत्तमाः॥ ३१॥
घण्टी च स्वामिनं हन्ति वदनी धनसंक्षयम्।
अन्तःपुरं तथा वाली शृङ्गी राष्ट्रविनाशनः॥ ३२॥
षट्पदाभो भवेद्यश्च कृष्णतालुर्न दुष्यति।

---

१। प्रसाधकः। खः।
२। स्त्रीपार्श्वः स शुभप्रदः। खः।
३। पृष्ठ। खः।
४। अधोर्द्धं च यदा। कः।
५। एकाण्डकोऽप्यनण्डश्च। खः।
६। भूपालैः संग्रामे कोशकारकः। खः।

शङ्खपादमुखो यस्तु[१] आवर्त्तैः कुत्सितैरपि ।
न दुष्यति सदावर्त्तः शालिहोत्रमतं यथा ॥ ३३ ॥

इति श्रीनकुलविरचितेऽश्वचिकित्सिते आवर्त्ताध्यायश्चतुर्थः ॥

## अथ पञ्चमोऽध्यायः ।

दन्ताः ।

दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुलक्षणम् ।
येन विज्ञातमात्रेण आयुर्ज्ञानं प्रचक्षते ॥ १ ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोडशभिः कोणो प्राप्नैर्द्वादशमासिकः ॥ २ ॥
त्रिंशन्मासोद्भवाः सर्व्वे अखण्डाः परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां मूर्द्धोपरि यथाक्रमम् ॥ ३ ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकान्ये भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत् ॥ ४ ॥
अष्टमे वत्सरे प्राप्ते प्राप्ताः स्युः सार्व्वकालिकाः ।
नवमे त्वथवा रेखा पीतत्वं शंसयन्ति च ॥ ५ ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामप्यसंशयम् ॥ ६ ॥

१ । वात्र नावर्त्तैः । ख: ।

ततः श्वेताः प्रदृश्यन्ते यावद्वर्षचयं पुनः ।
ततः काचप्रभाः सम्यक् यावत् संवत्सरास्त्रयः ॥ ७ ॥
ततः सप्तदशादूर्द्ध्वं यावद्वर्षाणि विंशतिः ।
मक्षिकाभारदास्तेषां यावद्वर्षचयं पुनः ॥ ८ ॥
तस्मादुदूखलं प्रापास्तावद्वर्षचयं पुनः ।
प्रकम्पश्च समागम्य पश्चात् पातः समाचयम् ॥ ९ ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्व्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं वक्त्रेण परमायुषि ॥ १० ॥
अश्वानामेव सर्व्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचावाप्यथ मक्षिका ॥ ११ ॥
शङ्खोदूखलकश्चैव दन्तानाश्चलनं तथा ।
ततस्तु पतनं विद्यादेष व्यञ्जनसंग्रहः ॥ १२ ॥
चतुर्विंशतयो दंष्ट्राः शालिहोत्रमतं तथा ।
एवं दन्तविशेषेण सर्व्वेषामिह वाजिनाम् ।
विज्ञेया चायुषः सङ्ख्या वाजिपोषणतत्परैः ॥ १३ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदोनाम पञ्चमोऽध्यायः ।

---

## अथ षष्ठोऽध्यायः ।

अवयवप्रमाणम् ।

दीर्घश्लक्ष्णविमांसास्या ये भवन्ति तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्मणि ॥ १ ॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेषतः ।
चमरालङ्कृतं सम्यक् स्तोकवालसमन्वितम् ॥ २ ॥
येषां पृष्ठं[1] सुवंशं स्याद्विपुलं व्रणवर्जितम् ।
किञ्चिन्मध्ये भवेन्निम्नं[2] राजार्हास्ते तुरङ्गमाः ॥ ३ ॥
स्निग्धरोमा सुवृत्ता च [3]सुस्थूला विपुला कटी ।
ग्रथिताः सुदृढा रम्या भुजा मांसप्रपूरिताः[4] ॥ ४ ॥
पादा निर्मांसलावक्राश्चक्राकारखुरान्विताः ।
अप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ[5] ॥ ५ ॥
पार्श्वौ तनुतरौ[6] शस्तौ सुरसस्निग्धतालुकम्[7] ।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्चसः ॥ ६ ॥

---

१ । पृष्ठिः सुवंशा वा विपुला व्रणवर्जिता । खः ।
२ । निम्नाः । खः ।
३ । विपुला कटिग्रन्थिता । खः ।
४ । सुदृढाश्च भुजा येषां मांसशोणितपूरिताः । खः ।
५ । शुभौ । खः ।
६ । सुभतरौ । खः ।
७ । रक्तं स्निग्धञ्च तालुकम् । खः ।

सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते ।
कर्णौ षडङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम् ॥ ७ ॥
चत्वारिंशच्च सप्ताढ्याः स्कन्धाः सम्यक प्रकीर्त्तिताः[१] ।
पृष्ठवंश[२]श्चतुर्व्विंशः सप्तविंशा तथा कटी ॥ ८ ॥
अतिसूक्ष्मं तथा निम्नं पुच्छं हस्तद्वयायतम्[३] ।
लिङ्गं हस्तप्रमाणञ्च तथाण्डौ चतुरङ्गुलौ ॥ ९ ॥
मार्ग[४]स्थानं चतुर्व्विंशं हृदयं षोड़शाङ्गुलम् ।
कटिकक्षान्तरञ्चोक्तं चत्वारिंशत्[५] प्रमाणतः ॥ १० ॥
मणिवन्धद्वयं चैव खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो दैर्घ्यञ्च द्व्यधिकं शतम् ।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम् ॥ ११ ॥

दीर्घाणि चत्वारि तथोन्नतानि
चत्वारि रक्तानि च सूक्ष्मकाणि ।
ह्रस्वानि[६] चत्वार्य्यथ चायतानि
भूयश्च चत्वार्य्यथ नम्रकाणि[७] ॥ १२ ॥

द्वात्रिंशत्[८] क्रमशोऽप्याहुर्लक्षणानि मुनीश्वराः ।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक् पृथक् ॥ १३ ॥

१ । संपरिकीर्त्तिताः । खः ।
२ । पृष्ठिवंशः । खः ।
३ । हस्ताद्धमायतम् । खः ।
४ । खाङ्गं । खः ।
५ । चतुर्व्विंशत् । खः ।
६ । ह्रस्तानि । खः ।
७ । निम्नकानि । कः ।
८ । द्वात्रिंशच्च समानि । कः ।

आस्यं भुजौ केशककाटिकाश्च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते घ्राणपुटे ललाटे
शफाश्च तज्ज्ञाश्चरणौ वदन्ति ॥ १४ ॥
ओष्ठौ च जिह्वाप्यथ[१] तालुकञ्च
मेढ्रं सुरक्तं शुभदं हयस्य
लघूनिबन्धाश्चरणेषु कोष्ठं
श्रोत्राणि सर्व्वाणि तथैव पुच्छम् ॥ १५ ॥
कर्णान्तरं कर्णसमन्वितञ्च
वंशं तथा ह्रस्वतरं प्रशस्तम्[२] ।
वक्त्रं मुखं कन्धरजानुनी च
पार्श्वञ्च सतः[३] शुभदं प्रदिष्टम् ॥ १६ ॥
कक्षान्तरं चोदरमध्यमञ्च
निम्ना कटी तानि[४] सजानुकानि ।
वक्षःशफोरूजघन[५]स्थलञ्च
चतुष्कमेतत् पृथुलं प्रदिष्टम्[६] ॥ १७ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्व्वावयवप्रमाणो नाम षष्ठोऽध्यायः ॥

---

१ । रसज्ञावथ । खः ।
२ । प्रदिष्टम् । खः ।
३ । सर्व्वे । कः ।
४ । तालु । कः ।
५ । शफौर्वाजिघटा । खः ।
६ । समस्तम् । कः ।

## अथ सप्तमोऽध्यायः ।

वेगः ।

गुणानामिह सर्व्वेषां गुणो वेगमयोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥ १ ॥
संवाहनविधानेन प्रकाशं यान्त्यसंशयम् ।
तस्मात् सर्व्वप्रयत्नेन वेगो ज्ञेयश्च वाजिनाम् ॥ २ ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं सानुरागञ्च मोक्षणम् ॥ ३ ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमानास्तुरङ्गमाः ॥ ४ ॥
रूढमश्वविदां श्रेष्ठं रूढे सर्व्वं प्रतिष्ठितम् ।
रूढेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥ ५ ॥
रूपावर्त्तगतिच्छायासत्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्व्वमेव निरर्थकम् ॥ ६ ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्वं सर्व्वं सत्वे प्रतिष्ठितम् ॥ ७ ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥ ८ ॥

जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।

द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ॥ ९ ॥

आकर्षन्निव गां वभन्निव खुरौ पश्चार्द्धमुद्यन्निव
स्वीकुर्व्वन्निव खं पिवन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रकरान् स्पृशन्निव महीं छायाममर्षन्निव
चञ्चच्चामरवीज्यमानवदनः श्रीमान् हयो धावति ॥१०

अलक्षितगतागतैर्मृगदृशां कटाक्षैरिव
क्षणानुनयशीतलैः प्रलयकेलिकोपैरिव ।
सुवृत्तमसृणोत्तरैर्मृगदृशामुरोजैरिव
त्वदीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥ ११ ॥

येषां दीपशिखोपमानि नयनान्युद्भावितः सन्निव
ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च मुञ्जोपमाः ।
वेगो वायुरिवाथ वानरसमः स्याद्वारणप्रेङ्क्षितम्
शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघनव्याघ्रेभतुल्यस्वनः ॥१२॥

वक्त्रे यो हरिणाधिपप्रतिनिभो व्याघ्रोपमो वाहुभिः
आवर्त्तैश्च शुभैः प्रधानकुलजाः सुस्निग्धवर्णप्रभाः ।
उष्ट्राक्षाः प्रियदर्शनाश्च सुभगाः श्वासैः सुगन्धैश्च ये
धन्यास्ते जयराज्यवित्तसुखदाः संवाहका भूपतेः ॥१३॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वेगवर्णनो नाम सप्तमोऽध्यायः ।

## अथाष्टमोऽध्यायः ।

आरोहणम् ।

अथातः संप्रवक्ष्यामि हयारोहणमुत्तमम् ।
येन विज्ञानमात्रेण रेवन्तेनोपमीयते ॥ १ ॥

चलकिसलयपादः कर्णमध्यैकदृष्टिः
न चलति कटिदेशे आसने संस्थितश्च[1] ।
हयहृदयगतिज्ञः स्थानदण्डावपाती
स खलु तुरगयोक्ता मान्यते[2] पार्थिवेन्द्रैः ॥ २ ॥

यो[3] नित्यं दृढमुष्टिहस्तलघुकः क्रोधानलैर्वर्जितः
सत्यैकस्थिरबुद्धिमध्यमतनुः[4] शास्त्रस्य तत्त्वज्ञकः[5] ।
काले दण्डनिपातविश्रमयुतः ताम्बूलवक्त्रान्वितः[6]
त्वेवं[7] लक्षणसंयुतो हयरुहो राज्याधिपैः पूज्यते ॥ ३ ॥

ऊरू स्थिरौ[8] यस्य चलौ च पादौ
त्रिकोन्नतं संहृतमासनञ्च[9] ।

---

१ । व्यापितोऽपि स्थितो यः । कः ।
२ । पूज्यते । कः ।
३ । दार्ढ्यं मुष्टिगतं करेण लघुता । कः ।
४ । सत्वैकस्थिरबुद्धिमध्यमनतिः । खः ।
५ । शास्त्रार्थविद्धार्म्मिकः । कः ।
६ । ताम्बूलपूर्णाननः । कः ।
७ । श्रीमाल्लक्षयुतो मत्ताहयपरो राजाधिपैः । कः ।
८ । उरः स्थिरं । कः ।   ९ । संहृतमानसञ्च । कः ।

स वाजिवाहः कथितः पृथिव्यां
शेषा नरा भारवहा[1] हयानाम् ॥ ४ ॥
प्राज्ञः सत्ववलोत्साही दृढः[2] सर्व्वाङ्गसौष्ठवः ।
जितशीतातपालस्यो जितायासो जितासनः[3] ॥ ५ ॥
हयकालवलप्राणजवक्रामाध्ययोगवित्[4] ।
शान्तोपचारसारज्ञो रणक्रीड़ासु दीक्षितः ॥ ६ ॥
वाजिनां हृदयज्ञश्च स्थाने दण्डनिपातवित् ।
दुष्टाश्वदमने दक्षः सर्व्वक्लेशसहः शुचिः ॥ ७ ॥
ग्रासौपधान्नपानीये परव्यूहावलोकने ।
त्रिषु श्रेष्ठः[5] प्रवेशे च निर्गमे कुशलोऽस्त्रवित् ॥ ८ ॥
रोगं विकुरुते यश्च दृष्ट्वा वाधाविचारवित् ।
धनुःकुन्तासिशक्तिज्ञः सोऽश्ववाहः प्रकीर्त्तितः ॥ ९ ॥
वक्त्रे स्कन्धे मुखे कोष्ठे गात्रे सक्थौ च ताड़येत् ।
उन्मार्गो यदि भ्रष्टोऽश्वो मूढ़ः स्खलति ह्रेषते ॥ १० ॥
कुपिते[6] पुच्छसंस्थाने भ्रान्ते जानुद्वयं तथा ।

---

१ । भारकराः । कः ।
२ । दृढ़सर्व्वाङ्गसौष्ठवः । कः ।
३ । जितनिद्रो जितासनः । कः ।
४ । हयक्रामाख्ययोगवित् । कः ।
५ । ज्ञानप्रदेशेषु । कः ।
६ । हेषते स्कन्धसंस्थानम् । कः ।

सर्व्वथा[1] प्राप्तदण्डस्य दण्डमेकं निपातयेत् ॥ ११ ॥
हेषणे स्कन्धमुद्दिष्टं स्खलिते जघनान्तरम्।
भीते वक्षःस्थलं हन्यादुन्मार्गगामिनम् ॥ १२ ॥
अस्थाने ताड़ितो वाजी बहून्[2] दोषान् प्रदर्शयेत्।
तावद्[3]भवन्ति ते दोषा यावज्जीवत्यसौ हयः ॥ १३ ॥
दण्डेनाभिभवेद्वाहा[4]न्नारोहेद्दण्डवर्ज्जितान्।
दण्डोहि साधनं तीव्रं पदं[5] दण्डात् प्रजायते ॥ १४ ॥
तुलावदुद्धृता वल्गा नात्युच्चा नातिलम्बिता।
दोषं दृष्ट्वा तु कर्त्तव्या तिर्य्यगाकुञ्चिता श्लथा ॥ १५ ॥
कटिं सप्तेश्च शैथिल्याद्वहमानस्य ताड़येत्।
सद्यः प्रस्खलिते ..चं तत्र दण्डं प्रदापयेत् ॥ १६ ॥
अकालदण्डपाताच्च[6] त्वकालग्रहमोक्षणात्।
अकालहिंसाघाताच्च तेन वाजी न धावति ॥ १७ ॥
आसनं शिथिलं यस्य स्वरो यस्य न भीषणः।
लघुप्रहारदाता च वाजी तस्य न धावति ॥ १८ ॥
सर्व्वलक्षणसम्पन्नः सर्व्वदोषविवर्जितः।

---

१। सर्व्वस्य।
२। बहुदोषः प्रजायते। कः।
३। एते। कः।
४। हयो दण्डादभिभवेत्। कः।
५। परमश्वस्य जायते। कः।
६। अकालदण्डपातस्य अकालग्रहमोक्षणम्। अकालहिंसाघातस्य। खः।

कुलशीलबलोपेतः कथमश्वो न धावति ॥ १९ ॥
गतिरेका स्मृता चान्या[2] चतुराख्या तृतीयका[3] ।
वेगसन्धिश्चतुर्थी च[4] धारावेगगतिस्तथा ॥ २० ॥
श्लथरागार्थवेपस्य[5] चञ्चलस्य त्रिकोणतः ।
नित्यमुद्यतदण्डस्य तस्य वाजी न धावति ॥ २१ ॥
धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति ।
सर्व्वकर्म्मक्षमो वाजी तस्मात्तां परिवर्जयेत् ॥ २२ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते आरोहणाध्यायः ॥

## अथ नवमोऽध्यायः ।

ऋतुचर्य्या ।

कर्म्मचर्य्यासु[6] नित्यानां शुद्धान्नं सुनिवर्हितम् ।
धनुरष्टादशे योज्यं वाजिनां मण्डलं क्रमात्[7] ॥ १ ॥
सङ्कोचयेज्जयं तावद् यावत् कार्म्मुकपञ्चकम् ।
तदूर्द्ध मण्डलैर्योज्यो गोमूत्रात्तदनन्तरम् ॥ २ ॥

१ । वयः । कः ।
२ । चास्य । कः ।
३ । द्वितीयका । कः ।
४ । तृतीया च धारा वेगवतीतरा । कः ।
५ । बन्धस्य चपलस्य त्रिकोन्नतः । कः ।
६ । ऋतुचर्य्यासुनिष्पन्नं सादिना सुनिवर्हितम् । खः ।
७ । मण्डलेन तु । खः ।

ऋजुवृत्तानुवृत्ता[1] च गोमूत्रा सर्व्वकर्म्मसु।
युज्यमानानि दृश्यन्ते प्रायशोहि विचक्षणैः ॥ ३॥
शालिहोत्रमुनिप्रोक्ता चर्य्या षोड़श वाजिनाम्।
तासामनुपयोगित्वान्न कृतः संग्रहो मया ॥ ४॥
तीक्ष्णस्त्वेकेन मुदितो द्वाभ्यां भद्रस्तु धावति।
त्रिभिर्दण्डैस्तदा मन्दः क्रमात् पष्ठाभिताड़नैः ॥ ५॥
तीक्ष्णाश्वभद्रमन्दानां प्रधानो जव उच्यते।
सोऽप्यनेनैव मार्गेण संविभज्यो विजानता ॥ ६॥
आवाहिता विनश्यन्ति सर्व्वकर्म्मक्षमा हयाः।
कृशा व्याधिपरीताङ्गा जायन्तेऽत्यन्तवाहनात् ॥ ७॥
बलं कालो वयो भूमिः कालः सत्वमतः क्रमात्।
कुर्य्यादेकान्तरे योगश्चातियोगोहि दोषवान् ॥ ८॥
तच्च लोकप्रसिद्धं हि बोद्धव्यं यत्नतो बुधैः।
हयवाहनवैज्ञानी नरेन्द्रैः पूज्यते सदा ॥ ९॥
धाविते ये गुणाः सम्यग्वक्ष्यमाणान्निबोध तान्।
शालिहोत्रादिशास्त्राणां व्यायामफलसम्भवान् ॥ १०॥
स्थिरमांसो भारसहो लघुगात्रः पराक्रमो।
दीप्ताग्निश्च सुशीलश्च व्यायामेनोपजायते ॥ ११॥
सत्याथा विनयी प्रीतो निर्द्दोषस्तापवर्जितः।

---

१। ऋजुवृत्ता सुवृत्ता। कः।

वेदवित्सादिचित्तज्ञ उक्तो धावति तिष्ठति ॥ १२ ॥
सुभावर्त्तगतिच्छायाबलशीलसमन्वितम्।
गन्धवर्णस्वरोत्कण्ठसारपुण्ड्रविभूषितम् ॥ १३ ॥
एवं विधं समारुह्य दैवतांशं हयं नृपः।
जित्वा रिपुकुलं भुंक्ते निःशङ्कोऽथ वसुन्धराम् ॥ १४ ॥
जवः श्रेष्ठस्तुरङ्गानामुत्तमाधममध्यमः।
त्रिविधोऽपि तथा भिन्नो जवभेदः स उच्यते ॥ १५ ॥
यवोदरैरष्टसङ्ख्यैरङ्गुलं परिकीर्त्तितम्।
हस्तश्च तैश्चतुर्विंशैः कार्मुकं तैश्चतुर्गुणैः ॥ १६ ॥
अक्ष्णोर्निमेषणैः काष्ठा अष्टलघ्वक्षरं तथा।
मात्रा ज्ञेया प्रमाणैश्च पूर्व्वप्रोक्ता तपोधनैः ॥ १७ ॥
मात्राषोड़शकेनाश्वो यो धावति धनुःशतम्।
तमश्वमुत्तमं विद्याद्वायुवेगं महाजवम् ॥ १८ ॥
यथोत्तमजवा वाहास्तथाश्वा मध्यमाधमाः।
चतुरस्त्र्यधिकां वृद्धिं मात्राणां लक्षणं बुधाः ॥ १९ ॥
नभस्यश्वयुजे मासि भाराध्वानं जवं त्यजेत्।
वज्राग्निसदृशं पित्तं श्रमात् कुप्यति वाजिनाम् ॥ २० ॥
कार्य्येणैव महान् किञ्चिद् युज्यो नभसि कार्त्तिके।
हेमन्ते शिशिरे योगं वसन्ते च यथेच्छया ॥ २१ ॥
स्नेहक्षयात् क्षयं गात्रं न ग्रीष्मे वाहयेद्धयम्।

बालो वृद्धः कृशो रोगी दन्तस्नेहो महाबली ॥ २२ ॥
पूर्णातिरिक्तकोष्ठश्च गुर्व्विणीं न च वाहयेत्।
समां च विपुलाञ्चैव किञ्चित्-पांशुसमन्विताम्॥ २३ ॥
एकान्ते विजने चैव रङ्गभूमिं हयं नयेत्।
सान्द्राञ्चैव सुकठिनां पाषाणोदकगर्त्तिकाम्॥ २४ ॥
तृणकाष्ठसमायुक्तां रङ्गभूमिं विवर्ज्जयेत्।
विण्मूत्रं कारयेदश्वं क्रोशक्रोशद्वयान्तरे ॥ २५ ॥
वारि दद्याद् यथाकामं घासं मुष्टिञ्च चारयेत्।
अन्यथा दोषजातानि वक्ष्याम्येतानि तावतः ॥ २६ ॥
गुरुविस्तब्धगात्रश्च छिन्नश्वासी च कम्पते।
दुर्म्मना रुद्धविण्मूत्रः सर्व्वकर्म्मोऽक्षमो हयः ॥ २७ ॥
गूढमेढ्रोन्नतग्रीवो रक्तमेही गुरुक्लमः।
क्षुत्तृष्णावृतशुष्कास्यश्छायां प्राप्य वितिष्ठति ॥ २८ ॥
तर्ज्जनैर्हन्यमानोऽपि विधुनोति शिरः परम्।
मुहुर्विनमते पृष्ठं पदमेकं न गच्छति ॥ २९ ॥
भाराध्वानपरिश्रान्तं शनैः संक्रामयेत् पथि।
नावतारितपर्य्याणं मार्गेऽध्वानसमागतम्॥ ३० ॥
मुक्तपुच्छाग्रबन्धस्य खलीनं नावतारयेत्।
मर्द्दयित्वास्य गात्राणि पांशुमध्ये विवर्त्तयेत्॥ ३१ ॥
स्नानपानावगाहञ्च प्रतिपानं सभोजनम्।

सर्व्वं क्रमेण कर्त्तव्यमन्यथा दोषसम्भवः ॥ ३२ ॥
रक्तपित्तसमीरोत्थमन्यास्तम्भोदरादयः ।
हृद्रोगा वातशूलानि शीतोष्णोदकपानतः ॥ ३३ ॥
रक्तपित्तहरं देयं प्रतिपानं गुडौदनम् ।
रक्तपित्तसमीरोत्थं दातव्यं शर्करोदकम् ॥ ३४ ॥
जीवनं वातपित्तघ्नं वृष्यं वल्यतमं ततः ।
सर्व्वरोगहरोऽश्वानां मधु जाङ्गलको रसः ॥ ३५ ॥
स्वच्छात्कञ्च घृतं क्षीरं वारियुक्तं तुरङ्गमः ।
पीत्वा हि निर्हरेद्दोषान् श्रमभाराध्वसंश्रवान् ॥ ३६ ॥

धर्म्मार्थकामाविजयो यशःश्री-
शोभासुखं जातिजनैश्च पूज्या ।
रणे निमित्तानि शुभावहानि
नृपस्य चैवं विनिवेदयन्ति ॥ ३७ ॥
प्रत्यूषकाले च दिनं निरीक्ष्य
वह्निं द्विजं पूर्णघटं कुमारीम् ।
छत्रं ध्वजं चामरदर्पणञ्च
हृष्टञ्च दृष्ट्वा तुरगं जयाय ॥ ३ ॥
श्रुत्वा तु शङ्खाम्बुदवेदवाक्यं
पुण्याहमाङ्गल्यशिवस्य गीतम् ।
हर्षं निमित्तं भवति स्वनेन

ध्रुवं जयं तत्र रणे नराणाम् ॥ ३८ ॥
सव्याङ्घ्रिघातेन महीं निघ्नन्ति
ह्रेषन्ति ये स्वामिमुखं निरीक्ष्य ।
प्रदक्षिणावर्त्तविकीर्णपुच्छा
जयावहास्ते समरे नृपाणाम् ॥ ३९ ॥
विच्छिन्नदीनस्वरगद्गदा ये
अश्रुप्लुता भिन्नपुरीषमूत्राः ।
अनल्पमाना दिनकृन्निरीक्ष्याः
पराजयं ते कथयन्ति युद्धे ॥ ४० ॥
अन्यापदं याश्च वदन्ति दीनाः
सव्येतरं चक्रविकीर्णपुच्छाः ।
युग्यासनादीन् परिवर्जयन्ते
पराजयं ते कथयन्ति भर्त्तुः ॥ ४१ ॥
विना निमित्तं रसयन्त्यभीक्ष्णं
आकुञ्चिता व्यापितमक्षिकाङ्गाः ।
ध्यायन्ति घातैश्च न चोद्विजन्ते
भयावहास्ते समरे नृपाणाम् ॥ ४२ ॥
शोकं शीलं भयं लज्जामालस्यं चैवमादिषु ।
सुकूलं तं विजानीयादलं पर्य्याणवारणे ॥ ४३ ॥
स्थाणुकण्टकवृक्षैश्च सुधाखदिरकण्टकैः ।

स्वामिघाताय चादत्ते तेषां रूपमिदं शृणु ॥ ४४ ॥
वानरोलूकमार्जारतरक्षुगण्डलोचनाः ।
गतिर्वा असुरैस्तुल्या स्थूलमेढ्रशिरान्विताः ॥ ४५ ॥
लम्बौष्ठकर्णनासाश्च क्लृप्तहीनाधिकद्विजाः ।
विच्छिन्नप्रोथगण्डा ये भ्रुकुटीचित्रमेहनाः ॥ ४६ ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलानामिह राजेन्द्र वक्तुं शक्या न मादृशैः ॥ ४७ ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्ष्यलक्षणमेतेषां तेनेदं दुष्करं विदुः ॥ ४८ ॥
अव्याप्तिरतिसंक्षेपादतिव्याप्तिश्च विस्तरात् ।
मुनीनामेकवाक्यत्वाद् ब्रूयामः स्थितिदुष्कराः ॥ ४९ ॥
सत्त्ववर्णगतिच्छायास्वरस्थानगतिः कुलम् ।
पुष्पं पुण्ड्रकनामानि दोषं वा जवलक्षणम् ॥ ५० ॥
एवं लक्षणसंयुक्तं दृश्यते शूररक्षणे ।
लक्षणेन विहीना ये निर्दोषाः स्युः प्रधाविताः ॥ ५१ ॥
हयरोहस्य का चिन्ता लक्षणैः शुभनिन्दितैः ।
तेनात्र न कृतोऽस्माभिर्हयलक्षणविस्तरः ॥ ५२ ॥
हयवाहनविज्ञानं कौतुकाहितबुद्धयः ।
अनायासेन गृह्णन्ति परं हृष्टा इमे जनाः ॥ ५३ ॥
चलासनं कथा रागाः पाणिघातप्रतोदनम् ।

पदप्रघातसंज्ञानि दोषो यैरुपजायते ॥ ५४ ॥
कामात् कोपाद्भयान्मोहाद्दर्पाच्चैव मदाश्रयात्।
पर्य्याणारोहदोषाच्च दूष्यन्तेऽश्वा निसर्गतः ॥ ५५ ॥

श्रीयुक्तसामन्तनरेन्द्रवन्दितं
रणे हयारोहवराभिनन्दितम्।
धर्म्मार्थकामादियशःप्रधान-
मित्थं कृतं वाहनशास्त्रविस्तरम् ॥ ५६ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहनाध्यायो नवमः ॥

## अथ दशमोऽध्यायः।

### धातुपरीक्षा।

अथातः संप्रवक्ष्यामि धातूनां लक्षणं परम्।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवाः ॥ १ ॥
ततः शुद्धशरीरोऽत्थरक्तदोषानवाप्नुयात्।
रक्तदोषा[१]स्तदा वाजी प्राप्नोत्येव महामयान् ॥ २ ॥
तस्मात् सर्व्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः।
आषाढसमये प्राप्ते शिरामोक्षेण[२] कृत्स्नशः ॥ ३ ॥

१। दोषदूष्यात्। खः।
२। शिरामोक्षञ्च कारयेत्। कः।

तेन[१] संशोध्यते रक्तं वाजिनां दोषसम्भवम्।
ततः शुद्धशरीरोऽथ पिण्डाद्यैश्च वलोकृतः[२] ॥ ४ ॥
श्रावणे शष्प[३]मासाद्य वज्रवत् सुदृढ़ो भवेत्।
यदि[४] रक्ताधिको वाजी सस्यमश्नाति[५] कर्हिचित् ॥५॥
रक्तात् सञ्जायते पित्तं ततो[६] नाशमवाप्नुयात्।
रक्ताधिकश्वासपुटः[७] स्नेहाद्यैः शस्यमत्ति चेत्[८] ॥ ६ ॥
संप्राप्य[९]श्लेष्ममचिराद्धयो नाशमवाप्नुयात्।
हीनरक्तो यदा शस्यं रूक्षोऽश्नाति तुरङ्गमः ॥ ७ ॥
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात्।
तच्चेदं लक्षणं प्रोक्तं रक्तकोप[१०]समुद्भवम् ॥ ८ ॥
धातूनामपि सर्वेषां ज्ञेयश्चिह्नं विचक्षणैः।
पित्तरक्तप्रकोपेण यदा संपीड्यते हयः ॥ ९ ॥

---

१। तस्मात् संशोधयेद्रक्तम्। खः।
२। अश्वः पिण्डादिप्रवलीकृतः। खः।
३। बलम्। खः।
४। ततो। कः।
५। शस्यं नाश्नाति। कः।
६। पित्तात्। खः।
७। रक्ताधिकोऽश्वोऽथ पुष्टौ। खः।
८। शस्यमाचरेत्। खः।
९। ततः श्लेष्माणमासाद्य सोऽचिरान्नाशमाप्नुयात्। खः।
१०। काय। कः।

तदा कण्डूतिमासाद्य कपते सततं वपुः।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम्॥ १०॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः।
एवं[1] वातोत्थरक्तेन ज्ञात्वाश्वम्पीडितं ततः॥ ११॥
शिरामोक्षं विधायैव दद्यात्सकटुकं गुड़म्।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते॥ १२॥
पित्तासृग्दूषितो वाजी[2] यदि चाश्रूणि मुञ्चति।
नेत्रान्ते पाण्डुरत्वञ्च सद्यो मृत्युमवाप्नुयात्॥ १३॥
नेत्रयोर्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम्।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः॥ १४॥
अधोवक्त्रो भवेन्नित्यं कासते च मुहुर्मुहुः।
आहारं न च गृह्णाति नोत्साहं कुरुते क्वचित्[3]॥१५॥
न विन्दति कशाघातं[4] न च पार्ष्णिं नचासनम्।
नासाग्रेण क्षिपेत्तोयं वह्निघर्मञ्च [5]वाञ्छति॥ १६॥
तस्यापि शोधयित्वासृग् दद्याच्छुण्ठ्या युतं गुड़म्[6]।
सर्वं रक्तात्ततः शुद्धा निःशेषं[7] समवाप्नुयात्॥ १७॥

---

१। एवं पित्तेन रक्तेन ज्ञात्वा संपीड़ितं हयम्। खः।
२। रक्तपित्तार्दितोऽश्वश्च। खः।
३। पथि। खः। ४। काशाद्यं। कः।
५। वाञ्छते वह्निमातपम्। खः।
६। समन्वितम्। कः।
७। निःशेषाङ्गमवाप्नुयात्। खः।

वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा[1] भवेत् ।
नेत्रान्ते विन्दुकाकारकण्डूस्तस्य तथोदरे ॥
तदा मृत्युमवाप्नोति षण्मासाभ्यन्तरे ध्रुवम् ॥ १८ ॥

शुंठ्यामृता गोक्षुरकं घनञ्च
श्यामावचाहिंगुयुताच यष्टिः ।
कफप्रणाशाय विनिर्मितोऽयं
पिण्डः प्रसिद्धश्च कफापहश्च ॥ १९ ॥

नोचेदश्नाति शुंठ्याढ्यं सैन्धवन्नस्य[2] मार्गतः ।
वायुरक्तप्रकोपेण पीड़ितस्तु तुरङ्गमः ।
कुक्षिहृदये हय[3]स्तीव्रं मुहुः श्वासं प्रमुञ्चति ॥ २० ॥
नैकच मन्यते[4] स्थातुं क्षेपते च निरर्गलम् ।
एवं वातोद्भवं ज्ञाप्यं[5] रक्तन्देहे हयस्य च ॥ २१ ॥
शोधयित्वाथ सन्द्यान्महाघृतमनल्पकम् ।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति ॥ २२ ॥
उत्साहं कुरुते मार्गे सर्वदोषविवर्ज्जितः ।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च ॥ २३ ॥
यदा स्यातां सिते रक्ते कार्ष्णः कडूस्तथानने ।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम् ॥ २४ ॥

१ । यदा । खः ।
२ । तस्य मार्गते । कः ।
३ । कुक्षिहृदयग्रहः । खः ।
४ । रमते । खः ।
५ । ज्ञात्वा । खः ।

अस्मकञ्च[1] युतन्दद्या माहिषेण निशागमे।
सन्निपातेऽथ[2] रक्तेन यदा संपीड्यते हयः॥ २५॥
यदा[3] वेपथुमाप्नोति काशते च निरर्गलम्।
निद्रालस्याग्निमन्दत्वं वस्तौ मलनिबन्धनम्[4]॥ २६॥
कर्णयोः पातनञ्चैव वक्त्रा[5]ल्लालाविमोक्षणम्।
तत्रापि शोधयेद्रक्तं ततो लङ्घनमर्हति॥ २७॥
यावद्दोषस्य निर्णाशं स्तोकोदककृताशनः।
क्वचिदुष्णं क्वचिच्छीतं क्वचिद्भेषजसंयुतम्॥ २८॥
प्रदेयं युक्तितत्वज्ञै[6] वारि वार्य्यं न कुत्रचित्।
सपथ्या[7] चामृता चैव कटुका च वचा तथा॥ २९॥
शामयेत्तल्लक्षणादेव त्रिधातुकुपितं ज्वरम्।
शिरीषं श्रीफलञ्चैव वेतसञ्चैव वृद्धिभाक्॥ ३०॥
मन्दाग्नित्वं सदोषाणां कुरुते भस्मसाद्द्रुतम्।
मधुकं[8] मधुजालञ्च माधुर्यं कुलिकान्वितम्॥ ३१॥

१। उरमकं। खः।
२। सन्निपातेन रक्तेन। खः।
३। तदा। खः।
४। ततो मलविशोधनम्। कः।
५। वक्त्रे। कः।
६। यव्रतत्त्वज्ञः। खः।
७। सपर्पटामृता। खः।
८। मधुरं मधुनालञ्च माधुर्यं गुलिकान्वितम्। खः।

शिरीषं क्षुद्रकं लाक्षां क्वाथयित्वा[1] त्रिभागतः ।
यस्यैतत्सन्निपाताय वाजिनः संप्रदीयते ॥ ३२ ॥
तस्य तन्नाशमायाति तमः सूर्योदये यथा ।
स्वस्थस्यापि हि नेत्रान्ते स्यातां नीले च वाजिनः॥ ३३॥
गन्धश्च सदृशः क्षोण्या तदा मृत्युर्द्विमासिकः ।
नीले पीतेऽथ नेत्रान्ते स्यातां चेद्वाजिनः क्वचित्[2] ।
स निर्व्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥ ३४ ॥
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ।
विशेषात् स्वरभेदः स्यात्तस्यायुः पाञ्चमासिकम् ॥ ३५ ॥
जिह्वायां जायते विन्दुरकस्माद् यस्य वाजिनः ।
कृच्छ्रञ्च जीवते मासं स वाजी नात्र संशयः ॥ ३६ ॥
पीतो मासद्वयेनैव समेमृत्युं प्रयच्छति ।
त्रिभिर्मासैस्तथारक्तश्चतुर्भिश्च विचित्रितः ॥ ३७ ॥
पञ्चभिर्नीलवर्णश्च षड्भिर्वज्रसमाकृतिः[3] ।
सप्तभिः पाटलाकारश्चम्पकाभस्तथाष्टभिः ॥ ३८॥
नवभिश्च हरिद्राभो दशभिर्जन्तुकोपमः[4] ।

---

१ । काष्ठाकार्थं पीत्वा । खः ।
२ । नीलपीतेऽथ नेत्राख्यां स्यातांश्चेद्वाजिनः क्वचित् । कः ।
३ । वज्रसमप्रभः । कः ।
४ । शंखकोपमः । कः ।

एकादशभिर्दूर्व्वाभो[1] वत्सरेण हिमद्युतिः ॥ ३९ ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकांकितम्[2] ।
जिह्वा हिमकराकारा[3] मासषट्कं स जीवति ॥ ४० ॥
ग्रीवाग्रे पिण्डिका यस्य जायते च तथाधरे ।
मूत्रं करोति रक्ताभ्यं मासषट्कं स जीवति ॥ ४१ ॥
वर्णः श्वेतो यदा यस्य नेत्रयोश्च प्रजायते ।
दशमासान् समासाद्य पित्तार्त्तो न स जीवति[4] ॥ ४२ ॥
यस्य नीलप्रभे स्यातां नेत्रे वातार्द्दितस्य तु ।
मासत्रयञ्च कृच्छ्रेण यः सत्तिः स न जीवति ॥ ४३ ॥
श्लेष्मयुक्तस्य वा रक्ते यदि स्यातां विलोचने ।
वक्त्रगन्धः सुरातुल्यो दश मासान् स जीवति ॥ ४४ ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्द्दितस्य च ।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्त्तितम् ॥ ४५ ॥
बहुवर्णे घने नेत्रे स्यातां धातुसमागमे ।
तस्य सप्तेर्भवेन्मृत्युः सप्तरात्रादसंशयम् ॥ ४६ ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम् ।
दृश्यते स च विज्ञेयः पित्ताढ्यो मासजीवकः ॥ ४७ ॥

---

१। रक्ताभः। कः।
२। विपुलान्वितम्। कः।
३। समाकारा। कः।
४। वाजिनः पित्तयुक्तस्य दशमासं स जीवति। कः।

यस्य पित्तप्रसक्तस्य काले नीरदवर्त्तिनि।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥ ४८॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे ॥
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा ॥ ४९॥
भयादपीतपानीयशीतविशीयुतस्य च।
आर्त्तोऽपि ताड़ितोऽत्यर्थं तिर्य्यग्विद्धो यदापि वा ॥ ५०॥
श्रमाज्ज्वराच्च वन्याद्वा गात्रे वा विषमस्थिते।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥ ५१॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते धातुपरीक्षाध्यायो दशमः ॥

## अथैकादशोऽध्यायः ॥

अनुचर्य्या।

द्वासप्ततिसहस्राणि नाड़ीनां हि भवन्ति च।
वाजिनामिह सर्व्वेषां वायुरक्तं व्यवस्थितम् ॥ १॥
तासां निर्मोचनार्थाय द्वाराण्यष्टौ वदाम्यहम्।
यैर्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥ २॥
कण्ठे वक्षसि तालौ च नासयोश्च मुखे तथा।
अण्डयोरथ पादेषु पादयोरुभयोरपि ॥ ३॥
कालं वलञ्च विज्ञाय वाजिनां भिषगुत्तमः।
शिरामोक्षं प्रकुर्वीत स्थानेष्वेतेषु पण्डितः ॥ ४॥

अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः।
विकारयुक्तं यद्रक्तं सुस्वल्पमपि वर्जयेत् ॥ ५ ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम्[1]।
तस्य यद्वाञ्छितं किञ्चिद्यानार्थं[2] तच्च सिध्यति ॥ ६ ॥
ततो हेमन्तमासाद्य निवाते निबधेद्धयम्[3]।
मासोत्थं यवसन्दद्यात् पानीयञ्च यथेच्छया ॥ ७ ॥
घृतं वा यदि वा तैलं पाने दद्याद्विचक्षणः।
वाहयेच्च[4] शनैर्नित्यं सर्व्वदोषप्रशान्तये ॥ ८ ॥
ततः शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम्।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम्[5] ॥ ९ ॥
यवोत्थं यवसन्दद्या[6]देकविंशत्यहानि च।
यवाभावेऽथ चणकान् दद्यादार्द्र[7]तरान् सदा ॥ १० ॥
तदभावे मसूरांश्च शुष्कार्द्रांस्तैलसंयुतान्।
यवसं चापि तद्देयं[8] नीरोगो जायते हयः ॥ ११ ॥

१। वाजिनः। कः।
२। नानार्थं तत्रसिध्यति। कः।
३। अश्वं निबन्ध्ययेत्। कः।
४। वाहनञ्च। कः।
५। भवेद्यावद्दिनसप्तकम्। कः।
६। यश्चदद्यादिंशत्यहानि च। कः।
७। आर्द्रान् वरान्। कः।
८। यत्प्रोक्तं भविष्ये तदहं यदा। कः।

औषधानाञ्च सर्व्वेषां क्वाथानां[1] नस्यकर्म्मणाम् ।
तैलानाञ्च घृतानाञ्च यवस्य यवसं परम् ॥ १२ ॥
पर्व्वतानां यथा मेरुरायुधानाञ्च वज्रकम् ।
तथा सर्व्वोपचाराणां सप्तेः श्रेष्ठत्तमा[2] यवाः ॥ १३ ॥
देवतानां यथा विष्णुर्ब्रह्मा वेदविदां वरः ।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥ १४ ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान् दोषान्[3] यवाः सप्तेर्हरन्ति च ॥ १५ ॥
उपचारक्रियाः सर्व्वाः पञ्चर्त्तुजनिता हये ।
कृताः स्युर्यवभोज्येन सप्तेस्तस्य कृता नरैः[4] ॥ १६ ॥
यस्य दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
अकृतापि[5] कृता सर्व्वा पञ्चर्त्तुजनिता हये ॥ १७ ॥
कृताः स्युर्यवभोज्येन सप्तेस्तस्य कृता नरैः ।
नीरोगास्तुरगाः सर्व्वे शालिहोत्रमतं यथा ॥ १८ ॥
पञ्चर्त्तुजनिता वाथ[6] क्रिया न्यस्ता तुरङ्गमे ।
अतीतास्ते विजानीयाद्यवभोज्यविवर्जिताः ॥ १९ ॥

---

१ । क्वाथ्यतां । कः ।
२ । अश्वोत्तमाः । खः ।
३ । सर्व्वान् । कः ।
४ । कृताः सर्व्वेषु भोजेन सप्तेस्तु सुकृताय वै । कः ।
५ । क्रिया अपि कृताः सर्व्वाः । कः ।
६ । यथा । कः ।

एवं रक्तविशुद्धानां ज्ञात्वा यत्नेन वाजिनाम्।
दद्यादुगोमूत्रसंयुक्तां सतैलां च हरीतकीम्॥ २०॥
दिनं चिसप्तकं यावत् पलपञ्चप्रमाणतः।
ततः शुद्धिमवाप्नोति निःशेषाद्रुधिरोद्गमात्॥ २१॥
ततो नवतृणाहारं संप्राप्य सुमनोहरम्।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते॥ २२॥
न प्रायोवाहयेदश्वं प्रावृट्काले कथञ्चन।
य इच्छेद्वाजिनस्तस्य वाहनं दशमासिकम्॥ २३॥
कूपोदकं सदा शस्तं पानाय जलदागमे।
अभ्यङ्गः कटुतैलेन निर्वातस्थानबन्धनम्॥ २४॥
एकाहांतरितं दद्यात्लवणञ्च विचक्षणः।
पलद्वयप्रमाणेन मुखजापरिशुद्धये॥ २५॥
मुखरोगमवाप्नोति क्षारस्वादविवर्जितः।
दृष्टाम्भोमिस्तु सिक्ताङ्गस्तेजसा त्यजते हयः॥ २६॥
अशुद्धोदकजान् प्राप्तान् प्राप्नोति शतशः परान्।
नैवोदकप्रधानेन बलहीनश्च जायते॥ २७॥
तस्मात् सर्व्वप्रयत्नेन प्रावृट्काल उपस्थिते।
अनेन विधिना प्राज्ञो वाजिनः परिपोषयेत्॥ २८॥
ततः शरदमासाद्य बहुखण्डसमन्वितम्।
शस्तं क्षारोदनं समपलाष्टपरिसंख्यया॥ २९॥

दुग्धं वा केवलं रात्रौ क्वथितं संप्रशस्यते।
तथान्यदपि यत्किञ्चिन्मधुरं संप्रजायते॥ ३०॥
पानाय सारसं तोयं यवसं सुमनोहरम्।
नीलवर्णमकुष्टाश्च घृतं प्राशेन संयुतम्॥
वाहनं च प्रयत्नेन सुस्वल्पमपि वर्जयेत्॥ ३१॥
परीक्षाग्नौ यथा हेम्नः स्नेहस्य च प्रतिक्रिया।
हयजीवस्य तद्वच्च परीक्षा यवभक्षणे॥ ३२॥
यथा सांयात्रिकः पारं गत्वोच्चैः स्वस्थतां व्रजेत्।
तद्वत् यवाशनोत्तीर्णाः शुद्धदेहा हयोत्तमाः॥ ३३॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्जले।
स्वल्पेनापि हि दोषेण यवदोषांस्तथैव च॥ ३४॥
एवं ज्ञात्वा विदग्धेन यवा देयाः प्रयत्नतः।
प्राप्तक्षीरा विशेषेण शिशिरे समुपस्थिते॥ ३५॥
शुष्का वापि यवा देयाः सर्व्वकालं च वाजिनाम्।
प्राणदास्ते ततो[1] ज्ञेयाः सर्व्वव्याधिविनाशनाः॥ ३६॥
यश्चाश्नाति यवानाशु शुष्कांश्च स्वेच्छया सदा।
न तस्य[2] जायते रोगः कदाचिच्च यवान्नभाक्॥ ३७॥

---

१। यतः। कः।

२। ततश्च जायते रोगः। खः।

नच शूलं नच श्वासो [1]नच प्लीहा नच क्लमः ।
नच रक्तप्रकोपश्च नच वातादिधातवः[2] ॥ ३८ ॥
योग्योऽशनार्थं वाहानां प्रधानो यव ईष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥ ३९ ॥
यवाभावेऽथवा दद्यान्मुकुष्टांस्तैलसंयुतान्[3] ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥ ४० ॥
मुकुष्टभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।
उत्साहं परमं धत्ते सच[4] रोगैर्विमुच्यते ॥ ४१ ॥
अप्राप्तौ च मुकुष्टानां मुद्गा देया मनीषिभिः[5] ।
सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्वविवर्द्धिनीम् ॥ ४२ ॥
एते पुष्टिगुणाः प्रोक्ताश्चणकाहारजा हये ।
नान्यस्तस्मादभावेन सर्व्वेषां तान् विनिर्द्दिशेत् ॥ ४३ ॥
नान्यच्छितं[6] प्रशंसन्ति पञ्चमं वाजिनां बुधाः ।
भक्षणार्थं यतस्तस्य दानो[7]ऽभ्युत्थानमुत्तमम् ॥ ४४ ॥

---

१ । प्लीहं नच तथोदरे । कः ।
२ । वातादिव्याधिजः । कः ।
३ । तदभावे यवान् दद्यात् । मुकुटान् तैलसंयुतान् । कः ।
४ । सर्व्वरोगैः प्रमुच्यते । कः ।
५ । विवेकिभिः । कः ।
६ । नान्यदन्नं । कः ।
७ । दानं । कः ।

अन्नाभावे प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥ ४५ ॥
यस्याश्वः शस्यमश्नाति सदा लवणमिश्रितम्[1] ।
किं तस्य शस्यदानेन यथाभूतेन[2] भूपतेः ॥ ४६ ॥
शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
दिवानिशमरण्ये च स्वेच्छया संविभुक्तिकाः[3] ॥ ४७ ॥
तेचापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्व्वप्रयत्नेन मुक्तान्[4] सञ्चारयेद्वने ॥ ४८ ॥
आरोग्यार्थं सुपुष्ट्यर्थमुत्साहार्थं विशेषतः ।
वित्तव्ययस्य रक्षार्थं हरेद्रोगं[5] प्रयत्नतः ॥ ४९ ॥
वसन्तसमये प्राप्ते वाहयेत् सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं[6] विशेषतः ॥ ५० ॥
सर्व्वच सम्भवं भोज्यं तैलं वा यदि वा घृतम् ।
न दोषकारणं प्रोक्तं सक्षारं लवमश्नतः ॥ ५१ ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः[7] प्रणश्येत सालस्यं जायते वपुः ॥ ५२ ॥

---

१ । वर्जितं । कः ।
२ । यथा दानेन भूपतिः । कः ।
३ । च भुनक्ति यः । कः ।
४ । मुक्ताः । खः ।
५ । दरिद्रस्य । कः ।
६ । सतैलञ्च । कः ।
७ । तस्योत्साहप्रणाशाय । कः ।

ततो मन्दाग्निनाविष्टो रोगाभावे[1] प्रजायते ।
तस्मात्सर्व्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥ ५३ ॥
ग्रीष्मकालेच संप्राप्ते दूर्व्वाभोज्यं प्रशस्यते ।
वाजिनामिह सर्व्वेषां घर्म्मतापोपशान्तये ॥ ५४ ॥
घृतपानं विशेषेण सुच्छायासु निबन्धनम् ।
रक्तस्रावेच गात्रेषु ग्रासं वा घृतसंयुतम् ॥ ५५ ॥
दूर्व्वाभावे प्रदातव्यं तुरगाय घृतान्वितम् ।
क्षत्त्र[2]काशस्यमध्याग्रं सर्व्वदोषोपशान्तये ॥ ५६ ॥
एवं स्वस्थमयं सम्यगुपचारं[3] करोति यः ।
हयस्यतु ग्रहे नित्यं[4] तस्य वर्द्धन्ति वाजिनः ॥ ५७ ॥
नीरोगाः पुष्टिसंयुक्ताः प्रहृष्टोत्साहसंयुताः ।
तर्पिता[5] भूमिपैरश्वा भूमिमार्गक्रियाक्षमाः ॥ ५८ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतुपर्य्यायाध्याय एकादशः ॥

---

१ । श्रमाभावे । कः ।

२ । हति । कः ।

३ । उपस्कारं । खः ।

४ । गृहे । कः ।

५ । सुदुर्लभास्तेऽपि वै चश्वा भूमिकार्य्यक्रियाक्षमाः । कः ।

## अथ द्वादशोऽध्यायः ।

नस्यः ।

कासश्वाससमो नस्यो वातपित्तकफोद्भवः ।
नस्यः संनाशयेत्तस्मात्तं नस्यं योजयेद्धये ॥ १ ॥
पिप्पली सैन्धवं सारं नागरं[1] च गुड़ान्वितम् ।
क्षत्तिकासार[2]मध्याग्रं वाजिनां[3] श्लेष्मनाशनम् ॥ २ ॥
चूलिकालवणं नस्ये सदा रोगविनाशनम् ।
सिता[4]चन्दनतोयानि साक्तुकाख्यानि[5] वाजिनाम् ॥ ३ ॥
नस्यकर्म्माणि युक्तानि नाड़ीवातप्रशान्तये ।
मृदुकैरार्द्रकं सान्द्रं वचाक्षारविमिश्रितम् ॥ ४ ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम् ।
शर्करां माक्षिकं सैरं[6] पटोलं पलसंयुतम् ॥ ५ ॥
नस्ये[7] शरदि सप्तीनां जायते रोगशान्तये ।
वचा चोष्माणकं[8] कुष्ठं शुण्ठीच कासमर्दिका[9] ॥ ६ ॥

---

१ । निर्वारं गवड़ान्वितम् । कः ।
२ । क्षतिकाग्रस्य । खः ।
३ । सर्व्वदोषप्रशान्तये ।
४ । शिखा । कः ।
५ । शिक्तकाख्यानि वाजिनाम् । कः ।
६ । सारं । कः ।
७ । नस्यं । कः ।
८ । चोष्कणकं । कः ।
९ । पुष्करमाक्षिकं । कः ।

युक्तं शीतोदके स्तोके तेषां नस्येऽपसर्पयेत्[१] ।
गुडूची कौमुदी ताली मिश्रिता कूपवारिणा[२] ॥ ७ ॥
नस्ये दत्ता वराश्वानां शिशिरे[३] सुखदा स्मृता ।
अपामार्गं[४] महानस्यं सर्व्वरोगविनाशनम् ॥ ८ ॥
केवलं कटुतैलं वा गोमूत्रे पाचितं च यत् ।
मैथुनाद्रिक्तसन्धीनां स्रोतोवलकरं विदुः ॥ ९ ॥
कण्ठरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
महद्गुणकरं प्रोक्तं सर्व्वदोषनिवारणम् ॥ १० ॥
अपामार्गस्य[५] मूलेन नस्ये मूत्रंच छागलम् ।
मुखरोगविनाशाय नस्यं मत्स्य[६]वसोद्भवम् ॥ ११ ॥
लशुनं पिप्पलीमूलं गण्डकी नागकेशरम् ।
दत्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ॥ १२ ॥
नस्यं पर्य्युषितैस्तोयैः[७] प्रातर्दत्तं तु केवलैः[८] ।
अश्वानाञ्च नराणाञ्च चायुष्यं वलवर्द्धनम् ॥ १३ ॥

---

१ । दोषप्रशान्तये । कः ।
२ । मिश्रितं कोष्णवारिणा । कः ।
३ । शरीरे । कः ।
४ । अभयाख्यं । कः ।
५ । मूत्रं चैव पुमामस्यं । कः ।
६ । वस्त्र । कः ।
७ । नस्ये पर्य्युषितं । कः ।
८ । केवलम् । कः ।

पिप्पलीमिश्रतोयेन[1] ससितासलिलेन च ।
नस्यं यच्छति सप्तीनां सर्पिषा[2] यच्छते बलम् ॥
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्धा वाजिशास्त्रज्ञैर्यथावत्परिकीर्त्तितम् ॥ १५ ॥
देयं वाताधिके स्निग्धं रूक्षं[3] तिक्तं कफाधिके ।
मधुरं[4] चैव पित्ताढ्ये तुरङ्गे समयोचितम् ॥ १६ ॥
द्विपञ्चाशत्प्रमाणं वा श्रेष्ठं तन्नस्यमुच्यते ।
पादोनं[5] मध्यमं तच्च षड्विंशत्यां तथाधमम् ॥ १७ ॥
नस्यान्ते वाजिनो रक्तं सदा पुष्टं प्रजायते ।
नस्यदानात् हृतं तस्य विनाशमुपगच्छति ॥ १८ ॥
दाडिमं पुष्करं श्रीकं श्वेतदूर्वाङ्कुरास्तथा ।
शीतोदकेन[6] संयुक्तं रक्तं दुष्टं न जायते ॥ १९ ॥
धातकी गोक्षुरं रोध्रं कुसुम्भं सिन्धुवारकम् ।

---

१। तैलेन शिलाच। कः।
२। स तेषां। कः।
३। रौक्ष्यतिक्ते। कः।
४। पित्ताधिकेतु मधुरं तुरङ्गे संप्रयोजितम्। कः।
५। षष्टोत्तरं मध्यमं प्रोक्तं षड्विंशत्या। कः।
६। शीतोदकेन तन्नस्यं दुष्टरक्तं जयेत् ध्रुवम्। कः।

शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ॥ २० ॥
धातकी गण्डकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ॥ २१ ॥
शुण्ठी घृतञ्च दुग्धञ्च रससार[1] तथैव च ।
वातदोषविनाशाय नस्यमेतत्प्रयोजयेत् ॥ २२ ॥
माक्षिकं शर्करायुक्तं[2] चन्दनं केशराणि च ।
नस्योऽयं वारिणा सद्यः[3] पित्तनाशकरः परः[4] ॥ २३ ॥
गुडूची शुण्ठी मुस्ता च तगरं सितसर्षपाः ।
सन्निपाते सपित्तेऽयं नस्यः स्याज्जीवरक्षकः[4] ॥ २४ ॥
अभया पुष्करिणी धात्री[5] एला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥ २५ ॥
मरिचं पिप्पलीमूलं वचा भारङ्गिका[6]भया ।
सन्निपाते कफाधिक्ये नस्यं समः सुखप्रदम् ॥ २६ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधिकाराध्यायो द्वादशः ॥

---

१ । रजःसारं । कः ।
२ । मिश्रं । कः ।
३ । सदा । कः ।
४ । तु नस्योऽयं वारिणा क्षेमकारकः । कः ।
५ । एला । कः ।
६ । सारङ्गिका । कः ।

# अथ त्रयोदशोऽध्यायः।

पिण्डः।

कटुका च जयन्ती च भ्रामरी सुरसा[1] घनाः।
पञ्चामृतमयः पिण्डो वाजिनामयमिष्टकृत् ॥ १ ॥
एला शतघ्नी[2] सुरसा काकजङ्घा[3] शतावरी।
माक्षिकं समितं पिण्डः पित्तयुक्ते[4] हि वाजिनि ॥ २ ॥
माक्षिकं[5] सैन्धवं मुस्ता गोमूत्रं च हरीतकी।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥ ३ ॥
कंकोलं[6] केतकी द्राक्षा शर्करा मधुयष्टिका।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः[7] ॥ ४ ॥
मत्स्यमांसेन संयुक्तं ग्रावचूर्णं[8] घृतप्लुतम्[9]।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥ ५ ॥
बला मद्यं[9] दधि क्षौद्रं भक्षयंस्तुरगो भवेत्[10]।
अतिवृद्धोऽपि सूक्ष्मोऽपि यथा[11] षट्सप्तवार्षिकः ॥६॥

१। सरसा। खः।
२। स्तनघ्नी। कः।
३। कालजंघा। कः।
४। पित्तयुक्तस्य वाजिनः। कः।
५। संघायाखिलरोगेषु गोमूत्रेषु। कः।
६। कंकोली। कः।
७। वाजिनाम्। खः।
८। माषचूर्णं। कः।
९। चूर्णमिष्टं। कः।
१०। भटम्। कः।
११। भवेदुयत्सप्तवार्षिकः। कः।

मेथिका[1] धातकी काली सारणी[2] वीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥ ७ ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुड़ान्विता ।
दत्ता[3] पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥ ८ ॥
त्रिफला कटुका मुस्ता विड़ङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्त्तिहृत् ॥ ९ ॥
वचा विदलिताः[4] स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्वन्ति वाजिनां व्याधिनाशनम् ॥ १० ॥
सैन्धवं नागरं श्यामा गुड़ूची सितसर्षपाः ।
अम्लवेतसमश्वानां[5] पिण्डोऽयं शूलनाशनः ॥ ११ ॥
पिप्पली पिप्पलीमूलं[6] कटुका महदेविका ।
दूर्व्वा[7]पल्लवसंमिश्रः पिण्डोऽयं शोफनाशकः ॥ १२ ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं श्लथने शस्तो वाजिनां सुगतिप्रदः[8] ॥ १३ ॥
वचालोध्रं सकर्पूरं गुहा श्यामा गुड़ं मधु ।

---

१ । मिथिका । कः ।
२ । सवणी वीजपूरिका । खः ।
३ । दत्तः पिण्डविधानेन वाजिनां सुखवृद्धिदः । कः ।
४ । विफलता स्निग्धा सघृता क्षारभागिका । कः ।
५ । संयुक्ताः । कः ।
६ । मुस्ता । कः ।　　　　७ । पृथ्वीपल्लव । कः ।
८ । पिण्डः श्लेष्मगदे प्रशस्तो वाजिनां हि सुखप्रदः । कः ।

समांशकेन पिण्डोऽयं करोति[1] लघिमा हये ॥ १४ ।
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसं च पिण्डो[2] दत्तो जयेच्छ्रमम ॥ १५
जंभीरं फलिणीपत्रं त्वचा किञ्जल्कमेव च ।
जातशोणित वाहानां पिण्डोऽयं रक्तनाशनः ॥ १६ ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम्[4] ॥ १७ ॥
आरनालं प्रविणा च पथ्या नैपालिका[5] फलम् ।
पिण्डे दत्ते[6] हये दघ्ना निहन्त्याशु विजृम्भितम् ॥ १८ ॥
मुद्गपर्णं[7] वचामिश्रं तथा सर्ज्जरसान्वितम् ।
पिण्डे दत्ते निहन्त्याशु क्रमिसंघं[8] व्रणोद्भवम् ॥ १९ ॥
स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान्[9] सर्व्वान क्रमि-
व्रजान् ॥ २० ॥

१ । लघुत्वं कुरुते । कः ।
२ । पिण्डे दत्ते । खः ।
३ । जातशोणा वराश्वानां पिण्डोऽयं व्याधिनाशनः । खः ।
४ । वातकोपः प्रशाम्यति । कः ।
५ । नैपालिकौ । कः ।
६ । पिण्डं दत्तं । कः ।
७ । यूषं । खः ।
८ । क्रमिं मद्यो व्रणोद्भवम । कः ।
९ । उदरस्थान् क्रमिव्रजान् । कः ।

सिता दुग्धं सकर्पूरमेलया[1] पक्वसंयुतम् ।
अग्नि[2]दाहार्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥२१॥
ग्रीष्मासह्य[3]प्रतप्तानामारनालं परिस्रुतम् ।
सकृदिच्छन्ति पिण्डेन[4] वाजिनां सुखकारकम् ॥ २२ ॥
वृष्टिवातार्द्दितानाञ्च वाजिनां पुष्टिकृन्मतः ।
पिण्डः कृतः सतैलेन लशुनेन पलेन च ॥ २३ ॥
महाघृतं सकर्पूरं शर्करा दुग्धमेव च ।
कफ[5]नाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः ॥ २४ ॥
रोचना च वरो[6] धात्री तथा स्याद्बीजपूरकः ।
गुल्मं प्रशमयन्त्याशु वाजिनां हृदयोद्भवम् ॥ २५ ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिश्वासं हरन्त्येते वाजिनां मधुना सह ॥ २६ ॥
उदुम्बरफलं मांसं सौकरं माहिषं दधि ।
हयस्य चातिवृद्धस्य[8] करोति परमं सुखम् ॥ २७ ॥
विभीतकं प्रियङ्गुश्च सर्जिका लवणं तथा ।

१ । एलापक्वसंयुतम् । कः ।
२ । स्निग्धा । कः ।
३ । ग्रीष्मदाह । कः ।
४ । शर्करामिश्रितः पिण्डः । कः ।
५ । कम्प । कः ।
६ । वर्वरी । खः ।
७ । औदुम्बर । कः ।
८ । शीतबद्धस्य । कः ।

बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम्।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम्॥ ४॥
ओजस्करं व्याथानाशं स्रोहशोपप्रणाशनम्।
धातकी केशरं कुष्ठं कुसुम्भं कुंकुमं नलम्॥ ५॥
दाड़िमं[1] सितरोध्रञ्च पलमात्राणि निःक्षिपेत्।
घृतञ्च पाचयेत्[2] पानादभिघातान्वितो हयः॥ ६॥
जायते सर्व्वशुद्धाङ्गो[3] महाप्राणैर्न संशयः।
आरनालं वचा कुष्ठं पिङ्गला सिक्थकं[4] घृतम्॥ ७॥
एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला॥ ८॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण[5] वाजिनः॥९॥
कण्डूतिर्निःक्षयं[6] याति तथोदरभवा रुजः[7]।
माक्षिकं निम्बपत्राणि नखं[8] गुग्गुल एव च॥ १०॥

१। दाड़िमी। कः।
२। पाचयत्याममभिघातान्वितं हये। कः।
३। सिद्धाङ्गो महाप्राणः। कः।
४। सत्कृतं द्वयम्। कः।
५। सदा गात्राणि। कः।
६। कण्डूर्निःसंक्षता। कः।
७। च शक्। कः।
८। नवं। कः।

भृङ्गराजो विशाला[1] च पाठा चैव पुनर्नवा।
विल्वमारुष्ककं[2] रोध्रं सैन्धवं तगरं[3] तथा॥ ११॥
एतैः पक्वा घृतं वाजी संप्राप्यार्त्तिर्विमुच्यते[4]॥ १२॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते घृताध्यायश्चतुर्दशः॥

---

## अथ पञ्चदशोऽध्यायः।

### क्वाथः।

पूर्व्वाणि[5] समभागानि क्वाथयेत् कूपवारिणा।
ततोऽष्टांशं समादाय तोयस्य क्वथितस्य च॥ १॥
एतत् सिद्धार्थकं नाम ह्युत्कृष्टं[6] सर्व्ववाजिनाम्।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति॥ २॥
मुस्ता मधुकपत्राणि केशरं लवणं रुहा[7]।
शताह्वा शाल्मली धात्री त्रपुसं फलिनी तथा॥ ३॥
क्वाथयित्वा जलं[8] कौपं दत्तैस्तुल्यैर्विचक्षणः।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च॥ ४॥

---

१। विशालाक्षी। कः।
२। आरुष्यकं। कः।
३। नागरं। कः।
४। चार्त्तिं विमुञ्चति। कः।
५। एतानि। कः।
६। कष्टहृत्। कः।
७। गुहा। कः।
८। जलात् कौप्यादेतैः। कः।

प्रकरोति सदा[1] नाशं पित्तस्यागन्तुकस्य च ।
एकविंश[2]दिनं यावच्छालिहोत्रमतं यथा[3] ॥ ५ ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ता शिफालिका ।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥ ६ ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्यात्त्रिरात्रिकम् ।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥ ७ ॥
मधुकं[4] केशरं पत्रं भल्लातकविभीतकम् ।
शङ्खपुष्पं रुहा सारं समभागेन मिश्रितम् ॥ ८ ॥
कासार्त्तस्य समुद्दिष्टः क्वाथोऽयं त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥ ९ ॥
कुमारी शाल्मली पाठा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली समभागेन क्वाथयेत् समभागतः ॥ १० ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोहये[5]च्छूलजं दोषं मूत्रदोषं च तत्क्षणात् ॥ ११ ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥ १२ ॥
प्रदीप्ताग्निस्तु तेजस्वी[6] सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥ १३ ॥

१ । मरुन्नाशं । कः ।
२ । एकत्रिंशत् । कः ।
३ । तथा । कः ।
४ । मधुरं । कः ।
५ । नाशयेत् । कः ।
६ । सुतेजाढ्यः । कः ।

सेफालिका रुहानीले वेणुका सिन्धुवारिका ।
एतैः क्वाथः कृतः सम्यक् कृमिनाशकरः परः ॥ १४ ॥
मातुलुङ्गस्य वीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लक्ष्मणा च पुनर्नवा ॥ १५ ॥
क्वाथोऽयं शुण्ठिचूर्णेन धावितक्लेशनाशनः ।
प्रकरोति तुरङ्गानां सर्व्वदैव सुखं[1] तथा ॥ १६ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथाध्यायः पञ्चदशः ॥

## अथ षोड़शोऽध्यायः ।

### विषम् ।

वारुणी माक्षिकी गौरी श्रीतालीवीजपूरकम्[2] ।
कृमिक्लेदविनाशाय क्वाथो नित्यं रुजाहरः[3] ॥ १ ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥ २ ॥

१ । सुखावहम् । खः ।
२ । रुजापहा । कः ।
३ । विनाशनं । खः ।

सामान्येन प्रदिष्टोऽयमगदो विषनाशनः।
पृथक् पृथग्विभागेन कर्त्तव्यं साम्यतः परम्[१] ॥३॥
त्रिविधं कीर्त्तितं चैव कृत्रिमञ्च ततःपरम्।
त्रिविधं कीर्त्तितं प्राज्ञैर्विषज्ञानविचक्षणैः॥ ४ ॥
स्थावरं कन्दजं[२] प्रोक्तं जङ्गमं सत्वसंस्थितम्[३]।
कृत्रिमं योगजं प्रोक्तं त्रिविधं विषमुच्यते॥ ५ ॥
यदा स्थिरं समश्नन्ति कदाचित्तुरगोत्तमाः।
तदा कार्य्यं विधानज्ञैरगदस्य प्रयोजनम्॥ ६ ॥
केशरं पद्मनालञ्च सौपर्णी[४] वदरीफलम्।
तक्रमिश्रं हये दत्तं सर्व्वथा विषनाशनम्[५] ॥७॥
सौपर्णी सिन्धुवारञ्च नागवल्ली जटा तथा।
विषार्त्तं प्राप्य संमिश्रं दुग्धे स्यादायुधी हयः[६] ॥ ८ ॥
अश्वगन्धा रुहा एला[७] घृतमिश्रा प्रयोजिता।
विषनाशन्नयत्याशु जङ्गमं हयगात्रतः॥ ९ ॥

---

१। कर्त्तव्यः संमतः परः। कः।
२। सङ्कजं। कः।
३। सत्त्वमाश्रितं। कः।
४। सौवर्णी। कः।
५। क्रममिश्रं हये दत्तं विषनाशकरं परम्। कः।
६। श्यामा वुधा हयः। कः।
७। पित्ता। कः।

मूलं चन्दनवृक्षस्य माषचूर्णपरिप्लुतम् ।
जङ्गमस्य विषस्याशु प्रकरोति च संक्षयम्[१] ॥ १० ॥
तक्रं केशरसंयुक्तं विषं सद्यो नवाभ्रकम् ।
हयस्य जङ्गमं नाशं विषन्नयति[२] तत्क्षणात् ॥ ११ ॥
सौपर्णी[३] विषकङ्कोली पिष्ट्वा मद्येन भाविता ।
जङ्गमं गात्रतः कृत्स्नं विषन्नयति तत्क्षणात्[४] ॥ १२ ॥
एला कङ्कोलिकामूलं सौपर्णीघृतमिश्रितम् ।
विषनाशं करोत्याशु नस्यदानेन वाजिनाम् ॥ १३ ॥
कौसुम्भं केशरं लाक्षा माक्षिका नाकुली तथा[५] ।
कृत्रिमस्य विषस्या[६]शु प्रकरोति च संक्षयम् ॥ १४ ॥
चम्पकं[७] मालतीमूलमुन्मत्तकरसं तथा ।
अश्वानां नाशयत्याशु विषं जङ्गममाश्रितम्[८] ॥ १५ ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते विषयोगाध्यायः षोड़शः ॥

---

१ । करोति हयसंक्षयम् । कः ।
२ । जङ्गमविषं ध्रुवं नश्यति । कः ।
३ । सौवर्णी । कः ।
४ । जङ्गम गात्रसंमिश्रं विषं नाशयति क्षणात् । कः ।
५ । साकुला तुला । कः ।
६ । कान्तस्यास्य विषस्य । कः ।
७ । माक्षिकं । कः ।
८ । व्यावृतम् । कः ।

## अथाष्टादशोऽध्यायः।*

अश्वशालाविधिः।

नृपवेश्मवामभागे शुभदिने तु कारयेद्धयागारम्।
पूज्यश्रियं प्रयत्नादुच्चैःश्रवसं प्रतिष्ठाप्य॥ १॥
सुशुभे भूमिविभागे पूर्व्वोत्तरजलस्रवविधानात्।
तस्मिन्शालां स्निग्धां दशहस्तसमुच्छ्रितां दृढ़ां कुर्य्यात्॥२॥
खादनकोष्ठकमस्मिन् हस्तद्वितयं समुच्छ्रितं कुर्य्यात्।
संस्थाप्य वृषभगावौ सप्ताहं वाजिशालायाम्॥ ३॥
अत ऊर्द्धन्तु हुताग्निः प्रवेशयेद्वाजिनो यथायोग्यम्।
कुशलैस्तरुणैर्दक्षैरनुकूलैः स्थानपालैश्च॥ ४॥
कृतमङ्गलसंस्कारा बन्धव्यास्तेऽच चोत्तराभिमुखाः।
नात्यायता न शिथिलाः स्थाने वा दक्षिणाभिमुखम्॥५॥
वैद्यानां तुरगाय समीपं गृहं कारयेत् पूर्व्वम्।
कार्प्पासिकेन सूत्रेण माक्षिकाणां निवारणम्॥ ६॥
गन्धैर्माल्यैर्धूपैः स्थानानि विभूषयेदलङ्कारैः।
सविशेषं त्वद्यपीतौ हुताग्निं पूरयेद्विद्वान्॥ ७॥

---

* सप्तदशाध्यायो नाधिगम्यते।

स्वच्छिद्रं नातियवसं यथा पश्यन्ति वाजिनः।
स्थानं चैव पृथक् प्राप्तं प्रयत्नं रोगिणां न वै॥ ८॥
कोष्ठी कुष्ठी ज्वरी यक्ष्मी परस्परं दूषयति क्षारैः।
तिथिवारे केशांश्च खुरांश्च प्रघ्नन्ति दीर्घान्॥ ९॥
अश्वस्याङ्गे प्रलिपेद्धरिद्रया वरिष्ठया मञ्जल्या च।
सुपवित्रान् द्रोपद्भैर्विभूषयेदलङ्कारैः॥ १०॥

इति श्रीनकुलकृतेऽश्वचिकित्सितेऽश्वशालाविधि-
रष्टादशोऽध्यायः॥

समाप्तश्चायं ग्रन्थः।

शुभम्।

| *Sanskrit.* | *Vernacular.* | Latin (or English). |
| --- | --- | --- |
| अनन्ता<br>Anantá | Anantamūl, B. H. | Hemidesmus Indicus, *syn.* Asclepias Pseudosarsa. |
| अनल<br>Anala | Chitá, B. H. | See Chitraka. |
| अनुभूति<br>Anubhúti | Teuḍí, B. | See Trivriṭ. |
| अपराजिता<br>Aparájitá | Aparájitá, B.<br>Vishṇukránti, H. | Clitoria ternatea. |
| अपामार्ग<br>Apámárga | Ápáng B.<br>Laṭjirá, H. | Achyranthes aspera. |
| अभया<br>Abhayá | Harítakí, B. | See Haritakí. |
| अभीरु<br>Abhíru | | See Satávari. |
| अमृता<br>Amṛita | | See Guḍūchí. |
| अमोघा<br>Amoghá | | See Haritakí. |
| अम्बष्ठा<br>Ambashṭhá | Ákanádí, B. | Stephania hernandifolia, *syn.* Cissampelos hexandra. |
| अराला (ल)<br>Arálá (la) | Dhuná, B. H. | Resin of Shorea Robusta. |
| अरिष्टक<br>Arishṭaka | Riṭhá, B. | Soap berry plant, Sapindus trifoliatus. |
| अरिष्टा<br>Arishṭá | | See Kaṭuká. |
| अरुष्कर<br>Arushkara | Belá, B.<br>Bhelwá, H. | The marking nut plant, Semicarpus anacardium. |

| *Sanskrit.* | *Vernacular.* | Latin (or English). |
|---|---|---|
| अर्क<br>Arka | Ákand, B.<br>Mádár, H. | Calotropis gigantea, *syn.* Asclepias gigantea. |
| अर्कपुष्पा<br>Arkapushpá | | See Payasyá. |
| अर्जक<br>Arjaka | | See Tulasí. |
| अर्जुन<br>Arjuna | Arjun, B.<br>Kahú, H. | Pentaptera arguna or Terminalia arjuna. |
| अलम्बुषा<br>Alambushá | Mundírí, B.<br>Lajjáluká, H. | A sort of sensitive plant. |
| अव्यथा<br>Avyathá | | See Harítakí. |
| अशोक<br>Aśoka | Aśok, B. | Saraca Indica, *syn.* Jonesia Asoka. |
| अश्मभेदक<br>Aśmabhedaka | Pátarkuchá, B. | See Páshánabheda. |
| अश्वत्थ<br>Aśvattha | Aśothgách, B.<br>Pípar, H. | The holy fig tree, Ficus religiosa, *syn.* Urostigma religiosum. |
| अश्वमार<br>Aśvamára | | See Karavíra. |
| अष्टवर्ग<br>Ashṭavarga | | A class of eight principal medicaments; *viz.* Ṛishabhaka, Jívaka, Medá, Mahámedá, Ṛiddhi, Vṛiddhi, Kákolí, Kshírakolí. |
| अहिफेन<br>Ahiphena | Áphim, B. H. | Opium, Papaver somniferum. |
| आटरूष<br>Áṭarúsha | Básaka, B.<br>Arúsa, H. | Justicia adhatoda, *syn.* Adhatoda vasica. |

